# सप्तदशोऽध्यायः।

**श्वोऽभ्यवहरणादि प्रायश्चित्त्यन्तं कृत्वा विष्णुक्रमवात्सप्रसमासः ॥ १ ॥**

दीक्षाणामुत्तमेऽहनि वेद्याग्निमानमुक्तम्। अतः श्वःशब्देन क्रयणीयमहरभिधीयते। तत्र भस्माभ्यवहरणादि प्रायश्चित्त्यन्तं कृत्वा विष्णुक्रमवात्सप्रसमासः कर्त्तव्यः। अप्सूख्यभस्मावपनं क्रयणीयादावुक्तमपि सदवध्यर्थमुच्यते। विष्णुक्रमणं हि कृतावधिकम्—"उदिते समिधमाधाय रुक्मप्रतिमोचनादि प्राग्वात्सप्राद्विष्णुक्रमाः" ( का० श्रौ० १६-६-५, ६ ) इति। ततः प्राग्भस्माभ्यवहरणं यथा स्यादिति। तथा च श्रुतिः-"तदहः प्रातरुदित आदित्ये भस्मैव प्रथममुद्वपति भस्मोद्धृत्य वाचं विसृजते वाचं विसृज्य समिधमादधाति समिधमाधाय भस्मा(१)पोऽभ्यवहरति यथैव तस्याभ्यवहरणं तथाऽपादाय भस्मनः प्रत्येत्योखायामोप्योपतिष्ठतेऽथ प्रायश्चित्तीकरोति" ( श० ब्रा० ६.७.४.१४. ) इति। ततो विष्णुक्रमवात्सप्रसमासः ॥ १ ॥

**वात्सप्रं कृत्वोपस्थेयं चेत् ॥ २ ॥**

यदि पुनः परिपाट्या वात्सप्रोपस्थानं तस्मिन्नहन्यापतति तत उपस्थानं कृत्वा विष्णुक्रमवात्सप्रसमासः कार्यः। एवमपि हि श्रूयते-"यदि वात्सप्रीयं वात्सप्रेणोपस्थाय विष्णुक्रमान्क्रान्त्वा वात्सप्रमन्तःकुर्यात्" ( श० ब्रा० ६.७.४.१५. ) इति ॥ २ ॥

**पलाशशाखया गार्हपत्यं व्युदूहत्यपेत वीतेति पच्छः प्रतिदिशं पुरस्तात्प्रथमम् ॥ ३ ॥**

पलाशशाखया गार्हपत्यस्थानं व्युदूहति "अपेत वीत" (२)इत्यस्य मन्त्रस्य पादेन पादेन प्रतिदिशम् ॥ ३ ॥

---

( १ ) ततश्च उदिते भस्मोद्वापः। वाग्विसर्गप्रैषः। व्रतकरणप्रैषः। व्रतकरणं त्रिस्तनम्। वाग्विसर्गः समिदाधानम्। भस्मापोऽभ्यवहरणं प्रायश्चित्त्यन्तम्। ततो विष्णुक्रमवात्सप्रसमासः।

( २ ) "अपेत व्वीत व्वि च सर्प्पतातः" इति पुरस्तात्। "येऽत्र स्थ पुराणा ये च नूतनाः" इति दक्षिणतः।

"अदाद्यमोव्वसान म्पृथिव्या" इति पश्चात्। "अक्रन्निम म्पितरो लोकमस्मै" ( वा० सं० १२-४५ ) इत्युत्तरत।

उदीचीꣳ शाखामुदस्योखां निवपति संज्ञानमिति ॥ ४ ॥

शाखानिरसनं प्रतिपत्तिः । तेन द्वादशाहे न तावन्निर(१)सनम् । उखां निवपति "संज्ञानम्"(२) इत्यनेन मन्त्रेण ॥ ४ ॥

मण्डलं छादयति ॥ ५ ॥

ततस्तेनैव मण्डलं छादयति ॥ ५ ॥

सिकताश्चाग्नेर्भस्मेत्यूषवत् ॥ ६ ॥

ततो मण्डलं छादयति ॥ ६ ॥

परिश्रिद्भिः परिश्रयति पूर्ववदेकविꣳशत्या चित(३)स्थेति॥७॥

पूर्ववदिति "ऊर्ध्वाः शर्कराः खाते" (का० श्रौ० १६-८-२६) ॥ ७ ॥

मध्येऽर्धबृहतीश्चतस्रो दक्षिणोत्तराः प्राचीरुपदधाति दक्षिणत उदङ्न्यꣳ सो अग्निरिति प्रत्यृचम् ॥८॥

परिमण्डलमध्येऽर्धबृहतीरिष्टकाश्चतस्रो दक्षिणोत्तररीत्या प्राग्लक्षणा दक्षिणतो व्यवस्थित उपदधाति "अयꣳसो अग्निः"(४) इति प्रत्यृचम् ॥ ८ ॥

सकृन्नित्ये ॥ ९ ॥

ननु चैकदेशानां सकृन्नित्यत्वं परिभाषितमाचार्येण 'सकृन्नित्ये' इति न वक्तव्यम् ?

अत्रोच्यते, तच्च अलोकम्पृणाविषयम् । एतास्तु लोकंपृणाः । अ-

---

( १ ) इतरेषां गार्हपत्यानामुपवसथे विधानात् ।

( २ ) सँज्ञानमसि कामधरण म्मयि ते कामधरणम्भूयात् ।
अग्नेर्भस्मास्यग्नेः पुरीषमसि ( वा० सं० १२-४६ ) ॥

( ३ ) चितस्थ परिचितऽऊर्ध्वचितः श्रयद्ध्वम् (वा० सं० १२-४६)

( ४ ) अयꣳसो ऽअग्निर्यस्मिन्त्सोममिन्द्रः सुत न्दधे जठरे व्वावशानः ।
सहस्रिय व्वाजमत्य न्न सप्तिꣳससवान्त्सन्त्स्तूयसे जातवेदः ॥ ( ४७ )
अग्ने यत्ते दिवि व्वर्च्चः पृथिव्यां य्यदोषधीष्वप्स्वा यजत्र ।
येनान्तरिक्षमुर्व्वाततन्थ त्त्वेषः स भानुरर्णवो नृचक्षाः ॥ (४८)
अग्ने दिवोऽअर्णमच्छाजिगास्यच्छा देवाँ२।ऽऊचिषे धिष्ण्या ये ।
या रोचने परस्तात्सूर्य्यस्य याश्चावस्तादुपतिष्ठन्तऽआपः ॥ (४९)
पुरीष्यासोऽअग्नयः प्रावणेभिः सजोषसः ।
जुषन्तां य्यज्ञमद्द्रुहोनमीवाऽइषो महीः ॥ ( वा० सं० १२-५० )

तोऽग्राप्तिः। तेन नित्ये एवात्र दुर्लभे कुतः सकृत्त्वमिति। अतोऽन्ये वचनाश्रित्ये विधीयेते सकृत्त्वं च। लोकम्पृणा एता इति कुत(१) एतदिति चेत्? "अथ या लोकम्पृणा मुहूर्तलोकास्ता मुहूर्तानामेव प्राप्तिः क्रियते" इति हि प्रकृत्याह—"तासामेकविंशतिं गार्हपत्य उपदधाति द्वाभ्यां नाशीतिं धिष्ण्येष्वाहवनीय इतराः" इति लोकम्पृणासंज्ञानात्।

ननु च एवमपि सति अत्रैवाष्टानामिष्टकानामुपधाने कृते पुनरुच्यते "अथ लोकम्पृणामुपदधाति" (श०ब्रा० ७.१.१.३३) इति। तेन नैता लोकम्पृणा इति गम्यते?

अत्रोच्यते—अष्टानामिष्टकानां मन्त्रान्तरविधानाल्लोकम्पृणामन्त्रो न भवति। त्रयोदशानान्तु मन्त्रान्तराविधानाल्लोकम्पृणामन्त्रप्रवृत्त्यर्थं पठ्यते "लोकम्पृणा लोकमुपदधाति" इति। तथाऽऽचार्य आह—"गार्हपत्यलोकम्पृणाः(२) प्रथमायां धिष्णीया उत्तमायाम्" (का०श्रौ०१७-७-२७. २८) इति॥ ९॥

**पश्चात्संहिते पादमात्र्यौ तिरश्च्यौ पुरस्ताच्च ॥ १० ॥**

उपदधाति संहितशब्दश्च संलग्नवचनः॥ १०॥

**अपरेण परिक्रम्य परिक्रम्य चयनामिडामग्न इति पश्चिमे प्रतिमन्त्रमुत्तरतः ॥ ११ ॥**

अपरेण परिक्रम्योत्तरतो व्यवस्थित "इडामग्ने" (३)इति प्रतिमन्त्रं पश्चिमे उपधाति॥ ११॥

**चिदसीति पूर्वे दक्षिणतः प्रतिमन्त्रम् ॥ १२ ॥**

तेनैव मार्गेण परीत्य दक्षिणतो व्यवस्थितः "चिदसि"(४) इति प्रतिमन्त्रं पूर्वे उपदधाति। अपरयोर्दक्षिणा प्रथमा, पूर्वयोरुत्तरा। तिर्यग्लक्षणाश्चैता भवन्ति, "तिरश्च्यौ" इत्युक्तत्वात्॥ १२॥

---

(१) 'कथम्' इति पाठः।

(२) ननु गार्हपत्येष्टकाः प्रथमायामित्येव वाच्यं, न लोकम्पृणेति।

(३) इडामग्ने पुरुदꣳसꣳ सनिं गोः शश्वत्तमꣳहवमानाय साध।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे॥ (५१)
अय न्ते योनिर्ऋत्वियो यतो जातो ऽअरोचथाः।
तञ्जानन्नग्न ऽआरोहाथानो वर्द्धया रयिम्॥ (वा०सं०१२-५२)

(४) "चिदसि तया देवतयाङ्गिरस्वद्ध्रुवा सीद" इति उत्तराम्।
"परिचिदसि तया देवतयाङ्गिरस्वद्ध्रुवा सीद" इति दक्षिणाम्॥
(वा० स०१२-५३)

नित्ये प्रतीष्टकं तिरश्चीषु ॥ १३ ॥

वचनात् ॥ १३ ॥

स्रक्तिषु पादमात्रीः ॥ १४ ॥

उपधीयन्ते ॥ १४ ॥

तत्र च—

पूर्वदक्षिणस्यामर्धपद्ये ॥ १५ ॥

उपधेये ॥ १५ ॥

शेषेऽष्टौ वक्राः ॥ १६ ॥

उपधीयन्ते क्षेत्रपूरणाय ॥ १६ ॥

तिसृषु लोकम्पृणासु मन्त्रो दशसु च ॥ १७ ॥

द्वयोर्वा दशस्वेकस्यां च ॥ १८ ॥

लोकंम्पृणानां (१)मन्त्रवचनम् ॥ १८ ॥

चात्वालदेशात्पुरीषं निवपतीन्द्रं विश्वा (२)इति ॥ १९ ॥

अनेन मन्त्रेण ॥ १९ ॥

समम्बिलां कृत्वोख्यं निवपति समितमिति ॥ २० ॥

गार्हपत्यचितिं पुरीषेण समम्बिलां कृत्वोख्यमग्निं निवपति "समितम्" (३)इत्यनेन मन्त्रेण ॥ २० ॥

---

(१) लोकं पृण छिद्रं पृणाथो सीद ध्रुवा त्वम् ।
इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन् ॥ (वा० सं० १२-५४)

(२) इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः ।
रथीतमꣳ रथीनां वाजानाꣳ सत्पतिं पतिम् ॥ (वा० सं० १२-५६)

(३) समितꣳ सङ्कल्पेथाꣳ सम्प्रियौ रोचिष्णू सुमनस्यमानौ । इषमूर्जमभि संवसानौ ॥ (५७)
सं वां मनाꣳसि सं व्रता समु चित्तान्याकरम् ।
अग्ने पुरीष्याधिपा भव त्वं न इषमूर्जं यजमानाय धेहि ॥(५८)
अग्ने त्वं पुरीष्यो रयिमान्पुष्टिमाँ २ ॥ असि ।
शिवाः कृत्वा दिशः सर्वाः स्वं योनिमिहासदः ॥ (५९)
भवतं नः समनसौ सचेतसावरेपसौ ।
मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः ॥
(वा० सं० १२-६०)

रिक्तां नावेक्षेतोखाम् ॥ २१ ॥

तामेव ॥ २१ ॥

सिकताभिः समं बिलां कृत्वा मातेव (१)पुत्रमिति शिक्याद्विमुच्याग्निवन्निधायासिञ्चति पयो मध्ये तूष्णीम् ॥२२॥

अग्निवदित्यरत्निमात्रे गार्हपत्यस्योत्तरतः । तूष्णीमिति लौकिकवागुच्चारणप्रतिषेधः ॥ २२ ॥

त्रिचितमेके ॥ २३ ॥

गार्हपत्यं कुर्वन्ति । तत्र च त्रिभागोत्लेखा इष्टका इति सम्प्रदायः । अस्मिंश्च पक्षे प्रथमचितिलोकम्पृणानां पूरणं मृग्यम् ॥ २३ ॥

नैर्ऋतीः कृष्णास्तुषपक्वास्तिस्रोऽलक्षणाः पादमात्रीर्हविष्यशन्नहोमवद्देशे दक्षिणोत्तराः कृत्वा दक्षिणामुखोऽनुपस्पृशन्--

इति सप्तदशाध्याये प्रथमा कण्डिका ।

---

असुन्व(२)न्तमिति प्रत्यृचं पराचीः ॥ १ ॥

उपदधाति, "ताः पराचीर्लोकभाजः कृत्वोपदधाति"( श० ब्रा० ७.२.१.८. ) इति श्रुतेः ॥ १ ॥

अभ्यात्ममेके ॥ २ ॥

उपदधाति ॥ २ ॥

---

( १ ) मातेव पुत्र पृथिवी पुरीष्यमग्निᳬं स्वे योनावभारुखा ।
तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्म्मा विमुञ्चतु ॥
( वा० सं० १२-६१ )

( २ ) असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य ।
अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु ॥ (६२)
नमः सु ते निर्ऋते तिग्मतेजोऽयस्मयं विचृता बन्धमेतम् ।
यमेन त्वं यम्या संविदानोत्तमे नाके अधिरोहयैनम् ॥ (६३)
यस्यास्ते घोरऽआसञ्जुहोम्येषां बन्धानामवसर्जनाय ।
यां त्वा जनो भूमिरिति प्रमन्दते निर्ऋतिं त्वाहं परिवेद विश्वतः ॥
( वा० सं० १२-६४ )

नित्याभावः ॥ ३ ॥

नित्यशब्देन सादनसूददोहसौ उच्येते ॥ ३ ॥

शिक्यरुक्मपाशेण्ड्वासन्दीः परेणास्यति यं त इति ॥४॥

नैर्ऋतीनां "यं त" (१)इत्यनेन मन्त्रेण ॥ ४ ॥

उदपात्रं निषिच्यान्तरात्मेष्टकमुत्तिष्ठन्ति

नमो भूत्या इति ॥ ५ ॥

आत्मनश्चेष्टकानां चान्तराले उदपात्रं निषिच्य उत्तिष्ठन्ति(२) "नमो भूत्यै" (३)इत्यनेन मन्त्रेण ॥ ५ ॥

अनपेक्षमेत्य शालाद्वार्योपस्थानं निवेशन(४) इति ॥ ६ ॥

अनेन मन्त्रेण । अनपेक्षणं च नैर्ऋतीविषयम् ॥ ६ ॥

प्रायणीयहविष्कृदन्ते महावेदेस्स्फ्याद्या-

संमर्शनात्करोति ॥ ७ ॥

पूर्वेद्युर्महावेदेरुत्करकरणान्ताः पदार्था गताः। इदानीं स्फ्याद्याः संमर्शनान्ताः क्रियन्ते ॥ ७ ॥

प्रायणीयान्ते सीरं युनक्त्यौदुम्बरम् ॥ ८ ॥

तत्र च—

मौञ्जं त्रिवृद्रज्ज्वथम् ॥ ९ ॥

भवति ॥ ९ ॥

षड्द्वादश चतुर्विंशतिं वा युनक्ति ॥ १० ॥

बलीवर्दान् ॥ १० ॥

पूर्वेणोत्तरांसंदक्षिणामग्निश्रोणिमपरेण ति-

ष्ठन्युज्यमानमभिमन्त्रयते सीरा युञ्जन्तीति ॥ ११ ॥

---

(१) यन्ते देवी निर्ऋतिराबबन्ध पाशं ग्रीवास्वविचृत्यम् ।
तन्ते विष्याम्यायुषो न मध्यादथैतं पितुमद्धि प्रसूतः ॥
(वा० सं० १२-६५)

(२) बहुवचनात् ब्रह्मयजमानाध्वर्यवः । "प्रत्येत्याग्निमुपतिष्ठते" (श०ब्रा० ७.२.१.१८) इति श्रुतेरेते एव।

(३) नमोभूत्यै येदं चकार। (वा० सं० (१२-६५) इतिपादेन।

(४) निवेशनः सङ्गमनो वसूनां विश्वा रूपाभिचष्टे शचीभिः ।
देवइव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम्॥(वा०सं०१२-६६

अग्न्यंसमुत्तरं पूर्वेण सीरं युज्यमानं दक्षिणाग्निश्रोणिमपरेण तिष्ठन् प्रतिप्रस्थाताऽभिमन्त्रयते "सीरा युञ्जन्ति" (१)इत्यनेन मन्त्रेण । योजनं तु प्रधानत्वादध्वर्युः ॥ ११ ॥

आत्मनि कृषत्यनुपरिश्रिच्छुनः सुफाला

इति प्रत्यृचम् ॥ १२ ॥

अग्न्यात्मनि कृषति परिश्रित्संलग्नं "शुनः सुफाला" (२)इति ॥१२॥

दक्षिणतः प्राचीम् ॥ १३ ॥

प्रथमां सीताम् ॥ १३ ॥

प्रदक्षिणमितराः ॥ १४ ॥

प्रत्यृचमुत्तराभिर्ऋग्भिः ॥ १४ ॥

तूष्णीं तिस्रस्तिस्रः प्रदक्षिणम् ॥ १५ ॥

मध्येसीताः कृषति ॥ १५ ॥

तत्र च प्रथमम्--

तिर्यगनूके ॥ १६ ॥

ततः—

अक्ष्णया श्रोण्यंसयोः ॥ १७ ॥

अनूके ॥ १८ ॥

पुनः प्रागनूके ॥ १८ ॥

ततः—

श्रोण्यंसयोः ॥ १९ ॥

दीर्घप्रयुक्तेषु वा पुरुषाः कृषन्ति ॥ २० ॥

---

(१) सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् ।
धीरा देवेषु सुम्नया ॥ (वा० सं० १२-६७)

(२) शुनः सुफाला विकृषन्तु भूमिः शुनं कीनाशा ऽअभियन्तु वाहैः । शुनासीरा हविषा तोशमाना सुपिप्पलाऽओषधीः कर्त्तनास्मे ॥(६९)
घृतेन सीता मधुना समज्यतां विश्वैर्देवैरनुमतामरुद्भिः ।
ऊर्जस्वती पयसा पिन्वमानास्मान्त्सीते पयसाभ्याववृत्स्व ॥ (७०)
लाङ्गलं पवीरवत्सुशेवं सोमपित्सरु ।
तदुद्वपति गामविं प्रफर्व्यं च पीवरीं प्रस्थावद्रथवाहणम् ॥ (७१)
कामं कामदुघे धुक्ष्व मित्राय वरुणाय च ।
इन्द्रायाश्विभ्यां पूष्णे प्रजाभ्यऽओषधीभ्यः ॥
(वा० सं० १२-७२)

दीर्घप्रयुक्तेषु वा कर्षणं भवति । तत्र च पुरुषाः कृषन्ति । तिर्यक्प्रयुक्तेष्वध्वर्युरेव ॥ २० ॥

**अनडुहो विमुच्य विमुच्यध्व(१)मिति ॥ २१ ॥**

अनेन मन्त्रेण ॥ २१ ॥

**पशुवदुत्सृज्य दक्षिणाकालेऽध्वर्यवे ददाति ॥ २२ ॥**

पशुवदुत्सृज्य उत्तरपूर्वां दिशं प्रति दक्षिणाकालेऽध्वर्यवे ददातीति । अत्र च ल्यबादेश आचार्येण पदार्थनिर्देशार्थः प्रयुक्तो न समानकर्तृकार्थः । तेनाऽध्वर्योरेव विमोचनोत्सर्गः । दानं तु यजमानस्य । न हि श्रौतो ल्यबादेशः ॥ २२ ॥

**सीरमुत्करे कृत्वा**

इति सप्तदशाध्याये द्वितीया कण्डिका ।

**कुशस्तम्बमुपदधाति मध्ये तूष्णीम् ॥ १ ॥**

अग्निक्षेत्रस्य । 'तूष्णीम्' इति वचनान्नित्याभावः ॥ १ ॥

**पञ्चगृहीतेनोद्गृह्णन्नभिजुहोति सजूरब्द इति ॥ २ ॥**

कुशस्तम्बे पञ्चगृहीतेनाज्येनोद्गृह्णन्नभिजुहोति "सजूरब्द"(२)इत्यनेन मन्त्रेण ॥ २ ॥

**चतसृषु चतसृषु त्रींस्त्रीनुदचमसान्निनयति यथाकृष्टमौदुम्बरेण चतुःस्रक्तिना ॥ ३ ॥**

चतसृषु सीतासु यदा त्रयोऽभिनिनीयन्ते तदा स त्रिभागः सीतैकैकस्य भवति। एवं हि श्रूयते–"द्वादशोदचमसान्कृष्टे निनयति"(श० ब्रा० ७.२.४.४.) इति । षोडश च कृष्टास्सीताः । येन क्रमेण कृष्टाः सीतास्तेनैवोदचमसनिनयनं, 'यथा कृष्टम्' इति सूत्रितत्वात् ॥ ३ ॥

**त्रीन्कृष्टाकृष्टयोः ॥ ४ ॥**

निनयत्युदचमसान्, "त्रीन्कृष्टे चाकृष्टे च निनयति" (श० ब्रा० ७.२.४.६.) इति श्रुतेः । सर्वमेवाग्निक्षेत्रं कृष्टं चाकृष्टं च ॥ ४ ॥

---

(१) विमुच्यध्वमघ्न्या देवयाना अगन्म तमसस्पारमस्य । ज्योतिरापाम ॥ (वा० सं० १२-७३)

(२) सजूरब्दो अयवोभिः सजूरुषा अरुणीभिः । सजोषसावश्विना दंसोभिः सजूः सूर एतशेन सजूर्वैश्वानर इडया घृतेन स्वाहा ॥ (वा० सं० १२-७४)

तत्र निनयने मात्र आह—

कृष्टमात्रे वा ॥ ५ ॥

निनयति । कृष्टपरिच्छिन्नं यदकृष्टं तत्कृष्टमात्रम् । तदेव कृष्टं वाकृष्टं च । यावत्कृष्टपरिच्छिन्नं तावत्कृष्टम्, अकृष्टत्वाच्चाकृष्टमिति । कृष्टे पुनर्गृह्यमाणे कृतत्वाद्दोषप्रसङ्गः ॥ ५ ॥

तस्मिन्सर्वौषधमावपत्येकवर्जमभोजनं तस्योच्छ्वासात् ॥ ६ ॥

तस्मिश्चमसे सर्वौषधमावपति एकं वर्जयित्वा । तस्य चाभोजनं यावज्जीवम् ॥ ६ ॥

या ओषधीरिति तृचैर्वपत्युदपात्रवत् ॥ ७ ॥

"या ओषधीः" (१)इति तृचैः उदपात्रवदिति तिसृभिस्तिसृभि-

---

(१) या ऽओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा ।
मनै नु बभ्रूणामहꣳ शतं धामानि सप्त च ॥ (७५)
शतं वो ऽअम्ब धामानि सहस्रमुत वो रुहः ।
अधा शतक्रत्वो यूयमिमं मे ऽअगदं कृत ॥ (७६)
ओषधीः प्रतिमोदध्वं पुष्पवतीः प्रसूवरीः ।
अश्वा ऽइव सजित्वरीर्वीरुधः पारयिष्ण्वः ॥ (७७)
ओषधीरिति मातरस्तद्वो देवीरुप ब्रुवे ।
सनेयमश्वं गां वास ऽआत्मानं तव पूरुष ॥ (७८)
अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता ।
गोभाज ऽइत्किलासथ यत्सनवथ पूरुषम् ॥ (७९)
यत्रौषधीः समग्मत राजानः समिताविव ।
विप्रः स ऽउच्यते भिषग्रक्षोहामीवचातनः ॥ (८०)
अश्वावतीꣳ सोमावतीमूर्जयन्तीमुदोजसम् ।
आवित्सि सर्वा ऽओषधीरस्मा ऽअरिष्टतातये ॥ (८१)
उच्छुष्मा ऽओषधीनां गावो गोष्ठादिवेरते ।
धनꣳ सनिष्यन्तीनामात्मानं तव पूरुष ॥ (८२)
इष्कृतिर्नाम वो माताथो यूयꣳ स्थ निष्कृतीः ।
सीराः पतत्रिणी स्थन यदामयति निष्कृथ ॥ (८३)
अति विश्वाः परिष्ठा स्तेन ऽइव व्रजमक्रमुः ।
ओषधीः प्राचुच्यवुर्यत्किञ्च तन्वो रपः ॥ (८४)

र्ऋग्भिश्चतसृषु चतसृषु सीतासु वपति । ततश्च अत्रापि प्रत्यृचं सत्रिभागा सत्रिभागा सीतेति । कृष्टमात्राणि तु त्रिभागन्यूनानि त्रीणि त्रीणि । उदकासेकेऽप्येवमेव चमसानाम् ॥ ७ ॥

**सोमनिवपनाद्यातिथ्यहविष्कृतः कृत्वाऽऽहवनीयपरिश्रितोऽभिमन्त्रयते चितस्थेति ॥ ८ ॥**

प्रायणीयाया वेद्योक्तविमोकान्ते सीरयोजनादि कृतम् । ध्रौवस्य ह्याज्यस्य विनियोगविधानात्तत उत्तरासु प्रतिपत्तिष्वसमाप्तास्वेव सोमनिवपनं कृतम् । इहापि तद्वदेव सोमनिवपनाद्यातिथ्यहविष्कृतः कृत्वा आहवनीयपरिश्रितोऽभिमन्त्रयते "चितस्थ" (१) इत्यनेन मन्त्रेण ॥ ८ ॥

**सप्तसप्त वा ॥ ९ ॥**

अविशेषस्य विशेषव्यवस्थापनन्यायात्सप्तसप्तैवेत्युक्तम् ॥ ९ ॥

**लोगेष्टकाः स्फ्येनाहृत्य बहिर्वेदेरनूकान्तेषूपदधाति तिष्ठन्मा मा हिꣳसीदिति (२) प्रत्यृचं प्रतिदिशं पुरस्तात्प्रथमम् ॥ १० ॥**

आहृत्योपदधाति ॥ १० ॥

---

यदिमा व्वाजयन्नहमोषधीर्हस्तऽआदधे ।
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥ ( ८५ )
यस्यौषधीः प्रसर्प्पथाङ्गमङ्गं परुष्परुः ।
ततो यक्ष्मं व्विबाधध्वऽउग्रो मध्यमशीरिव ॥ ( ८६ )
साकं यक्ष्म प्रपत चाषेण किकिदीविना ।
साकं व्वातस्य ध्राज्या साकं नश्य निहाकया ॥ ( ८७ )
अन्न्या वोऽअन्न्यामवत्वन्न्यान्न्यस्याऽउपावत ।
ताः सर्व्वाः संव्विदानाऽइदं मे प्रावता व्वचः ॥ ( ८८ )
याः फलिनीर्य्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः ।
बृहस्पतिप्प्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥ (वा०स०१२-८९)
( १ ) चित स्थ परिचितऽऊर्द्ध्वचितः श्रयध्वम् ।
( वा० सं० १२-४६ )
(२) मा मा हिꣳसीज्जनिता यः पृथिव्व्या यो वा दिवꣳसत्यधर्म्मा व्व्यानट् ।
यश्चापश्चन्द्राः प्रथमो जजान कस्मै देवाय हविषा व्विधेम ॥ (१०२)
अब्भ्यावर्त्तस्व पृथिवि यज्ञेन पयसा सह ।
व्वपां ते ऽअग्निरिषितोऽअरोहत् ॥ ( १०३ )

**उत्तरापरस्याः पश्चात् ॥ ११ ॥**

उत्तरा परस्याः दिश आहृत्य पश्चादुपदधाति "स न सम्प्रतिपश्चा-दाहरेन्नयन्नपथाद्रसमाहराणि" ( श०ब्रा० ७.३.१.२२, ) इति निषिध्य "इत इवाहरति" ( श०ब्रा० ७.३.१.२२; ) इत्युक्तत्वात् ॥ ११ ॥

**उत्तरस्याः सिकताः प्रमार्ष्टि जहामि (१)संविमिति ॥१२॥**

अनेन मन्त्रेण । तत उपदधाति ॥ १२ ॥

**उत्तरवेदिं निवपति चत्वारिꣳशत्पदां युगमात्रीं वा सर्वतः कुशस्तम्बे ॥ १३ ॥**

छादनान्तां करोति ॥ १३ ॥

**अग्ने तवेति सिकतान्युप्य च्छादयत्यात्मानम् ॥१४॥**

"अग्ने तव" (२)इत्यनेन मन्त्रेण सिकतान्युप्यच्छादयत्यात्मानम् ॥ १४ ॥

---

अग्ग्ने यत्ते शुक्क्रं य्यच्चन्द्रं य्यत्पूतं य्यच्च यज्ञियम् ।
तद्देवेब्भ्यो भरामसि ॥ ( १०४ )
इषमूर्ज्जमहमितऽआदमृतस्य योनिं म्महिषस्य धाराम् ।
आ मा गोषु व्विशत्त्वा तनूषु ॥ ( वा० सं० १२-१०५ )
इति पूर्वादिक्रमेण प्रत्यृचमुपदधाति ।

( १ ) जहामि सेदिमनिराममीवाम् ॥ ( वा० सं० १२-१०५ )

( २ ) अग्ग्ने तव श्श्रवो व्वयो महि भ्भ्राजन्तेऽअर्च्चयो व्विभावसो ।
बृहद्भानो शवसा व्वाजमुक्क्थ्यं न्दधासि दाशुषे कवे ॥ ( १०६ )
पावकवर्च्चाः शुक्रवर्च्चाऽअनूनवर्च्चाऽउदियर्षि भानुना ।
पुत्त्रो मातरा व्विचरन्नुपावसि पृणक्षि रोदसीऽउभे ॥ (१०७)
ऊर्ज्जोनपाज्जातवेदः सुशस्तिभिर्म्मन्दस्व धीतिभिर्हितः ।
त्वेऽइषः सन्दधुर्भूरिवर्प्पसश्चित्रोतयो व्वामजाताः (१०८)
इरज्ज्यन्नग्ग्ने प्प्रथयस्व जन्तुभिरस्मे रायोऽअमर्त्त्य ।
स दर्शतस्य व्वपुषो व्विराजसि पृणक्षि सानसिं क्क्रतुम् ॥ (१०९)
इष्कर्त्तारमद्ध्वरस्य प्प्रचेतसं क्षयन्तꣳराधसोमहः ।
रातिं व्वामस्य सुभगा म्महीमिषं न्दधासि सानसिꣳरयिम्॥ (११०)
ऋतावानं म्महिषं व्विश्श्वदर्शतमग्ग्निꣳसुम्म्नाय दधिरे पुरोजनाः ।
श्रुत्कर्णꣳसप्प्रथस्तमं न्त्वा गिरा दैव्व्यम्मानुषा युगा ॥सं०(१२०-१११)

आप्याय(१)स्वेति सिकतालम्भनमृग्भ्याम् ॥ १५ ॥

न्युप्तानामेव ॥ १५ ॥

आतिथ्यशेषाद्योपसदः कृत्वा रोहिते चर्मण्यानडुहेऽन्तः-पात्य पुरस्तादिष्टकाः करोति प्रथमाचितेः ॥ १६ ॥

वैकृतावसरे प्राकृतानुवृत्त्यर्थम् 'आतिथ्यशेषाद्योपसदः कृत्वा' इत्युक्तम् । पुनराग्निकमेवोच्यते–'अन्तःपात्य पुरस्तादिष्टकाः करोति प्रथमाचितेः' । प्रथमचितिसम्बन्धिन्यः ॥ १६ ॥

इतरासां च चितीनां स्वयमातृण्णाः ॥ १७ ॥

इतरासां च स्वयमातृण्णाः ॥ १७ ॥

मथ्या च ॥ १८ ॥

करोति ॥ १८ ॥

आज्ये न्यज्य कुशाग्राणि तूष्णीं प्रोक्षति श्वेतेऽश्वे पुरस्तात्तिष्ठति श्वेताभावेऽश्वेतेऽश्वाभावेऽनडुहि ॥१९॥

कुशाग्राण्याज्ये न्यज्येष्टकाः प्रोक्षति ॥ १९ ॥

अग्निभ्यः प्रह्रियमाणेभ्योऽनुवाचयति ॥ २० ॥

अग्निभ्यः प्रहियमाणेभ्योऽनुब्रूहीत्येवम् ॥ २० ॥

त्रिरुक्तायामश्वपूर्वां चितिꣳ हृत्वा पुच्छाद्दक्षिणां निदधाति ॥ २१ ॥

त्रिरुक्तायां प्रथमायामृचि अश्वपूर्वां चितिं हृत्वा अग्निपुच्छाद् दक्षिणां निदधाति ॥ २१ ॥

तीर्थेनाश्वमारोहयत्युत्तरपक्षमपरेण ॥ २२ ॥

स्वशब्दाभिहितत्वात्प्रदेशस्य तीर्थशब्दोपादानमन्यत्राप्यनेनैवारोहणावरोहणं यथा स्यादिति ॥ २२ ॥

पुरस्तात्पश्चाद्वैके ॥ २३ ॥

अश्वमारोहयन्ति । स चायं विकल्पोऽश्वविषय एव ॥ २३ ॥

---

(१) आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य सङ्गथे ॥ (११२)

स न्ते पयाꣳसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः । आप्यायमानोऽअमृताय सोम दिवि श्रवाꣳस्युत्तमानि धिष्व ॥

(वा० सं० १२-११३)

अनुयजुःकृष्टं परिणयत्युत्तरतः प्रथमम् ॥ २४ ॥

अश्वम् ॥ २४ ॥

प्रत्यञ्चमागतं चितिमवघ्राप्य परिणीयोत्सृ-
जति पशुवत् ॥ २५ ॥

प्रत्यञ्चमागतमश्वं चितिमवघ्राप्य परिणीयोत्सृजति पशुवत् उत्त-१ रपूर्वां दिशम् ॥ २५ ॥

उत्तरवेदिप्रोक्षणाद्यासम्भारनिवपनात्कृत्वोत्तरवेदिम-
परेण तिष्ठन्यजमानो मयि(१) गृह्णामीति जपति ॥२६॥

"आरुह्याग्निमौत्तरवेदिकं कर्म कृत्वात्मन्नग्निं गृह्णीत" (श०ब्रा० ७.३.२ १७) इति श्रुतेः। एवं च व्याघारणान्तमेव क्रियते न सम्भारनिवपनमिति। तथा वक्ष्यत्याचार्यः "पैतुदारवाद्यत्रैके" इति। अग्न्यर्थत्वात्सम्भाराणां तत्रैव निवपनमिति। 'यजमानो जपति' इति चोत्तरपदार्थार्थम्। इह प्रत्यगाशीर्योगादेव प्राप्तिः ॥ २६ ॥

सत्यसाम गायति ॥ २७ ॥

इति सप्तदशाध्याये तृतीया कण्डिका।

---

पुष्करपर्णमुपदधाति स्तम्बे पूर्ववत् ॥ १ ॥

प्रकृतत्वात्तदेव। "पूर्ववत्"(२) इति च मन्त्रो लभ्यते विमार्जनं च॥१॥

तस्मिन्रुक्ममधः पिण्डं ब्रह्म(३) जज्ञानमिति ॥ २ ॥

अनेन मन्त्रेणोपदधाति हिरण्मयम्। रुक्मोऽपि च स एव ॥ २ ॥

उत्तानं प्राञ्चꣳ हिरण्यपुरुषं तस्मिन्हिरण्यगर्भ इति ॥ ३ ॥

---

(१) मयि गृह्णाम्यग्रेऽअग्निꣳ रायस्पोषाय सुप्रजास्त्वाय सुवीर्य्याय।

मामु देवताः सचन्ताम् (वा० सं० १३-१)

(२) ततोऽध्वर्युः कुशस्तम्बोपरि कमलिनीपत्रमुपदधाति। 'पूर्ववत्' इति उखासंभरणवत् तेन "अपां पृष्ठम्" (वा० सं० १३-२) इति पादत्रयात्मकमन्त्रेण उपधानं, "दिवो मात्रया" इति पादेन तस्य मार्जनम्।

(३) ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेनऽआवः। स बुध्न्याऽउपमाऽअस्य विष्ठाः सतश्च योनिमसतश्च विवः॥ (वा० सं० १३-३)

तस्मिन्रुक्मे प्राञ्चमुत्तानं हिरण्यपुरुषमुपदधाति "हिरण्यगर्भः" (१)इत्यनेन मन्त्रेण ॥ ३ ॥

**पुरुषे चित्रे साम गायति ॥ ४ ॥**

सप्तमीनिर्देशादालब्धे पुरुषे चित्रालिङ्गमन्त्रे साम गायति ॥ ४ ॥

**पूर्वेणापरीत्योऽतः ॥ ५ ॥**

"तमुपधाय न पुरस्तात्परीयात्" ( श० ब्रा० ७-४-१-२४ ) इति वचनात् ॥ ५ ॥

**उपतिष्ठते यजमानो नमोऽस्त्वि(२)ति ॥ ६ ॥**

पुरुषम् ॥ ६ ॥

**उपविश्य पञ्चगृहीतं जुहोति पुरुषे कृणुष्व (३)पाज इति प्रत्यृचं प्रतिदिशं परिसर्पम् ॥ ७ ॥**

---

( १ ) हिरण्यगर्ब्भः समवर्त्तताग्ग्रे भूतस्य जातः पतिरेकऽआसीत्।
स दाधार पृथिवीं न्द्यामुतेमा ङ्कस्म्मै देवाय हविषा व्विधेम ॥
( वा० सं १३-४ )

( २ ) नमोस्तु सर्प्पेब्भ्यो ये के च पृथिवीमनु ।
येऽअन्तरिक्षे ये दिवि तेब्भ्यः सर्प्पेब्भ्यो नमः ॥ (६)
या ऽइषवो यातुधानानां य्ये वा व्वनस्पतीँ१रनु ।
ये वावटेषु शेरते तेब्भ्यः सर्प्पेब्भ्यो नमः ॥ (७)
ये वामी रोचने दिवो ये वा सूर्य्यस्य रश्मिषु ।
येषामप्प्सु सदस्कृत न्तेब्भ्यः सर्प्पेब्भ्यो नमः ॥ (वा० सँ० १३-८)

( ३ ) कृणुष्ष्व पाजः प्प्रसितिं न्न पृत्थ्वीं य्याहि राजेवामवा २ ॥ ऽइभेन
तृष्ष्वीमनु प्प्रसितिं न्द्रूणानोस्तासि विध्य रक्षसस्तपिष्ठैः॥ (९)
तव भ्भ्रमास ऽआशुया पतन्त्यनुस्पृश धृषताशोशुचानः ।
तपूँष्ष्यग्ग्ने जुह्वा पतङ्गानसन्दितो व्विसृज व्विष्ष्वगुल्ल्काः॥ (१०)
प्रति स्पशो व्विसृज तूर्णितमो भवा पायुर्व्विशो ऽअस्याऽअदब्धः ।
यो नो दूरेऽअघश ँ सो योऽअन्त्यग्ग्ने मा किष्टे व्यथिरादधर्षीत् ॥(११)
उदग्ग्ने तिष्ठ प्प्रत्यातनुष्ष्व न्न्यमित्रा२ ॥ ओषतात्तिग्ग्म हेते ।
यो नो ऽअरातिँ समिधान चक्रे नीचातन्धक्ष्यतसन्न शुष्क्कम् ॥ (१२)
ऊर्द्ध्वो भव प्रतिविद्ध्याध्यस्मदाविष्कृणुष्ष्व दैव्यान्न्यग्ग्ने ।
अव स्थिरा तनुहि यातुजूनाञ्जामिमजामिं प्प्रमृणीहि शत्रून् ॥
( वा० सँ० १३-१३)

उपवेशनग्रहणाच्च यजमानो जुहोति । द्वादशाहे चैकः कर्त्ता । पुरुषे जुहोति प्रत्यृचं सृप्त्वा सृप्त्वा ॥ ७ ॥

प्रत्येत्य दक्षिणतः ॥ ८ ॥

अवस्थितो जुहोति ॥ ८ ॥

पश्चात्प्रथमान्त्ये ॥ ९ ॥

पश्चात् प्रथमान्त्ये होमकर्मणी । पश्चात्प्राङ्मुखः ॥ ९ ॥

पुरुषमवच्छाद्योरसाऽस्पृष्टं बाह्वोः प्रापणान्ते लिखति॥१०॥

अस्पृष्टं पुरुषमवच्छाद्योरसा बाह्वोः प्रापणान्ते लिखति । स चायं याजमानः पदार्थः, प्रमाणत्वात् ॥ १० ॥

तत्र स्रुगुपधानं प्राच्योः ॥ ११ ॥

तत्र परिलेखयोः स्रुचोरुपधानं प्राच्योः प्रागग्रयोः ॥ ११ ॥

कार्ष्मर्यमयीं दक्षिणतः पाणिमात्रपुष्करां बाहुमात्रीं पादमात्रीं वा सामर्थ्यात् घृतपूर्णामग्नेष्ट्वेति ॥१२॥

तत्र परिलेखयोः स्रुचोरुपधानं प्रागग्रयोः कार्ष्मर्यमयीं दक्षिणतः पाणिमात्रपुष्करामिति तन्मात्रं स्रुचः पुष्करमुक्तम् । बाहुमात्रीमिति परिमाणत्वात्स्रुचम् । पादमात्रीं वा । कुत एतत्? आम्नानसामर्थ्यात् । "पादमात्रीः प्रथमायां चोत्तमायां च चित्योरुपदध्यात्" ( श० ब्रा० ८-७-३-१७) इति । यद्येवं पादमात्रीमेव । तां च घृतपूर्णाम् "अग्ने ष्ट्वा" (१)इत्यनेन मन्त्रेणोपदधाति ॥ १२ ॥

एवमौदुम्बरीमुत्तरतो दधिपूर्णामिन्द्रस्य (२)त्वेति ॥ १३ ॥

अनेन मन्त्रेण ॥ १३ ॥

तिरश्च्यावेके ॥ १४ ॥

प्राच्यौ वेति विकल्पः । अर्धपद्ये चैते भवत इति सम्प्रदायः ॥१४॥

स्वयमातृण्णां पुरुषे शर्करां छिद्रां ध्रुवासीति ॥ १५ ॥

स्वयमातृण्णामिष्टकां पुरुषे उपदधाति, शर्करां छिद्रां "ध्रुवासि"

---

(१) अग्नेष्ट्वा तेजसा सादयामि । ( वा० सं० १३-१३ )

(२) इन्द्रस्य त्वौजसा सादयामि ॥

भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः ।
दिवि मूर्द्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम् ॥
( वा० सं० १३-१४,१५ )

(१) इत्यनेन मन्त्रेण ॥१५॥

भूरित्येतस्याᳲ साम गायति ॥ १६ ॥

आलभ्य, सप्तम्युपदेशात् ॥ १६ ॥

अन्यत्रापि व्याहृतिषु ॥ १७ ॥

अतोऽन्यत्रापि स्वयमातृण्णासु व्याहृतिषु साम गायति । "अथ स्वयमातृण्णासु सामानि गायति" ( श० ब्रा० ८-७-४-१) इति प्रकृत्य "स वै भूर्भुवःस्वरित्येतासु व्याहृतिषु गायति" ( श० ब्रा० ८-७-४-५ ) इति आह । सूत्रे च बहुवचनं पूर्वापेक्षम् ॥ १७ ॥

मूलाग्रवतीं दूर्वां तस्यां पुरस्ताद् भूमिप्राप्तां काण्डा(२)त्काण्डादिति ॥ १८ ॥

तस्यां स्वयमातृण्णायां यथा भवत्यर्धमर्धं च भूमौ तथोपधेया॥१८॥

पूर्वां पूर्वामुत्तराः ॥ १९ ॥

इष्टका उपदधाति ॥ १९ ॥

यास्त इति द्वियजुषं द्वितीये ॥ २० ॥

"यास्त" (३)इत्यनेन मन्त्रेण द्वितीये लोके उपदधाति ॥ २० ॥

'द्वितीये' इति कुत एतत् ?

---

( १ ) ध्रुवासि धरुणास्तृता विश्श्वकर्म्मणा ।
मा त्वा समुद्रऽउद्वधीन्मा सुपर्णोव्व्यथमाना पृथिवी न्दृᳲह(१६)
प्रजापतिष्ट्वा सादयत्वपा म्पृष्ठे समुद्रस्येमन् ।
व्व्यचस्वती म्प्रथस्वती म्प्रथस्व पृथिव्व्यसि ॥ ( १७ )
भूरसि भूमिरस्यदितिरसि विश्श्वधाया विश्श्वस्य भुवनस्य धर्त्त्री ।
पृथिवीं य्यच्छ पृथिवी न्दृᳲह पृथिवी म्मा हिᳲसीः ॥ ( १८ )
विश्श्वस्म्मै प्प्राणायापानाय व्व्यानायोदानाय प्प्रतिष्ठायै चरित्त्राय ।
अग्निष्ट्वाभिपातु मह्य्या स्वस्त्या च्छर्द्दिषा शन्तमेन तया
देवतयाङ्गिरस्वद्ध्रुवासीद ॥ ( वा० सं० १३-१९ )
( २ ) काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि ।
एवा नो दूर्व्वे प्प्रतनु सहस्रेण शतेनच ॥ ( वा० सं० १३-२० )
( ३ ) यास्ते ऽअग्ने सूर्य्ये रुचो दिवमातन्वन्ति रश्मिभिः ।
ताभिर्न्नो ऽअद्य सर्व्वाभी रुचे जनाय नस्कृधि ॥ ( २२ )
या वो देवाः सूर्य्ये रुचो गोष्वश्वेषु या रुचः ।
इन्द्राग्नी ताभिः सर्व्वाभी रुचन्नो धत्त बृहस्पते ॥ (वा०सं० १३-२३)

**उलूखलस्य रेतःसिग्वेलापामरत्निमात्रश्रुतेः ॥ २१ ॥**

उलूखलमुसले हि प्रकृत्याह—"ते रेतःसिचोर्वेलयोपदधात्यरत्निमा-त्रेऽरत्निमात्राद्यक्षमद्य ते" ( श० ब्रा० ७-५-१-१३- ) इति श्रुतेः । रेतःसिचोर्द्वियजुषश्चानन्तर्यमुक्तम् "ते अनन्तर्हिते द्वियजुष उप-दधाति" ( श० ब्रा० ७-४-२-२४ ) इति । तेन द्वियजुषो द्वितीये लोके उपधानम् ॥ २१ ॥

**विराट् स्वरा(१)डिति रेतःसिचौ प्रतिमन्त्रम् ॥ २२ ॥**

उपदधाति ॥ २२ ॥

**प्रजापति(२)रिति विश्वज्योतिषम् ॥ २३ ॥**

उपदधाति ॥ २३ ॥

**ऋतव्ये मधुश्च(३) माधवश्चेति ॥ २४ ॥**

उपधीयेते ॥ २४ ॥

**अषाढासी(४)त्यषाढाम् ॥ २५ ॥**

उपदधाति ॥ २५ ॥

**स्वयमातृण्णारेतःसिग्विश्वज्योतिर्ऋतव्याषाढासु लक्ष-णानि कुरुते रज्ज्वा वेलार्थानि ॥ २६ ॥**

उपरिष्टाद्वेलायाः प्रयोजनमस्ति ॥ २६ ॥

**कूर्मं दधिमधुघृतैरनक्ति मधुवाता(५) इति ॥ २७ ॥**

---

( १ ) विराड्ज्योतिरधारयत्स्वराड्ज्योतिरधारयत्॥(वा०सं०१३-२४)

( २ ) प्रजापतिष्ट्वा सादयतु पृष्ठे पृथिव्या ज्योतिष्मतीम् ।
विश्वस्मै प्राणायापानाय व्यानाय विश्वं ज्योतिर्यच्छ ।
अग्निष्टेऽधिपतिस्तया देवतयाङ्गिरस्वद्ध्रुवासीद ॥
( वा० सं० १३-२४ )

( ३ ) मधुश्च माधवश्च वासन्तिकावृतू ऽअग्नेरन्तः श्लेषोसि कल्पेता न्द्यावापृथिवी कल्पन्तामापऽओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यै-ष्ठ्याय सव्रताः । येऽअग्नयः समनसोन्तरा द्यावापृथिवीऽइमे । वास-न्तिकावृतूऽअभिकल्पमानाऽइन्द्रमिव देवाऽअभिसंविशन्तु तया देवत-याङ्गिरस्वद्ध्रुवे सीदतम् ॥ ( वा० सं० १३—२५ )

( ४ ) अषाढासि सहमाना सहस्वारातीः सहस्वपृतनायतः ।
सहस्रवीर्य्यासि सा मा जिन्व ॥ ( वा० सं० १३—२६ )

( ५ ) मधुव्वाताऽऋतायते मधुक्षरन्ति सिन्धवः ।

मन्त्रैः ॥ २७ ॥

**अरत्निमात्रेऽषाढां दक्षिणेनावकास्तूपरिष्टाच्च पुरुषमभिमुखम्**

इति सप्तदशाध्याये चतुर्थी कण्डिका ।

---

**अपां गम्भन्निति तिसृभिः ॥ १ ॥**

अषाढादक्षिणतोऽरत्निमात्रे देशेऽवकासु कूर्ममुपदधाति पुरुषमभिमुखम् । उपरिष्टाच्चावका भवन्ति । अवकाशब्देन सेवालमुच्यते । "अपां गम्भन्" (१) इति तिसृभिस्तमुपदधाति ॥ १ ॥

**घट्टयति मध्यमया ॥ २ ॥**

ऋचा चालयति ॥ २ ॥

**उलूखलमुसले स्वयमातृण्णामुत्तरेणारत्निमात्रेऽऔदुम्बरे प्रादेशमात्रे चतुरश्रमुलूखलं मध्यसङ्गृहीतमूर्द्ध्वं वृत्तं मुसलं दक्षिणमुलूखलाद्विष्णोः(२) कर्माणीति ॥३॥**

"अथोलूखलमुसलेऽउपदधाति" ( श० ब्रा० ७-५-१-१२ ) इति प्रकृत्यैवमेव हि श्रूयते इति । पद्ये(३) चैते भवतः, यजुष्मतीत्वात् ।

---

माद्ध्वीर्न्नः सन्त्वोषधीः ॥ ( २७ )
मधुनक्तमुतोषसो मधुमत्पार्थिवꣳ रजः ।
मधुद्यौरस्तु नः पिता ॥ ( २८ )
मधुमान्नो व्वनस्पतिर्म्मधुमाँ२ऽअस्तु सूर्य्यः ।
माद्ध्वीर्गावो भवन्तु नः ॥ ( वा० सं० १३—२९ )

( १ ) अपां गम्भन्त्सीद मा त्वा सूर्य्योभिताप्सीन्माग्निर्व्वैश्वानरः ।
अच्छिन्नपत्राः प्रजाऽअनुवीक्षस्वानु त्वा दिव्या व्वृष्टिः सचताम् ॥ (३०)
त्रीन्त्समुद्रान्त्समसृपत्स्वर्गानपां पतिर्व्वृषभऽइष्टकानाम् ।
पुरीषं व्वसानः सुकृतस्य लोके तत्र गच्छ यत्र पूर्व्वे परेताः ॥ (३१)
मही द्यौः पृथिवी च नऽइमं य्यज्ञं मिमिक्षताम् ।
पिपृतां नो भरीमभिः ॥ ( वा० सं० १३—३२ )

( २ ) व्विष्णोः कर्म्माणि पश्यत यतो व्व्रतानि पस्पशे ।
इन्द्रस्य युज्ज्यः सखा ॥ ( वा० सं० १३—३३ )

( ३ ) "ते रेतःसिचोर्वेलयोपदधाति "( श० ब्रा० ७-५-१-१३ ) इत्यादिना रेतःसिग्वेलायां दक्षिणोत्तरोपधानविधानादेकलोके द्वयोरुपधानम् । तयोश्च पद्यात्वे एकलोके उपधानासंभवात् 'पद्ये' इति

भेदेन(१) चोपधानं लिङ्गात् । "सकृत्सादयति समानं तत्करोति" ( श० ब्रा० ७-५-१-२५ ) । यदिह युगपदुपधानं स्यान्न सकृत्त्वमुच्येत ॥ ३ ॥

उलूखल ऽउखां कृत्वोपशयां पिष्ट्वा न्युप्य पुरस्ताद्ध्रुवासी(२)त्युखाम् ॥ ४ ॥

"अथोपशयां पिष्ट्वा लोकभाजमुखां कृत्वा पुरस्तादुखाया उपनिवपति" ( श०ब्रा०७-५-१-२८ ) इति श्रुतिक्रमेणानुष्ठानम । लोकभाक्करणोत्तर कालं मन्त्रवचनम् ॥ ४ ॥

अग्ने युक्ष्वा(३) हीति प्रत्यृचः स्रुवाहुती जुहोत्युखायाम्॥५॥

ऋजुम् ॥ ५ ॥

उपस्थानं वाऽसम्वत्सरभृतिनः ॥ ६ ॥

सम्वत्सरभृतिनो होमः । असम्वत्सरभृतिनः उपस्थानं होमो वा । विकल्पेन हि तस्य श्रवणमिति ॥ ६ ॥

---

भाष्यकारेणोक्तेऽपि अर्धपद्ये एव ते भवतः । किञ्च यत्र सूत्रकृता "पादमात्र्यौ वा सामर्थ्यात्" ( का० श्रौ० १७-४-१२ ) इत्यभिहितेऽपि 'अर्धपद्ये चैते भवत इति सप्रदायः' (का०श्रौ०१७-४-१४) इति भाष्यकृताऽभिहितम् किमुतात्रार्धपद्यात्वे वाच्यम्। नच तिरश्च्यौ इत्यनेन स्रुचोरर्धपद्यात्वं वक्तुं शक्यम् , पुष्कराग्रविवक्षया हि अत्र तिर्यक्त्वम् । तथा च वाक्यशेषे श्रूयते "तिर्यञ्चौ वा इमौ बाहू" इति । ननु चोलूखल-मुसलयोरर्धपद्यात्वे उलूउखोपधानश्रुतिर्बाध्यते, उभयत्रोखोपधानात् । सूत्रे च "उलूखल उखां कृत्वा" इति ? उच्यते,

उभयत्रोपधानेऽपि भवत्येव ह्युलूखले ।
उखाया उपधानं तच्छ्रुतिबाधोऽपि नो भवेत् ।
पद्यात्वे तु तयोरेकवेलालोकैक्यबाधतः ।
सर्वथा श्रुतिबाधः स्यादितस्ते अर्धपद्यके ॥

( १ ) भेदे मन्त्रावृत्तिः सन्निपातित्वात् ।

( २ ) ध्रुवासि धरुणेतो जज्ञे प्रथममेभ्यो योनिभ्योऽअधिजातवेदाः ।
स गायत्र्या त्रिष्टुभानुष्टुभा च देवेभ्यो हव्यं वहतु प्रजानन् ॥
( वा० सं० १३—३४ )

( ३ ) अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः ।
अरं वहन्ति मन्यवे ॥ ( ३६ )
युक्ष्वा हि देवहूतमां २॥ऽ अश्वां २॥ऽ अग्ने रथीरिव ।
नि होता पूर्व्यः सदः ॥ ( वा० सं० १३—३७ )

**प्रतिशिरः सप्तसप्त हिरण्यशकलान्मुखे करोति सम्यक्स्रवन्तीति ॥ ७ ॥**

प्रतिशिरः सप्त सप्त हिरण्यशकलान्प्रास्यति प्राणायतनेषु मुखे प्रथमं "सम्यक्स्रवन्ति" (१)इत्यनेन मन्त्रेण ॥ ७ ॥

**उत्तरौ द्वौ द्वौ ॥ ८ ॥**

मन्त्रौ प्रतीयात् ॥ ८ ॥

**नासिकयोर्ऋचे(२) त्वेति ॥ ९ ॥**

मन्त्रद्वयाभिधानादेव शकलद्वित्वमधिष्ठानभेदाच्च ॥ ९ ॥

**अक्ष्योर्भासे(३) त्वेति ॥ १० ॥**

प्रास्यति ॥ १० ॥

**श्रोत्रयोरभूदि(४)दमिति ॥ ११ ॥**

प्रास्यति ॥ ११ ॥

**सर्वानप्येकस्मिन्नेके ॥ १२ ॥**

एकस्मिन्नपि पशौ सर्वानेव शकलानेक आचार्याः प्रास्यन्ति, "तद्वैकेऽपि यद्येकः पशुर्भवति पञ्चैव कृत्वः सप्त सप्त प्रत्यस्यन्ति" ( श० ब्रा० ७–५–२–१० ) इति श्रुतेः ॥ १२ ॥

**उखायां प्रत्यञ्चि ॥ १३ ॥**

पशुशीर्षाण्युपदधातीति शेषः ॥ १३ ॥

तत्र च—

**सहस्रदा इति पुरुषशिर उद्गृह्य मध्ये ॥ १४ ॥**

"सहस्रदा"(५) इत्यनेन मन्त्रेण पुरुषशिर उद्गृह्य मध्ये उपधेयम्॥१४॥

**अश्वाव्योरुत्तरतः पूर्वापरे ॥ १५ ॥**

---

( १ ) सम्यक्स्रवन्ति सरितो न धेनाऽअन्तर्हृदामनसा पूयमानाः ।
घृतस्य धाराऽअभिचाकशीमिहिरण्ययो वेतसो मद्ध्येऽअग्नेः ॥
( वा० सं० १३—३८ )

( २ ) ऋचे त्वा, रुचे त्वा ( वा० सं० १३—३९ )

( ३ ) भासे त्वा, ज्ज्योतिषेत्वा । ( वा० सं० १३—३९ )

( ४ ) अभूदिदं व्विश्श्वस्य भुवनस्य व्वाजिनमग्ग्नेर्व्वैश्श्वानरस्य च ॥
( वा० सं० १३—३९ )

( ५ ) सहस्रदाऽअसि सहस्राय त्वा ॥ ( वा० सं० १३–४० )

उपधीयेते शिरसी, पूर्वमश्वस्यापरमवेः ॥ १५ ॥

**गोऽजयोश्च दक्षिणतः ॥ १६ ॥**

चशब्दात्पूर्वापरे एव । पूर्वं गोरपरमजस्य ॥ १६ ॥

**आदित्यं(१) गर्भमिति प्रतिमन्त्रं मन्त्रक्रमेण ॥ १७ ॥**

शिरांस्युपधीयन्ते ॥ १७ ॥

**चित्रं देवानामित्यर्धर्चशः स्रुवाहुती मध्यमे ॥ १८ ॥**

"चित्रन्देवानाम्" (२) इत्येकैकेनार्धर्चशः स्रुवाहुती जुहोति, पुरुषशिरसि, "अथ पुरुषशीर्षमभिजुहोति" ( श० ब्रा० ७-५-२-२३ ) इति वचनात् ॥ १८ ॥

**बहिर्वेद्युदङ् तिष्ठन्नुपतिष्ठतऽउत्सर्गैरिमं मा हिꣳसीरिति प्रतिमन्त्रम् ॥ १९ ॥**

बहिर्वेद्युदङ्मुखस्तिष्ठन्नुत्सर्गमन्त्रैरुपतिष्ठते पशुशीर्षाणि "इमं मा हिꣳसी" (३) इति प्रतिमन्त्रम् ॥ १९ ॥

---

( १ ) आदित्य ङ्गर्भम्पयसा समङ्धि सहस्रस्य प्रतिमां विश्वरूपम् ।
परिवृङ्धि हरसा माभिमꣳस्थाः शतायुष ङ्कृणुहि चीयमानः॥(४१)
व्वातस्य जूतिं व्वरुणस्य नाभिमश्वञ्जज्ञानꣳ सरिरस्य मध्ये ।
शिशु न्नदीनाꣳ हरिमद्रिबुध्नमग्ने मा हिꣳसीः परमे व्योमन्॥(४२)
अजस्रमिन्दु मरुषम्भुरण्युमग्निमीडे पूर्व्वचित्तिन्नमोभिः ।
स पर्व्वभिर्ऋतुशः कल्पमानो गा म्मा हिꣳसीरदितिं विराजम् ॥(४३)
व्वरूत्री न्त्वष्टुर्व्वरुणस्य नाभिमविं जज्ञाना ꣳरजसः परस्मात् ।
महीꣳसाहस्रीमसुरस्य मायामग्ने मा हिꣳसीः परमे व्योमन् ॥(४४)
योऽअग्निरग्नेरध्यजायत शोकात्पृथिव्याऽउत वा दिवस्परि ।
येन प्रजा विश्वकर्म्मा जजान तमग्ने हेडः परि ते व्वृणक्तु ॥
( वा० सं० १३-४५ )

( २ ) चित्र न्देवानामुदगादनीक ञ्चक्षुर्म्मित्रस्य व्वरुणस्याग्नेः ।
आप्रा द्यावापृथिवीऽअन्तरिक्षꣳसूर्य्य आत्मा जगतस्तस्थुषश्च ॥
( वा० सं० १३-४६ )

( ३ ) इमम्मा हिꣳसीर्द्विपाद म्पशुꣳ सहस्राक्षो मेधाय चीयमानः ।
मयु म्पशु म्मेधमग्ने जुषस्व तेन चिन्वानस्तन्न्वो निषीद ।
मयु न्ते शुगृच्छतु यन्द्विष्मस्त न्ते शुगृच्छतु ॥ ( ४७ )
इमम्मा हिꣳसीरेकशफ म्पशु ङ्कनिक्रदं व्वाजिनं व्वाजिनेषु ।
गौरमारण्यमनु ते दिशामि तेन चिन्वानस्तन्न्वो निषीद ।

उखां परिक्राममेके ॥ २० ॥

एके आचार्या उखां परिक्रम्य परिक्रम्येह स्थिता एव तस्य तस्य पशोरुपस्थानं कुर्वन्ति । एवमपि हि श्रूयते—"विपरिक्राममु हैक उपतिष्ठन्ते"(श० ब्रा० ७-५-२-३०) इति विकल्पः ॥ २० ॥

उपधायोपधाय वा तस्य तस्य यथालिङ्गम् ॥ २१ ॥

"तद्धैके यं यमेव पशुमुपदधति तस्य तस्य शुचमुत्सृजन्ति" (श० ब्रा० ७-५-२-२९) इतिश्रुतेः । अस्मिंश्च पक्षे प्रागजशिरउपस्थानात्पुरुषाहुती इति ॥ २१ ॥

सर्वमन्त्रानप्येकस्मिन्नेके ॥ २२ ॥

एकस्मिन्नपि पशुशिरसि सर्वमन्त्रानेके आचार्याः प्रयुञ्जते॥ २२ ॥
तत्र च—

उपधानमन्त्रान्विपरिहरन्नङ्गुलिं प्रथिष्ठ शिरसि ॥२३॥

देशे संलागयति । एतच्च यद्येकस्मिञ्छिरसि पञ्चकृत्वोहिरण्यशकलप्रक्षेपः कृतस्तदैव भवति ॥ २३ ॥

एत्य च—

इति सप्तदशाध्याये पञ्चमी कण्डिका ।

त्वं(१)यविष्ठेति चित्योपस्थानम् ॥ १ ॥

---

गौर न्ते शुगृच्छतु यन्द्विष्मस्त न्ते शुगृच्छतु ॥ (४८)
इम१ँ साहस्र१ँ शतधारमुत्सं व्यच्यमान१ँ सरिरस्य मध्ये ।
घृत न्दुहानामदितिं जनायाग्ने माहि१ँसीः परमे व्योमन् ।
गवयमारण्यमनु ते दिशामि तेन चिन्न्वानस्तन्न्वो निषीद ।
गवय न्ते शुगृच्छतु य न्द्विष्मस्त न्ते शुगृच्छतु ॥ (४९)
इममूर्णायुं वरुणस्य नाभि न्त्वच न्पशूना न्द्विपदाञ्चतुष्पदाम् ।
त्वष्टुः प्रजाना म्प्रथम ञ्जनित्रमग्ने मा हि१ँसीः परमे व्योमन् ।
उष्ट्रमारण्यमनु ते दिशामि तेन चिन्न्वानस्तन्न्वो निषीद ।
उष्ट्र न्ते शुगृच्छतु य न्द्विष्मस्त न्ते शुगृच्छतु ॥ ( ५० )
अजो ह्यग्नेरजनिष्ट शोकात्सोऽअपश्यज्जनितारमग्रे ।
तेन देवा देवतामग्रमायँस्तेन रोहमायन्नुपमेध्यासः ।
शरभमारण्यमनु ते दिशामि तेन चिन्न्वानस्तन्न्वो निषीद ।
शरभ न्ते शुगृच्छतु य न्द्विष्मस्त न्ते शुगृच्छतु ॥
( वा० सं० १३-५१ )

( १ ) त्वं यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरः ।
रक्षा तोकमुत त्मना । ( वा० सं० १३-५२ )

बहिर्वेद्युत्सर्गैरुपस्थानं कृतम् । तेन 'प्रत्य' इत्युच्यते । चशब्दादने-त्यच । उखापरिक्रमणपक्षेऽपीत्यर्थः ॥ १ ॥

अपरेण स्वयमातृण्णामेत्यापस्याः पञ्च पञ्चानूक्रान्ते-ष्वपां(१) त्वेमन्निति प्रतिमन्त्रम् ॥ २ ॥

"आरुह्याग्निं जघनेन स्वयमातृण्णां परीत्यापस्या उपदधाति" (श० ब्रा० ७-५-२-४० ) इति । अत्र च प्रत्यनूक्रान्तं नित्ये भवत इत्युक्तमेवै-कादशस्वेकचोदनासु तन्त्रेणेति ॥ २ ॥

व्याघारणवत्प्राणभृतः कर्णसहिता दश दश पुरुष-मुपाध्यैके रेतःसिग्वेलायां च सर्वतो यथायोगमयम्पुर इति प्रतिमन्त्रम् ॥ ३ ॥

'प्राणभृत' इतीष्टकानां नाम । ताश्च व्याघारणवद्दक्षिणपूर्वां-सादारभ्य कर्णसहिता उपदधाति "अयम्पुरः" (२)इति प्रतिमन्त्रम् । तत उत्तराश्रोणेरारभ्य एवमेवोपधानम् । पुनर्दक्षिणाश्रोणेरारभ्य एवमेवोपधानम् । तत उत्तरांसादारभ्य । एवं चत्वारो दशका उप-हिताः । शिष्टा दश रेतःसिग्वेलायां यथायोगं समत्रिभागेनोपधीयन्ते । पुरुषमुपाध्य वा सर्वासामुपधानम्, "ता हैके पुरुषमुपाध्योपदधति" ( श० ब्रा० ८-१-४-१ ) इति श्रुतेः । ततश्च कर्णसहिता इति विकल्पः॥३॥

द्वितीयमयं पश्चादिति ॥ ४ ॥

---

( १ ) अपां त्वेमन्त्सादयाम्यपां त्वोद्मन्त्सादयाम्यपां त्वा भस्मन्त्सादयाम्यपां त्वा ज्योतिषि सादयाम्यपां त्वायने सादयाम्यर्णवे त्वा सदने सादयामि समुद्रे त्वा सदने सादयामि सरिरे त्वा सदने सादयाम्यपां त्वा क्षये सादयाम्यपां त्वा सधिषि सादयाम्यपां त्वा सदने सादयाम्यपां त्वा सधस्थे सादयाम्यपां त्वा योनौ साद-याम्यपां त्वा पुरीषे सादयाम्यपां त्वा पाथसि सादयामि गायत्रेण त्वा छन्दसा सादयामि त्रैष्टुभेन त्वा छन्दसा सादयामि जागतेन त्वा छन्दसा सादयाम्यानुष्टुभेन त्वा छन्दसा सादयामि पाङ्क्तेन त्वा छन्दसा सादयामि ॥ ( वा० सं० १३-५३ )

( २ ) अयम्पुरो भुवस्तस्य प्राणो भौवायनो वसन्तः प्राणायनो गायत्री वासन्ती गायत्र्यै गायत्रं गायत्रादुपांशुरुपांशोस्त्रिवृत्त्रिवृतो रथन्तरं वसिष्ठऽऋषिः प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्यः ॥ ( वा० सं० १३-५४ )

द्वितीयं दशानामुपधानं "अयम् पश्चात्" (१) इति। अत्र केके खण्डशो मन्त्रान्प्रयुञ्जते, "पञ्चाशादिष्टकाः पञ्चाशद्यजू्ँषि" (श० ब्रा० १०-२-४-८) इति वचनात्। तत्पुनरयुक्तम्, वाक्यानामपरिसमाप्तत्वात्। कथं तर्हि यजुषां पञ्चाशत्त्वम्? अभ्यासेनेत्यदोषः। लिङ्गाच्च। "कथमस्यैताः सर्वाः प्राजापत्या भवन्तीति"(श० ब्रा०८-१-३-२) इति प्रकृत्याह "यदेव सर्वास्वाह प्रजापतिगृहीतया त्वयेत्येवमु हास्यैताः सर्वाः प्राजापत्या भवन्ति" (श० ब्रा० ८-१-३-२) इति। तस्मात्सकलमन्त्रप्रयोगो न खण्डश इति ॥ ४ ॥

**लोकम्पृणादक्षिणांसादध्यामध्यात्प्रदक्षिणमानूकान्तात्पूर्वस्मात् ॥ ५ ॥**

उपदधाति ॥ ५ ॥

**प्रत्येत्य शेषम् ॥ ६ ॥**

पूरयति ॥ ६ ॥

**पक्षपुच्छानि पराग्भिरप्ययेभ्योऽधि ॥ ७ ॥**

(२)अप्ययेभ्य आरभ्य पक्षपुच्छानि पराग्भिरिष्टकाभिश्चिनोति ॥७॥

**एवंसर्वत्र ॥ ८ ॥**

सर्वचितिष्वेवं पराग्भिरिष्टकाभिः पक्षपुच्छानां चयनम ॥ ८ ॥

**मध्ये पुरीषं निवपति पूर्ववत् ॥ ९ ॥**

पूर्ववदिति मन्त्र (३)उपलभ्यते ॥ ९ ॥

**पूर्वमर्धानूकं छादयति ॥ १० ॥**

पुरीषेण ॥ १० ॥

ततः—

**प्रदक्षिणमात्मानम् ॥ ११ ॥**

पुरीषेण च्छादयति ॥ ११ ॥

---

(१) अयं पश्चाद्विश्वव्यचास्तस्य चक्षुर्वैश्वव्यचसं वर्षाश्चाक्षुष्यो जगती वार्षी जगत्याऽऋक्सममृक्समाच्छुक्रः शुक्रात्सप्तदशः सप्तदशाद्वैरूपं जमदग्निर्ऋषिः प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्यः ॥ ( वा० सं० १३—५६ )

(२) अप्ययः पक्षपुच्छात्मसन्धिः।

(३) इन्द्रं विश्वाऽअवीवृधन्त्समुद्रव्यचसं गिरः। रथीतमं रथीनां वाजानाँसत्पतिं पतिम् ( वा० सं० १२—५६ )

पक्षपुच्छानि च ॥ १२ ॥

चशब्दात्प्रदक्षिणं पुरीषेण च्छादयति । "दक्षिणं पक्षमथ पुच्छमथोत्तरम्" ( श० ब्रा० ८-७-३-५ ) इति ॥ १२ ॥

एवꣳ सर्वत्र ॥ १३ ॥

सर्वचितिषु इत्यर्थः ॥ १३ ॥

इति सप्तदशाध्याये षष्ठी काण्डिका ।

---

चितिं पुरीषवतीमुपतिष्ठते वार्त्रहत्याये(१)ति सप्तभिः ॥१॥

पुरीषवतीग्रहणात् यदैव पुरीषवती तदैवोपस्थानं न प्रागिति ॥१॥

अष्टाभिरेके ॥ २ ॥

उपतिष्ठन्ते ॥ २ ॥

दशभिर्वा ॥ ३ ॥

---

( १ ) व्वार्त्रहत्याय शवसे पृतनाषाह्याय च । इन्द्रत्वावर्त्तयामसि॥ (६८)
सहदानु म्पुरुहूत क्षियन्तमहस्तमिन्द्र सम्पिणक्कुणारुम् ।
अभि व्वृत्रं व्वर्द्धमान म्पियारुमपादमिन्द्रतवसा जघन्थ ॥ (६९)
व्वि नऽइन्द्र मृधो जहि नीचा यच्छ पृतन्यतः ।
योऽअस्माँ२ ऽअभिदासत्यधरं ङ्गमया तमः ॥ ( ७० )
मृगो न भीमः कुचरो गिरिष्ठाः परावतऽआजगन्था परस्याः ।
सृकꣳ सꣳ शाय पविमिन्द्र तिग्मंव्वि शत्रून्ताढि व्वि मृधो नुदस्व ॥ (७१)
व्वैश्वानरोनऽऊतयऽआप्रयातुपरावतः ।
अग्निर्नः सुष्टुतीरुप ॥ ( ७२ )
पृष्टो दिवि पृष्टोऽअग्निः पृथिव्व्यां पृष्टो व्विश्वाऽओषधीराविवेश
व्वैश्वानरः सहसा पृष्टोऽअग्निः सनो दिवा स रिषस्पातु नक्तम् ॥(७३)
अश्याम तङ्काममग्ने तवोतीऽअश्याम रयिꣳरयिवः सुवीरम् ।
अश्याम व्वाजमभि वाजयन्तोश्यामद्युम्नमजराजरन्ते ॥ (७४)
व्वयन्ते अद्य ररिमा हि काममुत्तानहस्ता नमसोपसद्य ।
यजिष्ठेन मनसा यक्षि देवानस्रेधतामन्मना व्विप्रोऽअग्ने ॥ (७५)
धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः ।
सचेतसो व्विश्वेदेवा यज्ञम्प्रावन्तु नः शुभे ॥ ( ७६ )
त्वं य्यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरः ।
रक्षा तोकमुत त्त्मना ॥ ( वा० सं० १८—७७ )

वेति विकल्पः ॥ ३ ॥

उपसत्सु पौर्वाह्णिक्यापराह्णिक्यन्तरे चयनपुरीषनिवपने॥४॥

कर्त्तव्ये, "अन्तरोपसदौ चिनोति" ( श० ब्रा० १०-२-५-१ ) इति श्रुतेः ॥ ४ ॥

त्रिरश्वं परिणीयोपास्तमयं पशुवदुत्सृज्य तावत्प्रतिपर्यैति ॥ ५ ॥

अस्तमयकाले त्रिः कृत्वोऽश्वमग्निं परिणीयोत्तरपूर्वां दिशं प्रत्युत्सृज्य तावत्प्रतिपर्यैति ॥ ५ ॥

परिणयनमाग्निनिधानात् ॥ ६ ॥

एतच्च परिणयनमाग्निनिधानादर्वाक्कर्तव्यम् । एतच्च यद्यपि बहुभि- रहोभिश्चितिः क्रियते तथापि प्रत्यस्तमयं क्रियत एव, विशिष्टकाले श्रवणात् ॥ ६ ॥

त्र्युपसत्के द्वे प्रथमायां तिस्रो मध्यमायाम् ॥ ७ ॥

त्र्युपसत्के क्रतौ प्रथमायामुपसदि द्वे चिती उपधीयेते, मध्यमा यांच तिस्रः ॥ ७ ॥

पञ्चगृहीताद्युत्तमा ॥ ८ ॥

उत्तमोपसत्पञ्चगृहीतादि भवति । "उपवसथीयेऽहन्प्रातरुदित आदित्ये वाचं विसृजते वाचं विसृज्य पञ्चगृहीतमाज्यं गृह्णीते" ( श० ब्रा० ९-२-१-१- ) इत्येवमाद्युपक्रम्य "प्रवर्ग्योपसद्भ्यां प्रचरति" (श० ब्रा० ९-२-१-१८- ) इति हि श्रूयते ॥ ८ ॥

उत्तरासु च ॥ ९ ॥

उत्तरासु च बहुषूपसत्सु पञ्चगृहीताद्युत्तमोपसद्भवति ॥ ९ ॥

सपुरीषा षट्स्वेकैका ॥ १० ॥

षट्सूपसत्सु सपुरीषा चितिरेकैका ॥ १० ॥

द्वादशोपसत्के व्यत्यासं चितिपुरीषे ॥ ११ ॥

द्वादशोपसत्के क्रतौ व्यत्यासेन चितिपुरीषे भवतः ॥ ११ ॥

विकर्ण्याद्येकादश्याम् ॥ १२ ॥

तत्र चैकादश्यामुपसदि विकर्ण्यादि कर्त्तव्यम् ॥ १२ ॥

चतुर्मासोपसत्के द्वादशाहशः ॥ १३ ॥

द्वादशभिर्द्वादशभिरहोभिश्चितिपुरीषे देये । अन्त्यम्पुरीषमेकादश- भिरहोभिर्विकर्ण्यादि च । पञ्चगृहीताद्युत्तमा तु स्थितैव ॥ १३ ॥

षट्त्रिꣳशदहशः षट्त्रिꣳशदहशः सम्वत्सरे ॥ १४ ॥

एतच्च सामर्थ्यात्त्रिसंवत्सरोपसत्के द्रष्टव्यम् । संवत्सरोपसत्के हि विशेषं वक्ष्यत्येव । तथा च तिसृभिस्तिसृभिः षट्त्रिंशद्भिश्चितिपुरीषाणि भवन्ति ॥ १४ ॥

तापश्चिते मासशश्चितिपुरीषे चतसृणाम् ॥ १५ ॥

चतसृणां चितीनां मासेन मासेन चितिपुरीषे चीयेते । मासेन चितिः मासेन पुरीषम् । एवमष्टौ मासाः ॥ १५ ॥

पञ्चम्यामसपत्ना विराजः प्रथमेऽहन् ॥ १६ ॥

पञ्चम्यां चितौ प्रथमेऽहन्यसपत्ना विराजश्चोपधीयन्ते ॥ १६ ॥

स्तोमभागा अन्वहम् ॥ १७ ॥

चीयन्ते । एवं नवमासा गता भवन्ति ॥ १७ ॥

मासं पुरीषं तूष्णीम् ॥ १८ ॥

एवं दशमासाः ॥ १८ ॥

नाकसत्प्रभृति मासम् ॥ १९ ॥

एवमेकादश मासा भवन्ति ॥ १९ ॥

पुरीषञ्च ॥ २० ॥

चशब्दान्मासमेव ॥ २० ॥

उत्तमयोरह्नोर्विकर्ण्यादि पूर्वे ॥ २१ ॥

अत्रोत्तमयोरह्नोर्विकर्ण्यादि पूर्वेऽहनि । पञ्चगृहीताद्युत्तमा तु स्थितैव ॥ २१ ॥

द्विसाहस्री प्रथमा लोकम्पृणानां पञ्चाशदूना ॥ २२ ॥

भवन्ति ॥ २२ ॥

उत्तराश्च ॥ २३ ॥

तत्संख्या भवन्ति ॥ २३ ॥

त्रिसाहस्र्युत्तमा ॥ २४ ॥

उत्तमा चितिः त्रिसाहस्री लोकम्पृणानां भवति ॥ २४ ॥

वक्रालिखितानां दक्षिणोत्तरे मध्य इतरासाम् ॥ २५ ॥

वक्रालिखितानां दक्षिणोत्तरे देशे उपधानम् । ऋज्वा लिखितानां च मध्ये । "अथ पञ्चमीं चितिमुपधाय त्रेधाग्निं विमिमीत" ( श० ब्रा० १०-२-१-९) इति प्रकृत्य एवमेव श्रुतत्वात् ॥ २५ ॥

षट्त्रिंशच्छत्या वा तृतीयाष्टादशशत्या इतराः ॥२६॥

अयमपरो लोकम्पृणानां परिमाणविकल्पः ॥ २६ ॥

गार्हपत्यलोकम्पृणाः प्रथमायाम् ॥ २७ ॥

चितौ विगणयितव्याः ॥ २७ ॥

धिष्णीया उत्तमायाम् ॥ २८ ॥

अपरिमितेष्टको वा ॥ २९ ॥

अग्निर्भवति । अयं चापरिमितशब्दोऽपरिमाणवचन इत्युक्तमिष्याम् ॥ २९ ॥

प्रथमोत्तमयोः पादमात्रीरतिरिक्ता ॥ ३० ॥

प्रथमोत्तमयोश्चित्योर्या अतिरिक्ता सा पादमात्री भवति नातोऽधिकेति ॥ ३० ॥

दशगणाधिका भिस्त्वोत्करे कुर्यात् ॥ ३१ ॥

गार्हपत्याहवनीयावष्टौ च धिष्ण्या इति दशगणाः । अतो या अधिकास्ता भिस्त्वोत्करे कुर्यात् ॥ ३१ ॥

इति सप्तदशाध्याये सप्तमी कण्डिका ।

द्वितायायामाश्विनीः प्रतिदिशम् ॥ १ ॥

द्वितीयाग्रहणं प्रथमायाः परिसमाप्तिज्ञापनार्थम् । आश्विनीरिति च इष्टकानां संज्ञा । ताः प्रतिदिशमुपधीयन्ते ॥ १ ॥

रेतःसिग्वेलायामनूकमुत्तरेण पूर्वा द्वितीये ॥ २ ॥

लोक उपधीयते ॥ २ ॥

दक्षिणा पूर्वेण ॥ ३ ॥

अनूकमुपधीयते ॥ ३ ॥

अपरा दक्षिणेन ॥ ४ ॥

उत्तराऽपरेण ॥ ५ ॥

दक्षिणामुत्तरेण पञ्चमी ॥ ६ ॥

अर्धपद्ये चैते भवतः ॥ ६ ॥

वैश्वदेवीः ॥ ७ ॥

वैश्वदेवीरितीष्टकानां संज्ञा ॥ ७ ॥

तासां देशमाह—

पूर्वां दक्षिणेन ॥ ८ ॥

**दक्षिणामपरेण ॥ ९ ॥**

**अपरामुत्तरेण ॥ १० ॥**

**उत्तरां पूर्वेण ॥ ११ ॥**

**एवं वैश्वदेवीभ्यः प्राणभृतः ॥ १२ ॥**

उपधीयन्ते ॥ १२ ॥

**प्राणभृद्भ्योऽपस्याः ॥ १३ ॥**

उपधीयन्ते ॥ १३ ॥

**पूर्ववत्पञ्चभ्यः सर्वासाम् ॥ १४ ॥**

एतच्चाचार्येण लाघवार्थमुपदिष्टम् ॥ १४ ॥

इदानीमुपधानक्रममाह—

**आश्विनीर्ध्रुवाक्षिति(१)रिति प्रतिमन्त्रम् ॥ १५ ॥**

उपदधाति ॥ १५॥

**शुक्रश्च (२)शुचिश्चेत्यृतव्ये पूर्वयोरुपरि ॥ १६ ॥**

उपधीयेते ॥ १६ ॥

---

( १ ) ध्रुवक्षितिर्द्ध्रुवयोनिर्द्ध्रुवासि द्ध्रुवं य्योनिमासीदसाधुया ।
उक्ख्यस्य केतुम्प्रथमञ्जुषाणाश्विनाद्ध्वर्य्यू सादयतामिह त्वा ॥(१)
कुलायिनी घृतवती पुरन्धिः स्योने सीद सदने पृथिव्व्याः ।
अभि त्वा रुद्द्रा व्वसवो गृणन्त्विमाब्रह्म पीपिहि सौभगायाश्विनाद्ध्व-
र्य्यू सादयतामिह त्वा ॥(२)
स्वैर्द्दक्षैर्द्दक्षपितेह सीद देवानाᳬ सुम्म्ने बृहते रणाय ।
पितेवैधि सूनवऽआ सुशेवा स्वावेशा तन्न्वा संव्विशस्वाश्विनाद्ध्वर्य्यू
सादयतामिह त्वा ॥(३)
पृथिव्व्याः पुरीषमस्यप्सो नाम तान्त्वा व्विश्वेऽअभिगृणन्तु देवाः ।
स्तोमपृष्ठा घृतवतीह सीद प्प्रजावदस्मे द्द्रविणायजस्वाश्विनाद्ध्वर्य्यू
सादयतामिह त्वा ॥(४)
अदित्यास्त्वा पृष्ठे सादयाम्यन्तरिक्षस्य धर्त्रीं व्विष्टम्भनीन्दिशाम-
धिपत्नीम्भुवनानाम् ।
ऊर्म्मिर्द्द्रप्सोऽअपामसि व्विश्वकर्म्मा तऽ ऋषिरश्विनाद्ध्वर्य्यू सादयता-
मिह त्वा ॥ ( वा० सं० १४–५ )

( २ ) शुक्रश्च शुचिश्च ग्रैष्मावृतूऽअग्नेरन्तःश्लेषोसि कल्पेतान्द्यावा-
पृथिवी कल्पन्तामापऽओषधयः कल्पन्तामग्नयः पृथङ्मम ज्ज्यैष्ठ्याय
सव्रताः ।

**उत्तराश्च ॥ १७ ॥**

ऋतव्याः पूर्वयोरेवोपरि ॥ १७ ॥

**वैश्वदेवीः सजूर्ऋतुभि(१)रिति प्रतिमन्त्रम् ॥ १८ ॥**

उपदधाति ॥ १८ ॥

**उत्तराश्च ॥ १९ ॥**

चशब्दात्प्रतिमन्त्रम् ॥ १९ ॥

**प्राणभृतः प्राणं (२)म इति ॥ २० ॥**

प्रतिमन्त्रमुपदधाति ॥ २० ॥

**अपः पिन्वे(३)त्यपस्याः ॥ २१ ॥**

उपदधाति ॥ २१ ॥

**वयस्याः पञ्च पञ्चानूक्रान्तेषु मूर्द्धा॑व्वय(४) इति प्रतिमन्त्रम् ॥ २२ ॥**

---

येऽअग्नयः समनसोन्तरा द्यावापृथिवीऽइमे ।

ग्रैष्मावृतूऽअभिकल्पमानाऽइन्द्रमिव देवाऽअभिसंव्विशन्तुतया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ॥ ( वा० सं० १४-६ )

( १ ) सजूर्ऋतुभिः सजूर्व्विधाभिः सजूर्द्देवैः सजूर्द्देवैर्व्वयोनाधैरग्नये त्वा व्वैश्वानरायाश्विनाध्वर्य्यू सादयतामिह त्वा सजूर्ऋतुभिः सजूर्व्विधाभिः सजूर्व्वसुभिः सजूर्द्देवैर्व्वयोनाधैरग्नये त्वा व्वैश्वानरायाश्विनाद्ध्वर्य्यू सादयतामिह त्वा सजूर्ऋतुभिः सजूर्व्विधाभिः सजूरुद्रैः सजूर्द्देवैर्व्वयोनाधैरग्नये त्वा व्वैश्वानरायाश्विनाद्ध्वर्य्यू सादयतामिह त्वा सजूर्ऋतुभिः सजूर्व्विधाभिः सजूरादित्यैः सजूर्द्देवैर्व्वयोनाधैरग्नये त्वा व्वैश्वानरायाश्विनाद्ध्वर्य्यू सादयतामिह त्वा सजूर्ऋतुभिः सजूर्व्विधाभिः सजूर्व्विश्वैर्द्देवैः सजूर्द्देवैर्व्वयोनाधै रग्नये त्वा व्वैश्वानरायाश्विनाद्ध्वर्य्यू सादयतामिह त्वा ॥ ( वा० सं० १४-७ )

( २ ) प्राण म्मे पाह्यपान म्मे पाहि व्व्यान म्मे पाहि चक्षुर्म्मऽउर्व्या व्विभाहि श्रोत्र म्मे श्लोकय ॥ ( वा० सं० १४-८ )

( ३ ) अपः पिन्वौषधीर्ज्जिन्व द्विपादव चतुष्पात्पाहि दिवो व्वृष्टिमेरय ॥ ( वा० सं० १४-८ )

( ४ ) मूर्द्धा व्वयः प्रजापतिश्छन्दः क्षत्रं व्वयो मयन्दञ्छन्दो विष्टम्भो व्वयोधिपतिश्छन्दो व्विश्वकर्मा व्वयः परमेष्ठीच्छन्दो वस्तो व्व-

चतस्रः पुरस्तात् ॥ २३ ॥

उपदधाति । तासाञ्च द्वे जङ्घा(१)मात्र्यौ समलोकव्यात्यै द्वे चाध्यर्धे शेषा अध्यर्धा एव ॥ २३ ॥

दक्षिणत उत्तरतः पश्चात् ॥ २४ ॥

अनेन क्रमेणोपधानम् ॥ २४ ॥

दक्षिणाश्रोणेरधि लोकम्पृणाः(२)पूर्ववत् ॥ २५ ॥

उपधीयन्ते ॥ २५ ॥

इति सप्तदशाध्याये अष्टमी कण्डिका ।

तृतीयायाᳬ स्वयमातृण्णामिन्द्राग्नी (३)इति मध्ये ॥ १ ॥

उपदधाति । तृतीयाग्रहणं द्वितीयान्तप्रशस्त्यर्थम् । तदन्तप्रशस्तेश्च प्रयोजनं पुरीषदानादि भवति । द्वे प्रथमायां, तिस्रो मध्यमायामिति च ज्ञापनाय ॥ १ ॥

---

यो व्विवलञ्छन्दो व्वृष्णिर्व्वयो विशाल ञ्छन्दः पुरुषो व्वयस्तन्द्र ञ्छन्दो व्व्याघ्रो व्वयोनाधृष्ट ञ्छन्दः सिᳬहो व्वयश्छदिश्छन्दः पष्ठ्वाड्वयो बृहती च्छन्दऽउक्षा व्वयः ककुप्छन्द ऽऋषभो व्वयः सतोबृहती च्छन्दः ॥ (९)

अनड्वान्व्वयः पङ्क्तिश्छन्दो धेनुर्व्वयो जगतीच्छन्दस्त्र्य विर्व्वयस्त्रिष्टुप्छन्दो दित्यवाड्वयो व्विराट्छन्दः पञ्चाविर्व्वयो गायत्री च्छन्दस्त्रिवत्सो व्वयऽउष्णि कछन्दस्तुर्य्यवाड्वयोनुष्टु प्छन्दः ॥ (वा०सं० १४-१०)

(१) संधेराच्छादनार्थं तु जङ्घादेः परिकल्पनम् ।

तदुक्तं पूरणकृता "चयनयोगात्त्रिग्राहिणी जङ्घामात्र्यध्यर्धा इति ।

(२) लोकम्पृण० ॥ (५४) ता ऽअस्य० ॥ (५५) इन्द्रं विश्वा० ॥ (वा०सं० १२-५६)

(३) इन्द्राग्नी ऽअव्यथमानामिष्टकान्दृᳬहतं युवम् ।

पृष्ठेन द्यावापृथिवीऽअन्तरिक्षञ्च व्विबाधसे ॥ (११)

व्विश्वकर्म्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे व्यचस्वतीम्प्रथस्वतीमन्तरिक्षं यच्छान्तरिक्षन्दृᳬहान्तरिक्षम्मा हिᳬसीः ।

व्विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय । व्वायुष्ट्वाभिपातु मह्या स्वस्त्या च्छर्दिषा शन्तमेन तया देवतयाङ्गिरस्वद्ध्रुवा सीद ॥ (वा०सं० १४-१२)

**अनूकेषु पञ्च दिश्या वैश्वदेवीवद्राज्ञ्यसी(१)ति प्रतिमन्त्रम् ॥ २ ॥**

वत्करणं च रेतःसिग्वेलार्थं दक्षिणामुत्तरेण पञ्चमीत्येवमर्थं च ॥२॥

**विश्वकर्मे(२)ति विश्वज्योतिषमुपरि पूर्वस्याः ॥ ३ ॥**

उपदधाति ॥ ३ ॥

**उत्तमायां च ऋतव्ये नभश्च नभस्यश्चे(३)ति ॥ ४ ॥**

उपधीयेते ॥ ४ ॥

**अवकाः कूर्मवत् ॥ ५ ॥**

भवन्ति ॥ ५ ॥

**इषश्चोर्जश्चे(४)त्यपरे ॥ ६ ॥**

ऋतव्ये एवोपधीयेते । अर्धोत्सेधाश्चैताः, चयनयोगात् ॥ ६ ॥

**पूर्वार्धे प्राणभृतो दशायुर्मे(५) इति प्रतिमन्त्रम् ॥ ७ ॥**

---

( १ ) राज्ञ्यसि प्राची दिग्विराडसि दक्षिणा दिक्सम्राडसि प्रतीची दिक्स्वराडस्युदीची दिगधिपत्न्यसि बृहती दिक् ॥

( वा०सं० १४–१३ )

( २ ) विश्वकर्म्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्ज्योतिष्मतीम् । विश्वस्मै प्राणायापानाय व्यानाय विश्वं ज्ज्योतिर्य्यच्छ । व्वायुष्टेधिपतिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद ॥ (वा०सं०१४–१४

( ३ ) नभश्च नभस्यश्च व्वार्षिकावृतूऽअग्नेरन्तः श्लेषोसि कल्पेतान्द्यावापृथिवी कल्पन्तामाप ऽओषधयः कल्पन्तामग्नयः पृथङ्मम ज्ज्यैष्ठ्याय सव्रताः । ये ऽअग्नयः समनसोन्तराद्यावापृथिवीऽइमे । व्वार्षिकावृतूऽअभिकल्पमाना ऽइन्द्रमिव देवाऽअभिसंविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ॥ ( वा०सं० १४–१५ )

( ४ ) इषश्चोर्जश्च शारदावृतूऽअग्नेरन्तः श्लेषोसि कल्पेतान्द्यावापृथिवी कल्पन्तामापऽओषधयः कल्पन्तामग्नयः पृथङ्मम ज्ज्यैष्ठ्याय सव्रताः ।

ये ऽअग्नयः समनसोन्तरा द्यावापृथिवी इमे ।

शारदावृतूऽअभिकल्पमानाऽइन्द्रमिव देवाऽअभिसंविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ॥ ( वा०सं० १४-१६ )

( ५ ) आयुर्म्मे पाहि, प्राणम्मे पाहि, अपानम्मे पाहि, व्यानम्मे पाहि, चक्षुर्म्मे पाहि, श्रोत्रम्मे पाहि, व्वाचम्मे पिन्व, मनो मे जिन्व, आत्मानम्मे पाहि, ज्ज्योतिर्म्मे यच्छ ॥ ( वा०सं० १४-१७ )

उपदधाति ॥ ७ ॥

**छन्दस्या द्वादश द्वादशाप्ययेषु मा च्छन्द इति प्रतिमन्त्रम् ॥ ८ ॥**

पक्षपुच्छाप्ययेषु छन्दस्या इष्टका द्वादश द्वादश "मा च्छन्द"(१) इति प्रतिमन्त्रम् उपदधाति ॥ ८ ॥

**वालखिल्या लोकं पश्चाच्छिष्ट्वा ॥ ९ ॥**

याःपश्चादुपधीयन्ते ता वालखिल्या लोकस्य पुरस्तात् शिष्ट्वा ॥९॥

**वालखिल्याः सप्त पुरस्तात् ॥ १० ॥**

उपदधाति ॥ १० ॥

**प्राणभृद्भ्यो वापराः ॥ ११ ॥**

वा पूर्वा इति विकल्पः ॥ ११ ॥

**द्वादशभ्योऽपरास्तु ॥ १२ ॥**

द्वादशभ्यस्त्वपरा एव ॥ १२ ॥

**मूर्धासि राडि(२)ति प्रतिमन्त्रम् ॥ १३ ॥**

उपधीयन्ते ॥ १३ ॥

**यजुष्मतीश्च जानन् ॥ १४ ॥**

उपदधाति, "यां कां च यजुष्मतीमिष्टकां विद्यात्तां मध्यमायां चिता उपदध्यात्"( श० ब्रा० ८-७-२-१८ ) इति वचनात् ॥ १४ ॥

---

( १ ) माच्छन्दः प्रमाच्छन्दः प्रतिमाच्छन्दो ऽअस्त्रीवयश्छन्दः पङ्क्तिश्छन्द ऽउष्णिक्छन्दो बृहती च्छन्दोऽनुष्टुप्छन्दो विराट्छन्दो गायत्री च्छन्द स्त्रिष्टुप्छन्दो जगतीच्छन्दः ॥ ( १८ )

पृथिवी च्छन्दोऽन्तरिक्षञ्छन्दो द्यौश्छन्दः समाश्छन्दो नक्षत्राणि च्छन्दो वाक्छन्दो मनश्छन्दः कृषिश्छन्दो हिरण्यञ्छन्दो गौश्छन्दो ऽजाश्छन्दो ऽश्वश्छन्दः ॥ (१९)

अग्निर्देवता वातो देवता सूर्य्यो देवता चन्द्रमा देवता वसवो देवता रुद्रा देवतादित्या देवता मरुतो देवता विश्वेदेवा देवता बृहस्पतिर्देवतेन्द्रो देवता वरुणो देवता ॥ ( वा०सं० १४-२० )

( २ ) मूर्द्धासि राड्ध्रुवासिधरुणा धर्त्र्यसि धरणी ।
आयुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमायत्वा ॥ (२१)
यन्त्री राड्यन्त्र्यसि यमनी ध्रुवासि धरित्री ।
इषे त्वोर्जे त्वा रय्यै त्वा पोषाय त्वा ॥ (वा०सं० १४-२२)

**उत्तराश्रोणेरधि लोकम्पृणाः (१)पूर्ववत् (२) ॥१५॥**

उपधीयन्ते ॥ १५ ॥

इति सप्तदशाध्याये नवमी कण्डिका ।

**चतुर्थ्यामनूकान्तेषु दक्षिणोत्तरे द्वे द्वे ॥ १ ॥**

चतुर्थीग्रहणं तृतीयान्तप्रज्ञापनाय । पुरस्तात्पश्चाच्च जङ्घामात्र्यौ । दक्षिणत उत्तराश्च पद्याः ॥ १ ॥

**पूर्वाभ्यामपराश्चतुर्दश ॥ २ ॥**

ताश्चार्धपद्याः ॥ २ ॥

**ताभ्यः षट् ॥ ३ ॥**

ताभ्यो ऽपराः षट् पद्याः ॥ ३ ॥

**पूर्व(३)दक्षिणेऽवान्तरदेश एके ॥ ४ ॥**

चतुर्दश षट्चोपदधाति ॥ ४ ॥

**उत्तरा(४) वा दक्षिणाभ्याम् ॥ ५ ॥**

उपधीयन्ते । लाघविकेन सताऽऽचार्येणैवमुपदिष्टाः ॥ ५ ॥

उपधानक्रमः पुनरिहोच्यते—

**उत्तरां पूर्वयोराशुस्त्रिवृदि(५)ति ॥ ६ ॥**

---

( १ ) लोकम्पृण० ॥ ( ५४ ) ता ऽअस्य० ॥ ( ५५ ) इन्द्रं विश्वा० ॥ ( वा०सं० १२-५६ )

( २ ) पूर्ववत् प्रथमाचितिवदित्यर्थः ॥

( ३ ) एताश्चतुर्दश षट्च पूर्वदक्षिणेऽवान्तरदेशे आत्मन आग्नेयकोणे कोणोपधीयमानजङ्घामात्रीतोऽन्तरा उपदधाति । तत्र चैवम्, दक्षिणांसोपहितजङ्घामात्र्याः पश्चात्संलग्ना वा अध्यर्धा तस्या उत्तरतो नवार्धपद्याः प्रागायताः प्राग्लक्षणाश्चोपधेयाः। द्वितीयमध्यर्धां जङ्घामात्रीं चोत्तरतः पश्चार्धपद्याः उदगायता उदग्लक्षणा उपधेयाः । तदनन्तरं तत्संलग्नाः षट् च पद्या उपधेयाः । ताश्च नवानामधश्चतस्रः प्राग्लक्षणाः पञ्चानामुत्तरतो द्वे उदग्लक्षणे इति ।

( ४ ) अथवा एताश्चतुर्दश षट्च दक्षिणोत्तराभ्यां दक्षिणानूकान्तोपहिताभ्यां दक्षिणोत्तराभ्यां पद्याभ्यामुत्तरा उपदधाति । अनूकमभितोऽर्धाधिकया तत्संलग्ना एव । तयोरुत्तराश्चतुर्दश । तासामुत्तराः षट् उदगायताः ।

( ५ ) आशुस्त्रिवृत् ॥ ( २३ )

उपदधाति ॥ ६ ॥

दक्षिणामपरयोर्धरुण एकविꣳश(१) इति ॥ ७ ॥

दक्षिणां दक्षिणयोर्भान्तः पञ्चदश(२) इति ॥ ८ ॥

दक्षिणामुत्तरयोर्व्योमा सप्तदश(३) इति ॥ ९ ॥

चतुर्दश प्रतिमन्त्रं प्रतूर्त्तिरष्टादश(४) इति ॥ १० ॥
उपदधाति ॥ १० ॥

दक्षिणां पूर्वयोरग्नेर्भाग(५) इति ॥ ११ ॥

उत्तरामपरयोर्मित्रस्य भाग(६) इति ॥ १२ ॥

उत्तरां दक्षिणयोर्नृचक्षसां भाग(७) इति ॥ १३ ॥

उत्तरामुत्तरयोरिन्द्रस्य भाग(८) इति ॥ १४ ॥

षट् प्रतिमन्त्रं वसूनां भाग इति ॥ १५ ॥
षडुपदधाति "वसूनां भाग"(९) इति प्रतिमन्त्रम् ॥ १५ ॥

---

(१) धरुण ऽएकविꣳशः ॥ (२३)

(२) भान्तः पञ्चदशः ॥ (२३)

(३) व्योमा सप्तदशः ॥ (२३)

(४) प्रतूर्त्तिरष्टादशस्तपो नवदशोभीवर्त्तः सविꣳशो व्वर्च्चो द्वाविꣳशः सम्भरणस्त्रयोविꣳशो योनिश्चतुर्व्विꣳशो गर्ब्भाः पञ्चविꣳशऽओजस्त्रिणवः क्रतुरेकत्रिꣳशः प्रतिष्ठा त्रयस्त्रिꣳशो व्ब्रध्नस्य व्विष्टपञ्चतुस्त्रिꣳशो नाकः षट्त्रिꣳशो व्विवर्त्तोष्टाचत्त्वारिꣳशो धर्त्रश्चतुष्टोमः ॥
(वा०सं० १४-२३)

(५) अग्ग्नेर्ब्भागोसि दीक्षायाऽआधिपत्त्यम्ब्रह्म स्पृत न्त्रिवृत्स्तोमः ॥ (२४)

(६) मित्रस्य भागोसि व्वरुणस्याधिपत्त्य न्दिवोव्वृष्टिर्व्वात स्पृत ऽएकविꣳश स्तोमः ॥ (२४)

(७) नृचक्षसा म्भागोसि धातुराधिपत्त्य ञ्जनित्त्रꣳस्पृत ꣳ सप्तदश स्तोमः ॥ (२४)

(८) इन्द्रस्य भागोसि व्विष्णोराधिपत्त्य ङ्क्षत्रꣳ स्पृत म्पञ्चदश स्तोमः ॥ (वा०सं० १४-२४)

(९) व्वसूनाम्भागोसि रुद्राणामाधिपत्त्यञ्चतुष्पात्स्पृतञ्चतुर्विꣳश स्तोमः, आदित्यानाम्भागोसिमरुतामाधिपत्त्यङ्गर्भा स्पृताः पञ्चविꣳश

**ऋतव्ये सहश्च सहस्यश्चे(१)ति ॥ १६ ॥**

उपदधाति ॥ १६ ॥

**(२)रेतःसिग्वेलायां च सप्तदश सर्वतो नव दक्षिणेनानूकꣳ सृष्टीरेकया स्तुवते(३)ति प्रतिमन्त्रम् ॥ १७ ॥**

सृष्टीरितीष्टकानाम । तत्र च दक्षिणतोऽनूकयमभितोऽर्धपद्ये ॥ १७ ॥

स्तोमः, अदित्यै भागोसि पूष्ण आधिपत्यमोज स्पृत न्त्रिणवस्तोमः, देवस्य सवितुर्भागोऽसि बृहस्पतेराधिपत्यꣳसमीचोर्दिश स्पृताश्चतुष्टोम स्तोमः ॥ ( २५ )

यवाना म्भागोस्ययवानामाधिपत्य म्प्रजा स्पृताश्चतुश्चत्वारिꣳश स्तोमः, ऋभूणाम्भागोसि व्विश्वेषा न्देवानामाधिपत्यं म्भूतꣳस्पृत न्त्रयस्त्रिꣳ श स्तोमः ॥ ( वा० सं० १५-२६ )

( १ ) सहश्च सहस्यश्च हैमन्तिकावृतू ऽअग्नेरन्तः श्लेषोसिकल्पेता न्द्यावापृथिवी कल्पन्तामाप ऽओषधयः कल्पन्तामग्नयः पृथङ्ममज्यैष्ठ्याय सव्रताः ।

ये ऽअग्नयः समनसोन्तरा द्यावापृथिवी ऽइमे ।

हैमन्तिकावृतू ऽअभिकल्पमाना ऽइन्द्रमिव देवा ऽअभिसंव्विशन्तु तया देव तयाङ्गिरस्वद्ध्रुवे सीदतम् ॥ ( वा०सं० १४-२७ )

( २ ) सर्वतः सर्वासु दिक्षु सृष्टिसंज्ञका उपदधाति। तासां मध्ये प्रागनूकं दक्षिणेन नव उपदधाति, अर्थादष्टावुत्तरेण। तेन प्रतिदिशं चतस्रश्चतस्रः, अनूकमभितो द्वे द्वे। दक्षिणतः पञ्च, मध्यमानूके पद्या, तामभितो द्वेऽर्धपद्ये, ते अभितो द्वे पद्ये, एवं पञ्चेति।

( ३ ) एकयास्तुवत प्रजा ऽअधीयन्त प्रजापतिरधिपतिरासीत्तिसृभिरस्तुवत ब्रह्मासृज्यत ब्रह्मणस्पतिरधिपतिरासीत्पञ्चभिरस्तुवत भूतान्यसृज्यन्त भूतानाम्पतिरधिपतिरासीत्सप्तभिरस्तुवत सप्तऽऋषयोसृज्यन्त धाताधिपतिरासीत् ॥ ( २८ )

नवभिरस्तुवत पितरोसृज्यन्तादितिरधिपत्न्यासीदेकादशभिरस्तुवतऽऋतवोसृज्यन्तार्त्तवा ऽअधिपतय ऽआसँस्त्रयोदशभिरस्तुवत मासा ऽअसृज्यन्तसंव्वत्सरोधिपतिरासीत्पञ्चदशभिरस्तुवत क्षत्रमसृज्यतेन्द्रोधिपतिरासीत्सप्तदशभिरस्तुवत ग्राम्याः पशवोसृज्यन्त बृहस्पतिरधिपतिरासीत् ॥ ( २९ )

नवदशभिरस्तुवत शूद्रार्य्यावसृज्येतामहोरात्रे ऽअधिपत्नी ऽआस्तामेकविꣳशत्यास्तुवतैकशफाः पशवोसृज्यन्त व्वरुणोधिपति·

उत्तराᳲसादधि लोकम्पृणाः(१)पूर्ववत् ॥ १८ ॥

इति सप्तदशाध्याये दशमी कण्डिका ।

(२)पञ्चस्यामन्तेष्वाश्विनीवदसपत्नाः ॥ १ ॥

इष्टका उपधीयन्ते । अन्तग्रहणं रेतःसिग्वेलाव्युदासार्थम् । आश्विनीवदिति । द्वितीये लोके उपधानं चतसृणामपि ॥ १ ॥

दक्षिणयोररत्न्यन्तरम् ॥ २ ॥

पञ्चमी च पद्या भवति प्राग्लक्षणा । आश्विनीवदित्यर्थपद्ये मा भूतामिति ॥ २ ॥

अग्नेजातानि(३)ति प्रतिमन्त्रम् ॥ ३ ॥

---

रासीत्त्रयोविᳲशत्यास्तुवतक्षुद्राः पशवोसृज्ज्यन्त पूषाधिपतिरासीत्पञ्चविᳲशत्यास्तुवतारण्याः पशवोसृज्ज्यन्त व्वायुरधिपतिरासीत्सप्तविᳲशत्यास्तुवत द्यावापृथिवी व्व्यैतां वसवो रुद्रा ऽआदित्या ऽअनुव्व्यायँस्त ऽएवाधिपतयऽआसन् ॥ ( ३० )

नवविᳲशत्यास्तुवत व्वनस्पतयोसृज्ज्यन्त सोमोधिपतिरासीदेकत्रिᳲशतास्तुवत प्रजाऽअसृज्ज्यन्त यवाश्चायवाश्चाधिपतयऽआसंस्त्रयस्त्रिᳲशतास्तुवत भूतान्यशाम्यन्प्रजापतिः परमेष्ठ्यधिपतिरासीत् ॥

( वा०सं० १४-३१ )

( १ ) लोक म्पृण० ॥ ( ३१ ) ता ऽअस्य० ॥ ( ३१ ) इन्द्रं व्विश्वा० ॥

( वा०सं० १४-३१ )

( २ ) अन्तेष्वनूकान्तेषु । पूर्वाऽसपत्नां प्रागनूकमुत्तरेण द्वितीये लोके, अपरामनूकं दक्षिणेन द्वितीये लोके, दक्षिणां तिर्यगनूकं पूर्वेण द्वितीये लोके, उत्तराऽसपत्नां तिर्यगनूकमपरेण द्वितीये लोके उपदधाति ।

( ३ ) अग्ने जातान्प्रणुदानः सपत्नान्प्रत्यजातान्नुदजातवेदः ।

अधि नो ब्रूहि सुमनाऽअहेडँस्तव स्याम शर्म्मँस्त्रिवरूथऽउद्भौ ॥(१)

इति मन्त्रेण पुरस्तादुपधानम् ।

सहसा जातान्प्रणुदानः सपत्नान्प्रत्यजाता ञ्जातवेदो नुदस्व ।

अधिनोब्रूहि सुमनस्यमानो व्वयᳫ स्याम प्रणुदानः सपत्नान् ॥ (२)

इति मन्त्रेण पश्चादुपधानम् ।

षोडशी स्तोम ऽओजो द्रविणम् ॥ इति मन्त्रेण दक्षिणत उपधानम् ।

चतुश्चत्वारिᳲशस्तोमो व्वर्चो द्रविणम् । इति मन्त्रेण उत्तरत उपधानम् ।

अग्नेः पुरीष मस्यप्सो नाम ता न्त्वा व्विश्श्वे ऽअभि गृणन्तु देवाः ।

स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणायजस्व ॥

( वा० सं० १५-३ ) इति च मध्ये उपधानम् ।

असपत्नोपधानम् ॥ ३ ॥

**पश्चिमा द्वितीया ॥ ४ ॥**

उपधीयते, "पुरस्तादुपधाय पश्चादुपदधाति" इति वचनात् ॥ ४ ॥

**विराजो दश दश प्रतिदिशं पुरस्तात्प्रथममेव-च्छन्द(१) इति प्रतिमन्त्रम् ॥ ५ ॥**

उपदधाति । बहिर्विराजत्वे न्न सर्वाः पद्या भवन्ति ॥ ५ ॥

**गायत्र्यसपत्ना गणमध्येऽसम्भवात् ॥ ६ ॥**

गायत्र्य इष्टका असपत्नाश्च विराड्गणस्य या इष्टकास्तासां मध्ये भवन्ति । न हि विराड्गणस्य बहिः सम्भवः ॥ ६ ॥

**उष्णिगभ्यो वाऽपरा अर्धपद्या उपधाय ॥ ७ ॥**

उष्णिहामत्रानुपहितत्वाच्चल्लोकस्यापरा अर्धपद्या विराजो भवन्ति ॥७॥

**असपत्ना स्पृशोऽन्यत्रोन्तराः ॥ ८ ॥**

अन्यत्र विराजः असपत्ना संलग्ना अन्तरा उपधीयन्ते ॥ ८ ॥

**सर्वतो(२)ऽषाढावेलाया॒ स्तोमभागा रश्मिना स-त्याये(३)ति प्रतिमन्त्रम् ॥ ९ ॥**

---

(१) एवश्छन्दो वरिवश्छन्दः शम्भूश्छन्दः परिभूश्छन्द ऽआच्छ-च्छन्दो मनश्छन्दो व्यचश्छन्दः सिन्धुश्छन्दः समुद्रश्छन्दः सरिर ञ्छ-न्दः ककुप्छन्दस्त्रिककुप्छन्दः काव्य ञ्छन्दो ऽअङ्कुपञ्छन्दोक्षरपङ्क्तिश्छ-न्दः पदपङ्क्तिश्छन्दोविष्टारपङ्क्तिश्छन्दः क्षुरोभ्रजश्छन्दः ॥ (४)

आच्छच्छन्दः प्रच्छच्छन्दः संयच्छन्दोवियच्छन्दो बृहच्छन्दो र-थन्तर ञ्छन्दो निकायश्छन्दो विवधश्छन्दो गिरश्छन्दो भ्रजश्छन्दः सꣳस्तुप्छन्दोनुष्टुप्छन्द ऽएवश्छन्दो वरिवश्छन्दो वयश्छन्दो वय-स्कृच्छन्दः विष्पर्धाश्छन्दो विशाल ञ्छन्दश्छदिश्छन्दो दूरोहण ञ्छन्द स्तन्द्र ञ्छन्दो अङ्काङ्कञ्छन्दः ॥ (वा० सं० १५–५) एतन्मन्त्रद्वयगत-छन्दःशब्दान्तदशकेन भागेन प्रतिभागं पूर्वादिक्रमेणोपधानं कर्तव्यम् ।

(२) सर्वतः सर्वासु दिक्षु ।

(३) रश्मिना सत्याय सत्य ञ्जिन्व प्रेतिना धर्म्मणा धर्म्म ञ्जिन्वा-न्वित्या दिवा दिव ञ्जिन्व सन्धिनान्तरिक्षेणान्तरिक्ष ञ्जिन्व प्रतिधिना पृथिव्या पृथिवी ञ्जिन्व विष्टम्भेन वृष्ट्या वृष्टि ञ्जिन्व प्रवयाह्नाह-र्जिन्वानुया रात्र्या रात्री ञ्जिन्वोशिजा वसुभ्यो वसू ञ्जिन्व प्रकेतेना-दित्येभ्य ऽआदित्याञ्जिन्व ॥ (६)

उपधीयन्ते ॥ ९ ॥

**(१)पञ्चदश दक्षिणेनानूकम् ॥ १० ॥**

तत्र चानूकमभितो(२)ऽर्धपद्य ॥ १० ॥

**वेषश्रीः क्षत्राय क्षत्रं जिन्वेति त्रिꣳशत्तमीमेके ॥ ११ ॥**

उपदधाति, एके नेति ॥ ११ ॥

**पुरीषमास्वावपति मन्त्रेण वा तापश्चितस्य तूष्णीꣳ श्रुतेः ॥ १२ ॥**

आसु स्तोमभागासु पुरीषमावपति मन्त्रेण । कुत एतत् ? तापश्चितस्य तूष्णीꣳ श्रुतेः । तत्र हि श्रूयते-"तूष्णीं मासꣳ स्तोमभागा पुरीषमभिहरन्ति"( श०ब्रा०१०-२-५-१३ ) इति । तेनात्र मन्त्रवदिति गम्यते । एवं प्राप्ते वाशब्देन पुनर्व्यावर्त्यते । न वा मन्त्रेण पुरीषावापः । न ह्यत्र मन्त्रो विहित इति ।

ननु तापश्चिते तूष्णीमित्युक्तत्वात् इह मन्त्रो गम्यते, नेत्युच्यते, 'तूष्णीम्' इत्यनुवादोऽयम् । मासो हि अत्र विधीयते । तूष्णीं मासꣳ स्तोमभागा पुरीषमभिहरन्तीति मासोऽत्र विधीयते । यदि मन्त्रनिवृत्तिर्विधीयेत, वाक्यं भिद्येत । तस्मात्तूष्णीमेवेह पुरीषावापः ॥ १२ ॥

इति सप्तदशाध्याये एकादशी कण्डिका ।

---

तन्तुना रायस्पोषेण रायस्पोष जिन्व सꣳ सर्पेण श्रुताय श्रुत जिन्वडे नौषधीभिरोषधीर्जिन्वोत्तमेन तनूभिस्तनूर्जिन्व वयोधसाधीतेनाधीत जिन्वाभिजिता तेजसा तेजो जिन्व ॥ ( ७ )

प्रतिपदसि प्रतिपदे त्वानुपदस्यनुपदे त्वा सम्पदसि सम्पदे त्वा तेजोसि तेजसे त्वा ॥ ( ८ )

त्रिवृदसि त्रिवृते त्वा प्रवृदसि प्रवृते त्वा विवृदसि विवृते त्वा सवृदसि सवृते त्वा क्रमोस्या क्रमाय त्वा सङ्क्रमोसि सङ्क्रमाय त्वो त्क्रमोस्युत्क्रमाय त्वोत्क्रान्तिरस्युत्क्रान्त्यै त्वाधिपतिनोर्जोर्जं जिन्व ॥ (वा०सं०१५-९)

(१) अत्र विभागः पूरणकृता कृतः 'अष्टौ पुरस्तात्स्तोमभागाः पश्चाच्च दक्षिणतः सप्तोत्तरतः शिष्टा' इति ।

(२) समानत्वाय सर्वास्ता अर्धपद्या भवन्ति तु ।
अन्यथा त्वर्धपद्ये द्वे पादोने द्वे च पद्यकाः ॥
षड्योगाः स्युर्विराजोऽत्रोष्णिहस्तिस्रोऽर्धपद्यकाः ॥

**नाकसदोऽनुकेषु पूर्ववर्जमृतव्यावेलायामाश्वि-
नीवद्राड्यसी(१)ति प्रतिमन्त्रम् ॥ १ ॥**

नाकसद इष्टकाः अनूकेपूपधीयन्ते । पूर्ववर्जमृतव्यावेलायामाश्विनीवदिति दक्षिणामुत्तरेण पञ्चमी अर्धपद्ये चिते इति च गम्यते । सर्वाश्चैता अर्धोत्सेधाः, पूर्वा तु द्वितीये लोके ॥ १ ॥

**पुरीषमोप्योपर्ययं पुर(२) इति पञ्चचूडाः
प्रतिमन्त्रम् ॥ २ ॥**

उपदधाति । एता अप्यर्धोत्सेधाः । पुरीषावापश्चोर्ध्वं नाकसत्सु ॥२॥

---

( १ ) राड्यसि प्राची दिग्वसवस्ते देवाऽअधिपतयोऽग्निर्हेतीना म्प्रतिधर्त्ता त्रिवृत्त्वा स्तोमः पृथिव्याᳬश्रयत्वाज्ज्यमुक्थमव्यथायै स्तभ्नातु रथन्तरᳬ सामप्रतिष्ठित्या ऽअन्तरिक्षऽऋषयस्त्वा प्रथमजा देवेषु दिवोमात्रया व्वरिम्णा प्रथन्तु व्विधर्त्ता चायमधिपतिश्चते त्वा सर्वे संव्विदाना नाकस्य पृष्ठे स्वर्ग्गे लोके यजमान ञ्च सादयन्तु ॥(१०)

व्विराडसि दक्षिणा दिग्रुद्रास्ते देवाऽअधिपतयऽइन्द्रो हेतीना म्प्रतिधर्त्ता पञ्चदशस्त्वा स्तोमः पृथिव्याᳬ श्रयतु प्प्रउगमुक्थमव्यथायै स्तभ्नातु बृहत्साम प्प्रतिष्ठित्या० ॥ (११)

सम्म्राडसि प्प्रतीची दिगादित्यास्ते देवा ऽअधिपतयो व्वरुणो हेतीना म्प्रतिधर्त्ता सप्तदशस्त्वा स्तोमः पृथिव्याᳬ श्रयतु मरुत्वतीयमुक्थमव्यथायै स्तभ्नातु व्वैरूपᳬ साम प्प्रतिष्ठित्या० ॥ ( १२ )

स्वराडस्युदीची दिङ्मरुतस्ते देवा ऽअधिपतयः सोमो हेतीना म्प्रतिधर्त्तैकविᳬ शस्त्वा स्तोमः पृथिव्याᳬ श्रयतु निष्ष्केवल्यमुक्थमव्यथायै स्तभ्नातु व्वैराजᳬ साम प्प्रतिष्ठित्या० ॥ ( १३ )

अधिपत्न्यसि बृहती दिग्विश्वे ते देवा ऽअधिपतयो बृहस्पतिर्हेतीना म्प्रतिधर्त्ता त्रिणवत्रयस्त्रिᳬ शौत्वा स्तोमौ पृथिव्याᳬ श्रयतां वैश्वदेवाग्निमारुते ऽउक्थे ऽअव्यथायै स्तभ्नीताᳬ शाकररैवते सामनीप्प्रतिष्ठित्या० ॥ (वा०सं१५-१४)

( २ ) अय म्पुरो हरिकेशः सूर्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानीग्ग्रामण्यौ । पुञ्जिकस्थला च क्रतुस्थला चाप्सरसौ दङ्क्ष्णवः पशवो हेतिः पौरुषेयो व्वधः प्प्रहेतिस्तेभ्यो नमो ऽअस्तु ते नोवन्तु ते नोमृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टितमेषा ञ्जम्भे दध्मः ॥ (१५)

अय न्दक्षिणा व्विश्वकर्म्मा तस्य रथस्वनश्च रथे चित्रश्च सेनानी-

प्रतिदिशं यथालिङ्गम् ॥ ३ ॥

उपधानम् ॥ ३ ॥

पश्चिमोत्तमा ॥ ४ ॥

उपधीयते ॥ ४ ॥

छन्दस्यास्तिस्रस्तिस्रोऽनूकान्तेषु पुरस्ताद्गायत्रीरग्नि-
र्मूर्धेति प्रत्यृचम् ॥ ५ ॥

छन्दस्या इष्टकास्तिस्रस्तिस्रोऽनूकान्तेषु उपधीयन्ते, पुरस्ताद्गायत्री उपदधाति "अग्निर्मूर्धा"(१) इति प्रत्यृचम् ॥ ५ ॥

उत्तराश्च ॥ ६ ॥

चशब्दात्प्रत्यृचम्(२) ॥ ६ ॥

पुरस्तात्त्रिष्टुभो रेतःसिग्वेलायां भुवो यज्ञस्ये(३)ति ॥७॥

एभिर्मन्त्रैः प्रतिमन्त्रम् ॥ ७ ॥

---

ग्रामण्यौ। मेनका च सहजन्याचाप्सरसौ यातुधाना हेतीरक्षाᳬंसि प्रहेतिस्तेभ्यो० ॥ (१६)

अय म्पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चासमरथश्च सेनानीग्रामण्यौ। प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसौ व्याघ्रा हेतिः सर्पाः प्रहेतिस्तेभ्यो० ॥ (१७)

अयमुत्तरात्संयद्वसुस्तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानीग्रामण्यौ।

विश्वाची च घृताची चाप्सरसावापो हेतिर्वातः प्रहेतिस्तेभ्यो० ॥ (१८)

अयमुपर्य्यर्वाग्वसुस्तस्य सेनजिच्च सुषेणश्च सेनानीग्रामण्यौ।

उर्व्वशी च पूर्व्वचित्तिश्चाप्सरसाववस्फूर्ज्जन्हे तिर्विद्युत्प्रहेतिस्तेभ्यो० ॥ (वा० सं० १५-१९) अत्र 'अयं पश्चादिति मन्त्रेण पश्चिमा मध्यपठितत्वेऽपि वचनात्सर्वासामन्त्ये उपधेयेति बोध्यम्।

(१) अग्निर्म्मूर्द्धा दिवः ककुत्पतिः पृथिव्या ऽअयम्।
अपाᳬं रेताᳬंसि जिन्वति (२०)

अयमग्निः सहस्त्रिणो वाजस्य शतिनस्पतिः।
मूर्द्धा कवी रयीणाम् ॥ (२१)

त्वामग्ने पुष्करादध्यथर्वा निरमन्थत।
मूर्ध्नो विश्वस्य वाघतः ॥ (वा० सं० १५-२२)

(२) तैरेव 'अग्निर्मूर्धा' इत्यादिमन्त्रैस्त्रिभिः प्रागुक्तैः।

(३) भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः।

जगतीश्च पश्चादयमिहे(१)ति ॥ ८ ॥

चशब्दाद्धेतःसिग्वेलायामेव ॥ ८ ॥

अपरास्ताभ्योऽनुष्टुभः सखायः सं व (२)इति ॥ ९ ॥

एभिर्मन्त्रैर्जगतीभ्योऽपरा अनुष्टुभः ॥ ९ ॥

अषाढावेलायाः पुरस्ताद् बृहतीरेना व (३)इति ॥ १० ॥

---

दिवि मूर्द्धा नन्दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम् ॥ (२३)
अबोद्ध्यग्निः समिधा जनानां प्रतिधेनुमिवायतीमुषासम् ।
यह्वाऽइव प्रवयामुज्जिहानाः प्रभानवः सिस्रते नाकमच्छ ॥ (२४)
अवोचाम कवये मेद्ध्याय वचो वन्दारु वृषभाय वृष्णे ।
गविष्ठिरो नमसा स्तोममग्नौ दिवीवरुक्ममुरुव्यञ्चमश्रेत् ।
( वा० सं० १५–२५ )

(१) अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठोऽअद्ध्वरेष्वीड्यः ।
यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे ॥ (२६)
जनस्य गोपाऽअजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे ।
घृतप्रतीको बृहता दिविस्पृशा द्युमद्विभाति भरतेभ्यः शुचिः ॥२७॥
त्वामग्नेऽअङ्गिरसो गुहा हितमन्वविन्दञ्छिश्रियाणं वनेवने ।
स जायसे मथ्यमानः सहो महत्त्वामाहुः सहसस्पुत्रमङ्गिरः ॥
( वा०सं० १५–२८ )

( २ ) सखायः सं वः सम्यञ्चमिषꣳ स्तोमं चाग्नये ।
वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते ॥ ( २९ )
सꣳसमिद्युवसे वृषन्नग्ने विश्वान्यर्य्यऽआ । इडस्पदे समिद्ध्यसे
स नो वसून्याभर ॥ ( ३० )
त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः ।
शोचिष्केशम्पुरुप्रियाग्ने हव्याय वोढवे ॥ ( वा० सं० १५-३१ )
( ३ ) एना वो ऽअग्निं नमसोर्जो नपातमाहुवे ।
प्रियञ्चेतिष्ठमरतिꣳ स्वद्ध्वरं विश्वस्य दूतममृतम् ॥ ( ३२ )
विश्वस्य दूतममृतं विश्वस्य दूतममृतम् ।
स योयते ऽअरुषा विश्वभोजसा स दुद्रवत्स्वाहुतः ॥ ( ३३ )
स दुद्रवत्स्वाहुतः स दुद्रवत्स्वाहुतः ।
सुब्रह्मा यज्ञः सुशमी वसूनां देवꣳ राधो जनानाम् ॥
( वा० सं० १५–३४ )

भद्रो न इति ककुभस्ताभ्यो बृहत्यन्तरश्रुतेर्मन्त्रक्रमेण॥११॥

"भद्रो न" (१)इत्येभिर्मन्त्रैर्बृहतीनां पुरस्तान्मन्त्रक्रमेण ककुभ उपदधाति । कुत एतदिति चेत् ? बृहतीनामन्तरालश्रुतेः । "सोऽन्तरेण त्रिष्टुभश्च ककुभश्च बृहतीरुपदधाति" (श० ब्रा० ८-६-२-१०) इति वचनात् ॥ ११ ॥

उद्धृतान्यपकृष्येच्छन् ॥ १२ ॥

एवं हि श्रूयते–"अथैतासां ककुभां चत्वारि चत्वार्यक्षराण्यादायातिच्छन्दस्युपदधाति । सा सातिच्छन्दा एव भवति गायत्र्य इतराः सम्पद्यन्ते" (श० ब्रा०८-६-२-३) इति । एवं च सत्यपकर्षः प्राप्नोति । तथा च 'गायत्र्य इतराः सम्पद्यन्त' इति । एवं स्थिते उच्यते—'इच्छन्नपकृष्य' इति । ककुप्छन्दस्य छन्दोविषयत्वाच्चतुर्ष्वक्षरेषूद्धृतेषु ककुप्त्वमेव हीयते । अपूर्णा च ऋगर्थाभिधानसमर्था न भवति । तथा सत्यदृष्टार्थता स्यात् । न चासौ न्याय्या । अपि च चतुर्णामक्षराणामतिच्छन्दसि प्रत्यवधानेनार्थवद्वाक्यं सञ्जातम् । तदूनानां ककुभां प्रयोग इति निःप्रमाणकमेव स्यात् ।

ननु च श्रूयते "गायत्र्य इतराः सम्पद्यन्ते" इति, न, अविधायकत्वात् । न ह्ययं विधिर्वर्त्तमानापदेशादितरसंस्तत्र इति । तस्मादनपकृष्यैवेति ॥ १२ ॥

अपरा गायत्रीभ्य उष्णिहोऽग्ने वाजस्ये(२)ति ॥ १३ ॥

---

( १ ) भद्द्रो नो अग्निराहुतो भद्द्रा रातिः सुभग भद्द्रोऽअद्ध्वरः । भद्द्राऽउत प्रशस्तयः ॥ (३८)

भद्द्रा ऽउत प्प्रशस्तयो भद्द्रं म्मनः कृणुष्व व्वृत्रतूर्य्ये ।
येना समत्सु सासहः ॥ ( ३९॥ )
येना समत्सु सासहोव स्थिरा तनुहि भूरिशर्द्धताम् ।
व्वनेमा ते ऽअभिष्टिभिः ॥ ( वा० सं०१ ५–४० )

( २ ) अग्ने व्वाजस्य गोमत ऽईशानः सहसो यहो ।
अस्मे धेहि जातवेदो महि श्रवः ॥ ( ३५ )
स ऽइधानो व्वसुष्क्कविरग्निरीडेन्न्यो गिरा ।
रेवदस्मब्भ्यं म्पुर्व्वणीक दीदिहि ॥ ( ३६ )
क्षपो राजन्नुत त्मनाग्ग्ने व्वस्तोरुतोषसः ।
स तिग्ग्मजम्भ रक्षसो दह प्प्रति ॥ ( वा० सं० १५–३७ )

प्रतिमन्त्रम् उपदधाति ॥ १३ ॥

इदानीं ककुभामुपधानम्—

**अनूकान्ते दक्षिणे पङ्क्तीरग्निं तामि(१)ति ॥ १४ ॥**

उपदधाति ॥ १४ ॥

**उत्तरे पदपङ्क्तीरग्ने तमद्ये(२)ति ॥ १५ ॥**

उपदधाति ॥ १५ ॥

**पुरीषवत्याः पूर्वामतिच्छन्दसं प्राच्यौ पुरीषसहिते भद्रा रातिर्वृत्रतूर्येऽवास्थिराग्निꣳ होतारमि(३)ति ॥ १६ ॥**

दक्षिणयोरुत्तरा ऽसपत्ना पुरीषवती। तस्यां हि पुरीषं विहितं 'पुरीषसहिते' इति। 'प्राच्यौ' इति प्राग्लक्षणे चैते भवतः। "भद्राऽऽतिः" इत्येवमादिना मन्त्रेण पुरीषवत्याः पूर्वामतिच्छन्दसमुपदधाति। भद्रारातिः इत्येतानि चत्वारि चत्वार्यक्षराणीति ॥ १६ ॥

---

( १ ) अग्निन्त मन्न्ये यो व्वसुरस्तं य्यं॒ य्यन्ति धेनवः।
अस्तमर्व्वन्त ऽआशवोस्त न्नित्यासो व्वाजिन ऽइषꣳ
स्तोतृभ्य ऽआभर ॥ ( ४१ )
सो ऽअग्निर्य्यो व्वसुर्गृणे सं य्यमायन्ति धेनवः।
समर्व्वन्तो रघुद्रुवः सꣳसुजातासः सूरय ऽइषꣳस्तोतृभ्य ऽआभर॥(४२)
उभे सुश्चन्द्र सर्प्पिषो दर्वी श्रीणीष आसनि।
उतो न ऽउत्पुपूर्य्या ऽउक्त्थेषु शवसस्पत ऽइषꣳस्तोतृभ्य ऽआभर ॥
( वा० सं० १५–४३ )

( २ ) अग्ने तमद्याश्वन्न स्तोमैः क्रतुन्न भद्रꣳ हृदिस्पृशम्।
ऋद्ध्यामा तऽ ओहैः ॥ ( ४४ )
अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः।
रथीर्ऋतस्य बृहतो बभूथ ॥ ( ४५ )
एभिर्नो ऽअर्क्कैर्भवा नो ऽअर्व्वाङ्क्स्वर्ण्णज्ज्योतिः।
अग्ने व्विश्वेभिः सुमना अनीकैः ॥ ( वा० सं० १५–४६ )

( ३ ) भद्रारातिः, वृत्रतूर्ये, अवस्थिरा इति ककुभां ( १५, ३८–४० ) चतुश्चतुरक्षरसहितया अग्निꣳ होतार मन्न्ये दास्वन्तं व्वसुꣳ सूनुꣳ सहसो जातवेदसं व्विप्रन्न जातवेदसम्।
य ऊर्द्ध्वया स्वद्ध्वरो देवो देवाच्या कृपा।
घृतस्य व्विभ्राष्टि मनुव्वष्टि शोचिषाजुह्वानस्य सर्प्पिषः॥ वा०सं०१५–४७)
इति ऋचा। "चत्वारि चत्वार्यक्षराणि" ( श० ब्रा० ८–६–२–३ ) इति वचनात्।

**अग्ने त्व(१)मित्यनूकान्तेऽपरे द्विपदाः ॥ १७ ॥**

उपधीयन्ते । सर्वच्छन्दस्यास्त्वभितोऽर्धपद्ये । उष्णिहस्तु तिस्र-स्तिर्यगर्धपद्याः ॥ १७ ॥

**मध्येऽष्टेष्टकं गार्हपत्यम् ॥ १८ ॥**

उपदधाति । 'अष्टेष्टकम्' इत्युक्तत्वात् अधिका न भवन्ति । 'गार्हप-त्यम्' इति च नामधेयात् तद्वदेवोपधानमष्टानामपि । तथा चाह—"तं वा एतैरेव यजुर्भिरेतयावृता चिनोति" (श० ब्रा० ८-६-३-७) इति । इयांस्तु विशेषोऽर्धबृहतीनां स्थानेऽर्धपद्याः ॥ १८ ॥

**पुनश्चितिं चोपरि तद्वद्येन ऋषय इति प्रत्यृचम् ॥ १९ ॥**

तस्यैव गार्हपत्यस्योपरि तद्वदेव पुनश्चितिमुपदधाति । इयांस्तु वि-शेषः "येन ऋषयः" (२)इति प्रत्यृचम् । अस्मिंश्च पक्षे अर्धोत्सेधा इष्टका भवन्त्युत्सेधायोगात् ॥ १९ ॥

---

(१) अग्ने त्वं न्नो ऽअन्तम ऽउत त्राता शिवो भवा व्वरूथ्यः ।
व्वसुरग्निर्व्वसुश्रवा ऽअच्छा नक्षि द्युमत्तमꣳ रयिन्दाः ।
त न्त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥
(वा० सं० १५-४८)

(२) येनऽऋषयस्तपसा सत्रमायन्निन्धानाऽअग्निꣳस्वराभरन्तः ।
तस्मिन्नहन्निदधे नाकेऽअग्निं यमाहुर्म्मनवस्तीर्णबर्हिषम् ॥ (४९)
त म्पत्नीभिरनुगच्छेम देवाः पुत्त्रैर्भ्रातृभिरुत वा हिरण्यैः ।
नाकङ्गृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठे ऽअधि रोचने दिवः ॥ (५०)
आ वाचो मद्ध्यमरुहद्भुरण्युरयमग्निः सत्पतिश्चेकितानः ।
पृष्ठे पृथिव्या निहितो दविद्युतदधस्पद ङ्कृणुतां ये पृतन्यवः ॥ (५१)
अयमग्निर्व्वीरतमो व्वयोधाः सहस्रियो द्योततामप्रयुच्छन् ।
विभ्राजमानः सरिरस्य मद्ध्य ऽउप प्प्रयाहि दिव्यानि धाम ॥ (५२)
सम्प्रच्यवद्ध्वमुप सम्प्रयाताग्ने पथोदेवयाना न्कृणुद्ध्वम् ।
पुनः कृण्वाना पितरा युवानान्वाताꣳसीत्त्वयि तन्तुमेतम् ॥ (५३)
उद्बुद्ध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्त्ते सꣳसृजेथामयञ्च ।
अस्मिन्त्सधस्थेऽअद्ध्युत्तरस्मिन्विश्वेदेवा यजमानश्च सीदत ॥ (५४)
येन व्वहसि सहस्रं य्येनाग्ने सर्व्ववेदसम् ।
तेनेमं य्यज्ञ न्नो नयस्वर्द्देवेषु गन्तवे ॥ (५५)
अयन्तेयोनिर्ऋत्वियो यतो जातो ऽअरोचथाः ।
तं जानन्नग्न ऽआरोहाथा नो व्वर्द्धया रयिम् ॥ (वा०सं१५-५६)

पुच्छसन्धावेके ॥ २० ॥

पुनश्चितिमुपदधाति, "ताꣳ हैके जघनार्धऽउपदधति" (श० ब्रा० ८-६-३-११) इति श्रुतेः । अस्मिंश्च पक्षे द्विपदा अर्धोत्सेधा ॥ २० ॥

पूर्वार्धे वा ॥ २१ ॥

पुनश्चितिमुपदध्यात् । अत्र यथा सम्भवमर्धोत्सेधाः ॥ २१ ॥

गार्हपत्यं पुच्छसन्धौ कृत्वा ॥ २२ ॥

पुनश्चितिं पूर्वार्धे उपदधाति, "तद्धैके जघनार्धे गार्हपत्यमुपदधति पूर्वार्धे पुनश्चितिम्" (श० ब्रा० ८-६-३-१४) इति श्रुतेः ॥ २२ ॥

ऋतव्ये तपश्च तपस्यश्चे(१)ति ॥ २३ ॥

विश्वज्योतिषं परमेष्ठी त्वे(२)ति ॥ २४ ॥

(३)दक्षिणांसात्प्रत्यगरत्निमात्रादधि लोकम्पृणाः(४) पूर्ववत् ॥ २५ ॥

उपदधाति ॥ २५ ॥

प्रच्छाद्य पुरीषेण विकर्णीस्वयमातृण्णे शर्करे सꣳस्पृष्टे छिद्रे प्रोथदश्व इत्युत्तरां विकर्णीमायोष्ट्वेति स्वयमातृण्णाम् ॥ २६ ॥

---

( १ ) तपश्च तपस्यश्च शैशिरावृतू ऽअग्नेरन्तः श्लेषोसि कल्पेतां द्यावापृथिवी कल्पन्तामापऽओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः ।

ये ऽअग्नयः समनसोन्तरा द्यावा पृथिवी ऽइमे । शैशिरावृतू ऽअभिकल्पमाना ऽइन्द्रमिव देवा ऽअभिसंविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ॥ ( वा० सं० १५-५७ )

( २ ) परमेष्ठी त्वा सादयतु दिवस्पृष्ठे ज्योतिष्मतीम् । विश्वस्मै प्राणायापानाय व्यानाय विश्वं ज्योतिर्यच्छ । सूर्यस्तेधिपतिस्तया देवतयाङ्गिरस्वद्ध्रुवा सीद ॥ ( वा० सं० १५-५८ )

( ३ ) आत्मनो दक्षिणांसादाग्नेयकोणात्प्रत्यगपरस्यां दिशि अरत्निमात्रादधि अन्तिमपद्यालोकं परित्यज्य तृतीयपद्यालोकादारभ्य पञ्चम्यां चितौ लोकम्पृणा उपदधाति । पूर्ववदिति प्रथमं चित्युक्तप्रकारेण । तेनात्रापि प्रथमं द्वे ततो दश अरत्निमात्रादारभ्य आ मध्यात् ।

( ४ ) लोक स्पृण० ॥ (५९) ता ऽअस्य० ॥ (६०) इन्द्रं विश्वा० ॥ ( वा० सं० १५-६१ )

प्रच्छाद्य पुरीषेण चितिं विकर्णीस्वयमातृण्णे उपधीयेते । संलग्ने "प्रोथदश्वः" (१)इत्युत्तरां विकर्णीमुपदधाति । स्वयमातृण्णाम् "आयो- ष्ट्वा"(२) इति । 'शर्करे' 'छिद्रे' इति च विकल्पार्थमुच्यते ॥ २६ ॥

**सकृन्नित्ये ॥ २७ ॥**

सादनसूददोहसौ सकृदेव । चोदनाभेदादारम्भः ॥ २७ ॥

**पुरुषाभिहोमवत्तिष्ठन्नग्निं प्रोक्षति(३) हिरण्यशकल- सहस्रेण शते द्वे द्वे प्रकिरति सहस्रस्ये(४)ति प्रतिमन्त्रः (५)सहस्रस्येति प्रतिमन्त्रम् ॥ २८ ॥**

इति सप्तदशाध्याये द्वादशी कण्डिका ।

इति श्रीकर्कोपाध्यायकृतौ कात्यायनसूत्रभाष्ये सप्तदशोऽध्यायः ।

# अष्टादशोऽध्यायः ।

**शतरुद्रियहोम उत्तरपक्षस्यापरस्याः स्रक्त्यां परि- श्रित्स्वर्कपर्णेनार्ककाष्ठेन शातयन्त्सन्ततं जर्त्तिलमिश्रा- न्गवेधुकासक्तूनजाक्षीरमेके तिष्ठन्नुदङ् नमस्त इत्य- ध्यायेन ॥ १ ॥**

'शतरुद्रियम्' इति नाम, "अथातः शतरुद्रियं जुहोति" ( श० ब्रा० ९-१-१-१ ) इति । स चोत्तरपक्षस्यापरस्याः स्रक्त्यां परिश्रित्सु कर्त-

---

( १ ) प्रोथदश्वो न यवसेविष्यन्यदा महः संवरणाद्व्यस्थात् । आदस्य वातोऽअनुवाति शोचिरध स्म ते व्रजनङ्कृष्णमस्ति ॥(६२)

( २ ) आयोष्ट्वा सदने सादयाम्यवतश्छायायाᳬ समुद्रस्य हृदये । रश्मीवतीम्भास्वतीमा या द्याम्भास्यापृथिवी मोर्व्वन्तरिक्षम् ॥ (वा०सं०१५-६३)

( ३ ) "अथैनः हिरण्यशकलैः प्रोक्षति" (श०ब्रा० ८-७-४-७) इति- श्रुतेः । सहस्रस्य मध्याद् द्वे द्वे शते प्रकिरति ।

( ४ ) सहस्रस्य प्रमासि, सहस्रस्य प्रतिमासि, सहस्रस्योन्मासि, साहस्रोसि, सहस्राय त्वा ॥ ( वा० सं० १५-६५ ) इति पञ्चभिर्मन्त्रैः ।

( ५ ) अयमभ्यासोऽध्यायसमाप्तिसूचकः । क्वचिदयमभ्यस्त एव पाठः

व्यम । परिश्रित आहवनीयकार्यं । तासां समुदितानाम् नैकैकस्याः, "परिश्रित्सु जुहोति" ( श० ब्रा० ९-१-१-५ ) इति वचनात् । प्रयोजनं समुदितानां धर्मसम्बन्धः । अर्कपर्णेनार्ककाष्ठेन शातयन्, अर्कपर्णं जुह्वाः कार्ये "अर्कपर्णेन जुहोति"(श०ब्रा० ९-१-१-४) इति । काष्ठमपूर्वत्वादुपकल्पनीयम् । तेन शातयन्सन्ततमविच्छिन्नं जर्त्तिलमिश्रान् गवेधुकासक्तून् । "जर्त्तिलैर्जुहोति"(श०ब्रा०९-१-१-३) इति । तथा "गवेधुकासक्तुभिर्जुहोति"(श०ब्रा०६-१-१-८) इति विकल्पे प्राप्ते शाखान्तरात्समुच्चयः । तेन 'जर्त्तिलमिश्रान्' इत्युक्तम् । 'अजाक्षीरेणैके जुह्वति' शाखान्तरात् 'तिष्ठन्नुदङ् जुहोति' इति जुहोतौ सति तिष्ठतिक्रिया वाचनिकी 'उदङ्' इति च दिङ्नियमार्थम् । "नमस्ते"(१) इत्यध्यायेन मन्त्रद्रव्यं सन्ततं जुहोति(२) । बहूनि चैतानि कर्माणि श्रूयन्ते— "षष्टिश्च ह वै त्रीणि च शतान्येतच्छतरुद्रियमथ त्रिꣳशदथ पञ्चत्रिꣳशत्" (श०ब्रा० ६-१-१-४३) इति । एतावन्तो द्रव्यदेवता(३)सम्बन्धाः ।

---

( १ ) नमस्ते० ॥ ( वा० सं० अध्याय १६ ) सम्पूर्णेन षोडशाऽध्यायेन ।

( २ ) अग्नेः प्रोक्षणानन्तरं तदानीमेव शतरुद्रियसंज्ञको होमो भवति। तस्याऽऽहवनीये प्राप्तौ अपवाद माह—उत्तरपक्षस्य पश्चिमकोणे याः परिश्रितो जङ्घामात्र्यादयः सन्ति तासु कर्तव्य इति । समुदितानामेवाहवनीयकार्यत्वं नैकस्याः । अत्र जर्तिलमिश्रान् आरण्यतिलमिश्रान् गवेधुकासक्तून् कशकुसक्तून् अर्ककाष्ठेन शातयन् अनवरतं क्षारयन् अर्कपत्रेण जुहोति । अर्कपत्रं दक्षिणकरेण, अर्ककाष्ठं च वामेनादाय तद्धविः सन्ततं पातनीयमित्यर्थः ।

( ३ ) ते च यथा—"नमस्ते" इत्यध्याये नवानुवाकाः सन्ति । 'नमस्ते' इत्यारभ्य 'सदमित्वा हवामहे' इत्यन्तः षोडशकण्डिकात्मकः प्रथमोऽनुवाकः । 'नमो हिरण्य' इत्यारभ्य 'नमऽ आनिर्हतेभ्यः' इत्यन्तास्त्रिंशत्कण्डिकात्मकाः सप्तानुवाकाः । 'द्रापे अन्धसस्पते' इत्यारभ्याविशिष्टविंशतिकण्डिकात्मकश्च चरमो नवमोऽनुवाक इति ।

तत्र प्रथमानुवाकस्य प्रथमकण्डिका गायत्रीछन्दस्का, तत्र त्रयः ३ पादाः । ततस्तिस्रः कण्डिका अनुष्टुप्छन्दस्काः, तत्र प्रतिकण्डिकं चत्वारः पादा इति द्वादश १२ पादाः । ततस्तिस्रः कण्डिकाः पंक्तिच्छन्दस्काः, तत्र प्रतिकण्डिकं पञ्चपादा इति पञ्चदश १५ पादाः । ततः सप्त कण्डिका अनुष्टुप्छन्दस्काः, तत्र प्रतिकण्डिकं चत्वारः पादा इति अष्टाविंशतिः २८ पादाः । ततो द्वे कण्डिके जगतीछन्दस्के, तत्र

प्रतिकण्डिकं षट् पादा इति द्वादश १२ पादाः। सर्वेषां सङ्कलने प्रथमेऽनुवाके सप्ततिः पादा भवन्ति। एकैकस्य पादस्य च साकांक्षत्वेऽपि "जहामि सेदिम्" इतिवत् 'दिवो मात्रया' इतिवच्च मन्त्रत्वं "षष्टिश्च ह वै त्रीणि" इत्यादिशतपथश्रुत्यनुरोधात्। एवमग्रेऽप्यूह्यम्। एवञ्च प्रथमेऽनुवाके सप्ततिसंख्या मन्त्राणां सिद्ध्यति।

ततस्त्रिंशत् कण्डिकाः सप्तानुवाकभूता यजूंषि। तत्राऽऽद्यासु दशकण्डिकासु 'नमो हिरण्यबाहवे' इत्यारभ्य 'अर्भकेभ्यश्च वो नमः' इत्यन्तासु प्रतिकण्डिकमष्ट यजूंषीति अशीति८०र्यजूंषि। ततो 'नमस्तक्षभ्य' इत्यारभ्य 'सुधन्वने च' इत्यन्तासु दशकण्डिकासु तथैवाशीति८०र्यजूंषि ततो 'नमः स्रुत्याय च' इत्यारभ्य 'अरुणाय च' इत्यन्तासु तिसृषु कण्डिकासु प्रतिकण्डिकमष्टेति चतुर्विंशतियजूंषि, 'नमः शङ्गवे च' इति कण्डिकायां दश, 'नमः शम्भवाय च' इत्यस्यां षट्, 'नमः पार्याय च' इत्यारभ्य षट्चत्वारिंशत्तमकण्डिकास्थ 'धनुष्कृद्भ्यश्च वो नमः' इत्यन्तासु सार्धत्रतसृषु कण्डिकासु प्रतिकण्डिकमष्टाष्टेति सङ्कलनेऽशीति८०र्यजूंषि। ततो 'नमो वः किरिकेभ्यः' इत्यवशिष्टकण्डिकायां चत्वारि ४ यजूंषीति सर्वेषां यजुषां सङ्कलने चतुश्चत्वारिंशदधिकशतद्वयसंख्या यजुषां त्रिंशत्कण्डिकासु संपद्यते। अत्रापि पूर्ववत् प्रत्येकं यजुषो मन्त्रत्वमिति सप्तस्वनुवाकेषु चतुश्चत्वारिंशदधिकशतद्वयसंख्या २४४ मन्त्राणां सिद्ध्यति।

नवमेऽनुवाके प्रथमा कण्डिका बृहती, तत्र प्रथमः पादः सप्ताक्षरो द्वितीयोऽष्टाक्षरस्तृतीयो दशाक्षरश्चतुर्थो द्वादशाक्षर इति चत्वारः पादाः। ततो द्वितीया कण्डिका जगती, तृतीया अनुष्टुप्, चतुर्थी त्रिष्टुप्। चतसृष्वपि कण्डिकासु प्रतिकण्डिकं चत्वारः पादा इति षोडश १६ पादाः। पञ्चमी च यवमध्या त्रिष्टुप्, तत्र तृतीयः पाद एकादशाक्षरोऽन्ये चत्वारश्चाष्टाक्षरा इति पञ्च ५ पादाः। ततो 'विकिरिद्र' इत्यारभ्य 'नमोऽस्तु रुद्रेभ्यः' इत्येतत्प्राक्तनद्वादशकण्डिका अनुष्टुभः, प्रतिकण्डिकं च चत्वारः पादा इति अष्टाचत्वारिंशत् ४८ पादाः। सर्वेषां सङ्कलने एकोनसप्ततिः पादाः सप्तदशकण्डिकासु सिद्ध्यन्ति। एकैकस्य च पादस्य पूर्ववन्मन्त्रत्वम्। ततोऽवशिष्टास्तिस्रः कण्डिका यजूंषि, तत्र प्रतिकण्डिकं चतुर्दश चतुर्दश यजूंषीति द्वाचत्वारिंशद् यजूंषीति तावन्तो मन्त्राः पूर्वैः सह सङ्कलिता एकादशाधिकशतं मन्त्रा नवमेऽनुवाके सिद्ध्यन्तीति हरिस्वाम्यादय इति रुद्रकल्पद्रुमे स्पष्टम्।

देवयाज्ञिकादयस्तु प्रथमेऽनुवाके षट्षष्टिर्मन्त्रास्ततः सप्तस्वनुवाकेषु षट्षष्ट्यधिकशतद्वयं, नवमेऽनुवाके च सप्तदशसु कण्डिकासु पूर्ववदेकोनसप्ततिरन्तिमासु च तिसृषु कण्डिकासु प्रतिकण्डिकमष्टाष्टेति चतुर्विंशतिरिति गणनाप्रकारमाहुः। तत्र प्रथमेऽनुवाके पञ्चदशषोडशकण्डिकयोर्जगतीछन्दस्कयोः प्रतिकण्डिकं चत्वार एव पादाः, ततः सप्तस्वनुवाकेषु प्रथमासु पञ्चकण्डिकासु प्रतिकण्डिकं द्वादशयजूंषि, षष्ठ्यां च नव, सप्तमीमारभ्य सप्तदशकण्डिकासु प्रतिकण्डिकमष्टाष्टेति, तत एकस्यामेकादश, ततोऽग्रिमायां षट्, ततश्चतसृषु अष्टाष्टेति, ततश्चैकस्यां द्वादश, सर्वान्ते च तिसृषु कण्डिकासु प्रतिकण्डिकमष्टाष्टेति। हिरण्यबाहवे सेनान्ये, वृक्षेभ्यो हरिकेशेभ्यः, शष्पिञ्जराय त्विषीमते, हरिकेशाय उपवीतिने, बभ्लुशाय व्याधिने, भवस्य हेत्यै, रुद्राय आततायिने, सूताय अहन्त्यै, रोहिताय स्थपतये, भुवन्तये वारिवस्कृताय, मन्त्रिणे वाणिजाय, उच्चैर्घोषाय आक्रन्दयते, कृत्स्नायतया धावते, सहमानाय निव्याधिने, निषङ्गिणे ककुभाय, निचेरवे परिचराय, वञ्चते परिवञ्चते, निषङ्गिण इषुधिमते, सृकायिभ्यो जिघांऽसद्भ्यः, असिमद्भ्यो नक्तंचरद्भ्यः, उष्णीषिणे गिरिचराय, वृक्षेभ्यो हरिकेशेभ्यः इति द्वयोर्द्वयोरेकार्थबोधकत्वेऽपि सर्वेषामपि गुणपदत्वेनैकविशेष्यकत्वेनैकार्थबोधकत्वाविशेषाद् गुणार्थानि द्रव्यार्थानि वा सर्वाण्येव पदानि मन्त्रभेदप्रयोजकानि इति पृथगेव मन्त्रत्वमिति तदाशयः।

तन्न, "स वा अशीत्यां च स्वाहाकरोति, अथाशीत्यामथाशीत्याम्" "अथैतानि यजूंषि जपति नमो वः किरिकेभ्यः" इति श्रुतिविरोधात्। अनया हि श्रुत्या मध्येषु सप्तस्वनुवाकेषु त्रिंशत्कण्डिकात्मकेषु चतुश्चत्वारिंशदधिकशतद्वयसंख्यैव मन्त्राणामवगम्यते नतु षट्षष्ट्यधिकशतद्वयसंख्येति। किञ्च हिरण्यबाहवे इत्यादीनां पृथङ्मन्त्रत्वे 'सेनान्ये' इत्यादित्र्यक्षराणामपि मन्त्रत्वं प्रसज्यते। नचेदं महीधरसंमतं "चतुरक्षरं दैवी बृहती, पञ्चाक्षरं दैवी पंक्तिः, षडक्षरं यजुर्गायत्री, सप्ताक्षरं यजुरुष्णिक्, अष्टाक्षरं यजुरनुष्टुप्, नवाक्षरं यजुर्बृहती, दशाक्षरं यजुः पंक्तिः, एकादशाक्षरं यजुस्त्रिष्टुप्, द्वादशाक्षरं यजुर्जगती, चतुर्दशाक्षरं साम्नोष्णिगेकमेव किरिकेभ्य इति" इत्युक्त्वा "एतान्येवात्र छन्दांसि" इत्युक्त्या इतोऽन्येषामस्वीकारात्।

यदपि कात्यायनः सर्वानुक्रमे "नमो वः किरिकेभ्य इत्यग्निवायुसूर्यहृदयभूताः पञ्च व्याहृतयो बहुरुद्रदेवत्या" इति एकाधिकां संख्यामाह। तदपि मन्त्रविभागप्रकारान्तरपरतया कथञ्चिन्नेयम्। "एते हीदं"

एवं च सति एतावन्ति चतुर्मुष्टिकानि गृह्यन्ते । अजाक्षीरपक्षे चैतावन्त एव षड्वर्गाः ॥ १ ॥

**अनुवाका(१)न्ते स्वाहाकारो जानुमात्रे ॥२॥**

"स वै जानुदघ्ने प्रथमं स्वाहाकरोति" ( श० ब्रा० ९-१-१-११ ) इति वचनात् ॥ २ ॥

**पञ्चान्ते च नाभिमात्रे ॥ ३ ॥**

पञ्चानुवाका(२)न्ते नाभिमात्रे । चशब्दात्स्वाहाकारः ॥ ३ ॥

**प्राक्च प्रत्यवरोहेभ्यो(३)मुखमात्रे ॥ ४ ॥**

स्वाहाकारः ॥ ४ ॥

**प्रतिलोमं प्रत्यवरोहाञ्जुहोति प्रमाणेषु नमोस्त्विति प्रतिमन्त्रम् ॥ ५ ॥**

प्रातिलोम्यं च प्रथमं मुखमात्रे, ततो नाभिमात्रे, पुनर्जानुमात्रे इति । प्रत्यवरोहाश्च "नमोऽस्तु रुद्रेभ्य "(४) इति ॥ ५ ॥

**हवने प्रास्यति चास्वाले ॥ ६ ॥**

अर्कपर्णार्ककाष्ठे इत्यर्थः । आगन्तुत्वाच्च कर्मापवर्गान्ते ॥ ६ ॥

इत्यष्टादशाध्याये प्रथमा कण्डिका ।

---

सर्वं कुर्वन्ति देवानाᳫं हृदयेभ्य इति" इति श्रुत्या 'देवानां हृदयेभ्य' इत्यस्य सर्वत्रानुषङ्गबोधनेन यजुश्चतुष्कस्यैव लाभादिति सूत्रभाष्यकाराः । चतुर्णामेवादौ नमःशब्दाद्यजुश्चतुष्कत्वमिति संहिताभाष्यकाराः ।

कर्मसु सर्वत्र मन्त्रमय्योदेवता इत्यन्यत्र निर्णीतम् । तेन प्रकृते उक्तविधया संपन्नेभ्यः पञ्चविंशत्यधिकचतुःशतमन्त्रेभ्यः प्रतिपादितानां तत्संख्याकदेवतानां सम्बन्धा अभिहिता भवन्तीत्यर्थः ।

( १ ) अर्भकेभ्यश्च वो नमः ॥ ( वा० सं० १६-२६ ) इति तृतीयानुवाकान्ते जङ्घामात्र्यां परिश्रिति स्वाहाकारः कार्यः ।

( २ ) नमस्तक्षभ्य० (वा०सं०१६-२७) इत्यादिभिः सुधन्वने च इत्यन्तैः पञ्चमानुवाकान्तैः नाभिमात्रेपरिश्रितिस्वाहाकारः ।

( ३ ) नमोस्तु रुद्रेभ्य० इत्यादयो मन्त्राः प्रत्यवरोहसंज्ञकाः तेभ्यो मन्त्रेभ्यः प्राक् मुखमात्र्यां परिश्रिति स्वाहाकारः ।

( ४ ) नमोस्तुरुद्रेभ्यः० ( वा० सं० १६-६४, ६५, ६६ ) इति कण्डिकात्रयेण प्रतिलोमं होमः । 'ये दिवि' इति मुखमात्रे 'येन्तरिक्षे' इति नाभिमात्रे । 'ये पृथिव्यां' इति जानुमात्रे ।

चित्यं परिषिञ्चत्यग्नीद्दक्षिणे निकक्षेऽद्रिं कृत्वाऽश्मन्नूर्जमित्यद्रेराधि ॥ १ ॥

चित्यमग्निमग्नीत्परिषिञ्चेद्दक्षिणे निकक्षेऽद्रिं कृत्वा (१)"अश्मन्नूर्जम्"(२) इत्यनेन मन्त्रेणाद्रेरारभ्य ॥ १ ॥

अश्मंस्ते क्षुदि(३)त्यद्रौ कुम्भं कृत्वा मयि त ऊर्गित्यादाय ॥ २ ॥

एवं त्रिरपरम् ॥ ३ ॥

परिषिञ्चति ॥ ३ ॥

तावत्प्रतिपर्येति ॥ ४ ॥

"निधायोद्धरणं, त्रिर्विपल्ययते"(श०ब्रा०९-१-२-६) इति श्रुतेः॥४॥

कुम्भेऽद्रिं कृत्वा दक्षिणस्यां वेदिश्रोणौ प्राङ् तिष्ठन् दक्षिणास्यति (४)यं द्विष्म(५) इति ॥ ५ ॥

अनेन मन्त्रेण ॥ ५ ॥

अभिन्ने भेत्तवै ब्रूयात् ॥ ६ ॥

यदि न भिद्यते 'भेत्तवै' ब्रूयादिति । तच्च प्रतिप्रस्थाता प्रैषे । भेदने तु प्रधानत्वादध्वर्युः ॥ ६ ॥

अत्रैतच्चिन्त्यते । किं कुम्भविषयमेतद्भेदनम् , उताद्रिविषयमिति । किं तावत्प्राप्तम् ? सूत्रेणैवोपक्रमः—

कुम्भे भेदनं सामर्थ्यात् ॥ ७ ॥

कुम्भविषयमेतद्भेदनम्, नाद्रिविषयम् । कुत एतत् ? एवमेतद्वचनं समर्थं भवति-"यदि न भिद्येत भेत्तवै ब्रूयात्" (श० ब्रा० ९-१-२-१२) इति । अद्रौ त्वसमर्थमेव । न हि तस्य कठिनत्वाद्भेदनमाशङ्क्यते ॥ ७ ॥

---

(१) दक्षिणपक्षस्यापरसन्धिसमीपवर्तिन्यात्मभागेऽद्रिं कृत्वा अश्मानं निधाय उदकुम्भमादाय अद्रेरारभ्य सपक्षपुच्छमग्निं प्रदक्षिणं जलधारया समन्तादग्नीत् सिञ्चति ।

(२) अश्मन्नूर्जम्० ॥ ( वा० सं० १७-१ )

(३) सेकान्ते "अश्मँस्तेक्षुत्" ( वा० सं० १७-१ ) इत्यनेन कुम्भमश्मनि निधाय पुनः "मयितऽऊर्क्" ( वा० सं० १७-१ ) इति मन्त्रेण कुम्भमादाय परिषिञ्चेत् ।

(४) दक्षिणस्यां निरस्यति इत्यपिपाठः ।

(५) यन्द्विष्मः० ॥ ( वा० सं० १७-१ )

एवं प्राप्त आह—

**अश्मनि वाऽर्थवादात् ॥ ८ ॥**

वाशब्दः पक्षव्यावृत्तौ। अश्मनि चैतद्भेदनं प्रतिपत्तव्यम्। न कुम्भविषयत्वम्। कुत एतत्? अर्थवादात्-"यदा ह्येव स भिद्यतेऽथ तं शुगृच्छति यं द्वेष्टि" (श० ब्रा० ९-१-२-१३) इति। सा च शुगश्मनि निहिता "तदश्मनि शुचं दधाति" इति ॥ ८ ॥

**वाच्यत्वाच्च ॥ ९ ॥**

अपि चाश्मन्येव वाच्यं भेदनं न कुम्भे, स ह्यश्म(१)गर्भः क्षिप्तोऽवश्यमेव भिद्यत इति ॥ ९ ॥

**अनपेक्षमेत्योदङ्प्राङ् तिष्ठन्नात्मन उपरि प्रापणान्ते जपतीमा म[२] इति ॥ १० ॥**

आत्मा चात्राग्न्यात्मोच्यते(३) ॥ १० ॥

**मण्डूकावकावेतसशाखा वेणौ बद्ध्वाऽवकर्षति मन्त्रकृष्टवत्समुद्रस्य त्वेति प्रत्यृचम् ॥ ११ ॥**

मण्डूकादीन्वेणौ बद्ध्वाऽग्निं विकर्षति मन्त्रकृष्ट(४)वत्क्रमेण "समुद्रस्य त्वा"(५) इति प्रत्यृचम् ॥ ११ ॥

**पक्षपुच्छानि चाभ्यात्ममग्ने पावकरोचिषेति ॥ १२ ॥**

अग्न्यात्मानमाभिमुख्येन पक्षपुच्छानि कर्षति "अग्ने पावकरोचिषा"(६) इति प्रत्यृचमेव ॥ १२ ॥

---

(१) 'असमर्थः' इ० पा०।

(२) इमामे० ॥ (वा० सं० १७-२,३)

(३) ततः कुम्भनिरसनानन्तरं यजमानो ऽपश्यन्नेत्य दक्षिणाश्रोणिसमीपे उदङ् प्राङ् इत्यैशानदिगभिमुखस्तिष्ठन् अग्नेरुपरि हस्तौ प्रलम्बौ प्रसार्य प्रापणान्ते चयनप्रदेशं स्प्रष्टुं यत्र शक्नोति तत्र स्पृष्ट्वा जपति कण्डिकाद्वयमित्यर्थः।

(४) मन्त्रकृष्टवदिति दक्षिणश्रोणेरारभ्य दक्षिणांसं यावत्, दक्षिणश्रोण्याद्युत्तरश्रोण्यन्तम्, उत्तरश्रोणेरुत्तरांसपर्यन्तम्, उत्तरांसाद्दक्षिणांसं च यावद् भूमिसंलग्नेन वेणुना क्रमेण चतुर्भिर्मन्त्रैः कर्षति।

(५) समुद्रस्य त्वा० ॥ (वा० सं० १७-४,५,६,७)

(६) अग्ने पावक रोचिषा० ॥ (वा० सं० १७-८,९,१०) तत्र प्रथममन्त्रेण दक्षिणं पक्षं, द्वितीयेन पुच्छं, तृतीयेन चोत्तरं पक्षं कर्षेत्।

अन्त्यमुत्तरम् ॥ १३ ॥

अन्त्यमुत्तरं पक्षम् ॥ १३ ॥

वेणुमुत्करे कृत्वा चित्यमालभ्य तिष्ठन्—

इत्यष्टादशाध्याये द्वितीया कण्डिका ।

---

हिङ्कृत्य साम गायति ॥ १ ॥

सामगानमुद्गातुः स्यात् , समाख्यानात् । अध्वर्योर्वा वचनसामर्थ्यात् । "नान्योऽध्वर्योर्गायेत्" ( श० ब्रा० ९-१-२-४३ ) इति समाख्यानमप्यध्वर्योरेव । विधानानुसारिणी हि समाख्या । विधानं चाध्वर्यव वेदविहितम्-"अथैनꣳ सामभिः परिगायति" ( श० ब्रा० ९-१-२-३२ ) इति । एव च 'नान्योऽध्वर्योर्गायेत्' इत्यनुवाद एव ॥ १ ॥

पुरस्ताद्गायत्रम् ॥ २ ॥

साम गायति ॥ २ ॥

दक्षिणे पक्षे रथन्तरम् ॥ ३ ॥

उत्तरे बृहत् ॥ ४ ॥

आत्मनि वामदेव्यम् ॥ ५ ॥

पुच्छे यज्ञायज्ञियम् ॥ ६ ॥

दक्षिणे निकक्षे[१] प्रजापतिहृदयम् ॥ ७ ॥

अग्न्युक्थꣳ शꣳसेत्याह ॥ ८ ॥

होतुः प्रेषणम् ॥ ८ ॥

औपवसथ्ये विसृष्टवाचि(२) पञ्चगृहीते हिरण्यशकलान्प्रास्यति पञ्च ॥ ९ ॥

"उपवसथीयेऽहन्प्रातरुदित आदित्ये वाचं विसृजते"(श० ब्रा०-९-२-१-१ ) इति प्रकृत्यैवं श्रुतत्वात् ॥ ९ ॥

दधि मधु घृतं पात्र्याꣳ समासिच्य स्थाल्यां वा महामुख्यां कुशमुष्टिं चोपर्युभयमादाय चित्यारोहणं नमस्त इति ॥ १० ॥

---

( १ ) दक्षिणे निकक्षे—कक्षो दक्षिणपक्षस्यापरसन्धिः तत्समीपस्थं देशं निशब्द आचष्टे । तस्मिन् आत्मप्रदेशे अध्वर्युर्होतारं प्रत्याह ।

( २ ) औपवसथ्ये उपसदामन्तिमे ऽग्नीषोमीयेऽहनि वाग्विसर्गे कृते ।

दध्यादीन् पात्र्यां प्रास्य महामुख्यां वा स्थाल्यां तदुपरि च कुशमुष्टिमुभयं गृहीत्वा चित्यमारोहेत् "नमस्ते"(१)इत्यनेन मन्त्रेण ॥ १० ॥

**स्वयमातृण्णायां पञ्चगृहीतं जुहोति नाभिवद्धिरण्यादर्शनं च नृषदे वोडिति प्रतिमन्त्रम् ॥ ११ ॥**

स्वयमातृण्णायां पञ्चगृहीतं जुहोति नाभिव्याघारणवत्(२) "नृषदे वेट्"(३) इति प्रतिमन्त्रम् । हिरण्यदर्शनं च न भवति(४) ॥ ११ ॥

**समासिक्तान्कुशैः प्रोक्षति सपरिश्रित्कं बाह्येन च ये देवा (५)इति ॥ १२ ॥**

"अथैनꣳ समुक्षति" ( श० ब्रा० ९-१-१-११ ) इति प्रकृत्य "सर्वतः समुक्षत्यपि बाह्येन परिश्रित" (श० ब्रा० ९-२-१-१८) इति श्रुतेः ॥१२॥

**प्राणदा (६)इत्यवरोहति ॥ १३ ॥**

अवतरति ॥ १३ ॥

**एवमारोहणावरोहणमतः ॥ १४ ॥**

अत ऊर्ध्वमेवमेवाऽऽरोहणावरोहणे(७) कार्ये ॥ १४ ॥

**उपसदन्ते प्रवर्ग्योत्सादनं यथोक्तमग्नौ परिष्यन्दे वा॥१५॥**

वाशब्दो विकल्पार्थः । विकल्पेन हि श्रवणमत्र । परि समन्तादापः स्यन्दन्ते यत्र प्रदेशे स परिष्यन्दः ॥ १५ ॥

**स्वयमातृण्णास्पृष्टं प्रथमम् ॥ १६ ॥**

अग्निपक्षे—"स्वयमातृण्णया संस्पृष्टं प्रवर्ग्यमुत्सादयति" (श० ब्रा० ९-२-१-२३) इति वचनात ॥ १६ ॥

---

( १ ) नमस्ते हरसे० ( वा० सं० १८-११ ) इति मन्त्रेणाध्वर्युः, ब्रह्मयजमानौ तु अग्नेर्दक्षिणत उपविशेताम् ।

( २ ) दक्षिणांसश्रोणिद्वयोत्तरांसमध्येष्वित्यर्थः ।

( ३ ) नृषदे ꣳवेड्० ॥ ( वा० सं० १७-१२ ) अस्यां कण्डिकायां पञ्च मन्त्रा बोध्याः ।

( ४ ) नाभिव्याघारणे हिरण्यं पश्यन् जुहोति, अत्र तु नेति भावः ।

( ५ ) ये देवा० ( वा० सं० १७-१३, १४ ) पात्र्यां सिक्तान् दधिमधुघृतान् परिश्रित्सहितं सपक्षपुच्छमग्निं मध्ये बहिश्च कुशैः प्रोक्षति मन्त्रद्वयेनेत्यर्थः ।

( ६ ) प्राणदा० ॥ ( वा० सं० १७-१५ ) प्रोक्षणानन्तरमग्नेरवतरत्यध्वर्युः ।

(७) अतः परमस्याग्नेरारोहणमवतरणं च एवमेव सर्वैः कर्तव्यम् ।

पञ्चगृहीतं जुहोत्यग्निस्तिग्मेनेत्यृचा(१) षोडशगृहीता- र्धमनुवाकशेषेण ॥ १७ ॥

पुनः षोडशगृहीतं गृहीत्वा तदर्धमनुवाकशेषेणाष्टाभि (२)र्ऋग्भिर्जुहोती(३)ति ॥ १७ ॥

चक्षुषः पितेत्यपरमनुवाकेन ॥ १८ ॥

अपरमर्द्धं "चक्षुषः पिता"(४)इत्यनुवाकेन अष्टाभिर्ऋग्भिः । सर्वाणि चैतानि शालाग्नौ जुहोति ॥ १८ ॥

आर्द्रौदुम्बरीघृतोषितास्तिस्र उदेनमित्या- दधाति प्रत्यृचम् ॥ १९ ॥

औदुम्बरीः समिधः घृते न्युप्ताः सर्वां रात्रिमुषिताः तिस्र "उदेनम्"(५) इत्यादधाति प्रत्यृचम् ॥ १९ ॥

वैकृतावसरे प्राकृतानुवृत्त्यर्थमाह—

अग्निं प्रणयति ॥ २० ॥

तत्र विशेषमाह—

प्रेष्यत्युद्यच्छेध्ममुपयच्छोपयमनीः ॥ २१ ॥

अयं च प्रैषः प्रतिप्रस्थातुः । तदर्थोऽध्वर्योः ॥ २१ ॥

अग्नये प्रह्रियमाणायानुब्रूह्यग्नीदेकस्फ्ययानूदेहि ब्रह्मन्न- प्रतिरथं(६) जपेति ॥ २२ ॥

च प्रेष्यति ॥ २२ ॥

---

(१) अग्निस्तिग्मेन० ( वा० सं० १७–१६ )

(२) यऽइमा० (वा० सं० १७–१७, १८, १९, २०, २१, २२, २३,२४)

(३) शालाऽग्नौ इति शेषः ॥

(४) चक्षुषः पिता० ॥ ( वा० सं० १७–२५, २६, २७, २८, २९, ३०, ३१, ३२ )

(५) उदेनम्० ( वा० सं० १७–५०, ५१, ५२ ) अस्य प्रादेशमात्रीरित्यादिः ।

(६) 'आशुः शिशान' (वा० सं० १७–३३) इत्यारभ्य 'तमसा सचन्ताम्' (वा०सं० १७–४४) इत्यन्तं द्वादशर्चात्मकं ब्रह्मा 'अप्रतिरथनामकं सूक्तं जप' इति प्रेष्यति ।

त्रिरुक्तायामुद्यम्योदु(१) त्वेति(२) ॥ २३ ॥

चित्यं गच्छन्ति पञ्च दिश(३) इति ॥ २४ ॥

त्रिरुक्तायां होत्रा प्रथमायामृचि 'उदुत्वा' इत्युद्यम्याग्निं चित्यं प्रति गच्छन्ति "पञ्च दिश" इत्यनेन मन्त्रेण ॥ २४ ॥

आग्नीध्रदेशाद्दक्षिणं पृष्ठ्यासहितं पृश्न्यश्मान(४)मुपदधाति विमान(५) इति ॥ २५ ॥

अनेन मन्त्रेण(६) ॥ २५ ॥

न नित्ये ॥ २६ ॥

नित्ये सादनसूददोहसौ न भवतः । इष्टकासंस्तवात्प्राप्तयोर्निषेधः ॥२६॥

निधायैन(७)मतिक्रामन्तीन्द्रं विश्वा (८)इति ॥ २७ ॥

"तं निधाय यथा न नश्येद्थोपायन्ति" (श० ब्रा० ९-२-३-१९, २०) इति वचनात् ॥ २७ ॥

इत्यष्टादशाध्याये तृतीया कण्डिका ।

---

क्रमध्वमग्निने(९) ति चित्यमारोहन्ति ॥ १ ॥

अतश्च 'नमस्ते'( वा० सं० १७-११ ) इत्ययं निवर्त्तते ॥ १ ॥

स्वयमातृण्णामध्यग्निं धारयञ्छुक्लवत्सापयसाऽभिजुहोति कृष्णाया दोहनेन स्वयमातृण्णामवासिञ्चन्नक्तोषासेति ॥ २ ॥

---

(१) उदुत्वा० ॥ वा० सं० १७-५३

(२) होत्रा प्रथमायामृचि त्रिः पठितायां सत्यां प्रति प्रस्थाता 'उदुत्वे'ति मन्त्रेण प्रदीप्तमिध्मं शालाद्वार्याद्रूर्ध्वमुत्पाटयतीत्यर्थः ।

( ३ ) पञ्च दिशोः० ॥ ( वा० सं० १७-५४, ५५, ५६, ५७, ५८ )

(४ ) पृश्न्यश्मानं तनुं वृत्तं पाषाणं चित्रवर्णं वा ।

(५) विमानऽ एष० ॥ ( वा० सं० १७-५९, ६० )

(६) कण्डिकाद्वयात्मकेनेत्यर्थः ।

( ७ ) एनं पृश्न्यश्मानं क्वचिद्गुप्ते देशे स्थापयित्वा सर्वे चयनं प्रति गच्छन्ति ।

( ८ ) इन्द्रं विश्वा० ॥ ( वा० सं० १७-६१, ६२, ६३, ६४ )

( ९ ) क्रमध्वमग्निं० ॥ ( वा० सं० १७-६५, ६६, ६७, ६८, ६९ )

स्वयमातृण्णाया उपरि(१) धारयन्नग्निं कृष्णाया गोः शुक्लवत्सायाः पयसा(२) दोहनेनाभिजुहोति "नक्तोषा(३)सा" इत्यनेन मन्त्रेण स्वयमातृण्णा मवसिञ्चन्। अयं जुहोतिः,ततश्च साम्नाय्यधर्माः प्रवर्तन्ते जुहोतित्वान्मन्त्रवर्जम्। दोहनस्य जुहूकार्यापत्तिरतश्च तद्धर्मा भवन्ति। महावेदेश्च सम्मर्शनान्ता धर्माः कृताः, तत उत्तरपरिग्रहाद्यत्र कर्तव्यम्। शतरुद्रियें तु खननादि ॥ २ ॥

पैतुदारवाद्यन्त्रैके ॥ ३ ॥

एके प्राङ् 'मयि गृह्णामि' इति जपात्। तत्र शुक्रमाचार्येण "उत्तरवेदिप्रोक्षणाद्या सम्भारनिवपनात्कृत्वा" (का. श्रौ. १७-३-२६ ) इति। यद्येवमिह कस्मात्सम्भारनिर्वापः ? अग्न्यर्थत्वात्। यद्येवमिहैव सम्भारनिर्वापः ॥ ३ ॥

तस्यामग्निं निदधाति सुपर्णोऽसीति वषट्कारेण ॥ ४ ॥

तस्यां स्वयमातृण्णायां "सुपर्णोसि"(४) इत्यनेन मन्त्रेण वषट्कारान्तेनाग्निं निदधाति ॥ ४ ॥

निस्थे च ॥ ५ ॥

अत्र भवतः। इष्टकासंस्तवादग्नेः ॥ ५ ॥

समिदाधानः शामीलीवैकङ्कत्यौदुम्बर्यस्ताः सवितु(५)रितिप्रत्यृचमुत्तमा सकर्णका(६) ॥ ६ ॥

समिद्भवति ॥ ६ ॥

कर्णकाऽभावे दाधिद्रप्सा(७)क्ताः ॥ ७ ॥

कर्तव्या ॥ ७ ॥

स्रुवाहुती जुहोत्यग्ने तमद्ये(८)ति च प्रत्यृचम् ॥ ८ ॥

पूर्णाहुतिं च सप्त त(९) इति ॥ ९ ॥

---

( १ ) प्रतिप्रस्थात्रा।
( २ ) मृन्मयदोहपात्रेण।
( ३ ) नक्तोषासा० ॥ ( वा० सं० १७-७०, ७१.)
( ४ ) सुपर्णोसि० ॥ ( वा० सं १७-७२, ७३ )
( ५ ) ताᳫं सवितुः० ॥ ( वा० सं० १७-७४, ७५, ७६ )
( ६ ) कर्णको दारुस्फोटो रोगः तद्वती सकर्णका इति केचित्।
( ७ ) घनीभूतं दधि द्रप्स इत्युच्यते।
( ८ ) अग्नेतम्० ॥ ( वा० सं० १७-७७, ७८ )
( ९ ) सप्त ते० ॥ ( वा० १७-७९ )

जुहोति ॥ ९॥

तिष्ठन्त्समिधः सर्वत्र मध्ये ॥ १० ॥

सर्वत्रग्रहणात् समिदुद्देशेन विहितत्वात्तिष्ठतिक्रिया सर्वत्र भवति। समिदाधानं ग्रहणाहुत्योर्मध्ये, "अन्तेष्वाहुतीः" (का० श्रौ० १८-४-११) इति सूत्रितत्वात् ॥ १० ॥

अन्तेष्वाहुतीरुपविश्य ॥ ११ ॥

तिष्ठतिक्रियानन्तर्यात् 'उपविश्य' इत्युच्यते ॥ ११ ॥

अत्र पञ्चम्याः सप्तर्चोपस्थानं सर्वोपधानात् ॥ १२ ॥

अस्मिन्नवसरे पञ्चम्याश्चितेः सप्तर्चोपस्थानं कर्तव्यम्। अत्र हि सकला पञ्चमी चितिरुपहिता भवति ॥ १२ ॥

धिष्ण्यान्वा चित्वोत्तमसंयोगात् ॥ १३ ॥

अथवा धिष्ण्यांश्चित्वा सप्तर्चोपस्थानं कर्त्तव्यम्। कुत एतत्? धिष्ण्यानां हि पञ्चम्याश्चितेः अन्तरभावः। तस्मात्तत्रैव युक्तमुपस्थानम् ॥ १३ ॥

अभिमृशेदिच्छन्त्सम्वत्सरोऽसी(१)ति ॥ १४ ॥

अग्निम् ॥ १४ ॥

एवं यथाचिति ॥ १५ ॥

सम्मर्शनं कर्तव्यम। यन्नामा चितिस्तदभिधायकेन(२) मन्त्रेण॥१५॥

वैश्वानरमारुतान्निर्वपति यथोक्तम् ॥ १६ ॥

वैश्वानरश्च मारुताश्च वैश्वानरमारुताः तान्निर्वपति। यथोक्तग्रहणाच्च वैश्वानरो यजतिः, मारुता जुहोतयः। तत्कथम्? वैश्वानरं हि प्रकृत्याह—"तं वा एतं पुरोऽनुवाक्यवन्तं याज्यवन्तं वषट्कृते स्रुचा जुहोति" ( श० ब्रा० ९. ३. १. १६ ) इति। यजतीनां ह्येष धर्मः। पुरोऽनुवाक्याद्यभिधानाच्च थावदुक्तं स्यात्। तथा मारुतान्प्रकृत्याह "हस्तेनैवतरानासीनः स्वाहाकारेण" ( श० ब्रा० ९. ३. १. १६ ) इति। जुहोतीनां ह्ययं धर्मः। कपालसंख्यार्थं च यथोक्तग्रहणम्। वैश्वानरस्य हि द्वादशकपालता पठ्यते मारुतानां सप्तकपालता ॥ १६ ॥

---

( १ ) सम्वत्सरोऽसि०" ( वा० सं० २७—४५ )

( २ )'सम्वत्सरोऽसि' इति मन्त्रस्य मध्ये "सुपर्णचिदसि" (वा०सं० २७—४५ ) इति पठितमस्ति तेन तत्पदं सुपर्णचितिपक्षे प्रयोज्यम्। एवमेव द्रोणचिदादिपक्षे यथाचिति।

वैश्वानरमधिश्रित्य दक्षिणोत्तरौ मारुतौ ॥१७॥

अधिश्रयति । "अवरोक्मुत्तरम्" ( का० श्रौ० १-१०-५ ) इत्यस्यापवादोऽयम् ॥१७॥

पश्चाच्च संकृष्टतरौ ॥१८॥

चशब्दाद्दक्षिणोत्तरावधिश्रयति ॥ १८ ॥

एवमपरौ ॥१९॥

द्वावधिश्रयतीति शेषः । एवंशब्देन च दक्षिणोत्तरता संकृष्टतरता च लभ्यते ॥ १९ ॥

पश्चादरण्येऽनूच्यम् ॥२०॥

अरण्येऽनूच्यं च पुरोडाशं पश्चादधिश्रयति ॥ २० ॥

होमासादनयोश्च ॥२१॥

चशब्दादयमेव विधिः ॥ २१ ॥

पुच्छादपरान् कुशानास्तीर्याहवनीयसहितान्वा तत्रासादनम् ॥२२॥

कुशानास्तीर्येति प्राकृतमेव परिस्तरणमनूद्यते । प्रदेशविधानाय 'पुच्छादपरान्' इति । कुत एतत् ? सपुच्छोऽयमाहवनीय इति । प्रकृतौ चाहवनीयमपरेण स्तरणं वृत्तमिहापि तथैव कर्त्तव्यम् । आहवनीयसहितान्वेति । कुत एतत् ? आहवनीयशब्दो ह्यग्न्यभिधायक उपचारवृत्त्या स्थले वर्तते । तस्मादाहवनीयसहितानेवेत्यवधार्यते । तत्रासादनं कर्तव्यम् ॥ २२ ॥

वैश्वानरेण(१) प्रचर्य सर्वहुतेन हस्तेन मारुतान् जुहोत्युपविश्य वैश्वानरे वा वैश्वानरं पृथुं कृत्वा शुक्रज्योतिरि(२)ति प्रतिमन्त्रम् ॥२३॥

मारुतान् जुहोति । विकल्पश्चायं वैश्वानरे होमोऽग्नौ वेति ॥ २३ ॥

विमुखेनारण्येऽनूच्यम् ॥२४॥

अरण्येऽनूच्यं पुरोडाशं विमुखेन जुहोति । विमुखश्चाध्येतृणां

( १ ) वैश्वानरेण द्वादशकपालेन पुरोडाशेन यागं कृत्वा उपविश्य हस्तेन आहवनीये मारुतान् पुरोडाशान् सर्वहुतान् जुहोति । यद्वा, प्रथनकाले वैश्वानरपुरोडाशं विस्तीर्णं कृत्वा तदुपर्येव जुहोति ।

( २ ) शुक्रज्योतिः ॥ (वा० सं० १७—८०, ८१, ८२, ८३, ८४, ८५)

प्रसिद्धः "उग्रश्च भीमश्च"(१) इति ॥ २४ ॥

इन्द्रं दैवीरि(२)ति जपति ॥ २५ ॥

आगन्तुत्वादन्ते ॥ २५ ॥

इमꣳ स्तनमि(३)ति वाचयति वा ॥ २६ ॥

जपति वेति विकल्पः । वैश्वानरमारुतानामेकतन्त्रम् । तत्र च यः साधारणपदार्थः स मन्त्रवान्कर्तव्यः । मारुतानां हि पदार्थमात्रेण प्रयोजनम् । समन्त्रकोऽपि पदार्थः पदार्थ एवेति ॥ २६ ॥

इत्यष्टादशाध्याये चतुर्थी कण्डिका ।

---

वसोर्धारां जुहोत्यौदुम्बर्या पञ्चगृहीतꣳ सन्ततं यजमानोऽरण्येऽनूच्येऽग्निप्राप्ते वाजश्चम इत्यष्टानुवाकेन ॥१॥

'वसोर्धारा' इति कर्मनामधेयम् । तच्च समुदायस्य । एवं हि श्रूयते "षष्टिश्च ह वै त्रीणि च शतान्येषा वसोर्धाराऽथ षडथ पञ्चत्रिꣳ शत्(४)" ( श० ब्रा० ९-३-३-१८ )इति । अत्र च यदन्तरितं तस्यावृत्तिर्भवति । औदुम्बर्या स्रुचा पञ्चगृहीतमाज्यं जुहोति अग्नौ प्राप्ते "वाजश्चमे" (५) इत्यष्टानुवाकेन । सन्ततमिति च द्रव्यसन्ततं मन्त्रसन्ततं

---

( १ ) उग्रश्च० ॥ ( वा० सं० ३९—७ )

( २ ) इन्द्रन्दैवीः० ॥ वा० सं० १७—८६ )

( ३ ) इमꣳ स्तनम्० ॥( वा० सं० १७—८७, ८८, ८९, ९०, ९१, ९२, ९३, ९४, ९५, ९६, ९७, ९८, ९९ )

( ४ ) अनया श्रुत्या एकाधिकशतचतुष्टयसंख्या वसोर्धाराहुतीनां गम्यते । ताश्च यथा-'वाजश्च मे' इत्यारभ्य 'वेट्स्वाहा' इत्यन्तमेकोनत्रिंशत्कण्डिका अष्टानुवाकेषु वर्तन्ते । तत्र आद्यासु एकविंशतिकण्डिकासु चतुर्थीपञ्चदश वर्जितासु प्रतिकण्डिकं त्रयोदश यजूंषि, चतुर्थ्यां पञ्चदश, पञ्चदश्याञ्च नवेति । ततः द्वादश, षट्, त्रयस्त्रिंशत्, त्रयोविंशतिः, एकादश, नव, चतुर्दश, एकविंशतिरिति क्रमेण द्वाविंशतिकण्डिकामारभ्य एकोनत्रिंशत्कण्डिकापर्यन्तं यजूंषि वर्तन्ते । सर्वाणि मिलित्वा एकाधिका चतुःशती संख्या सम्पद्यते । प्रत्येकं यजुषो मन्त्रत्वं बोद्धव्यम् ।

( ५ ) 'वाजश्च मे०' ( वा० सं० १८-१ ) इत्यादि, 'वेट् स्वाहा' ( वा० सं० १८-२९ ) इत्यन्तेनैकोनत्रिंशत्कण्डिकात्मकेनेत्यर्थः ।

च। अत्र च श्रूयते—"अष्टासु कल्पयति दशसु कल्पयति" ( श० ब्रा० ९-३-२-८) इत्येवमादिना वाक्यपरिसमाप्तिः। प्रतिवाक्यं च स्वाहाकारकरणम्। अत्र च देवतापदान्तराये पञ्चगृहीतमेव च सकलवाक्येन होतव्यं न ह्यन्यथैतद्दृष्टमिति ॥ १ ॥

हुत्वा स्रुक्प्रासनम् ॥ २ ॥

तच्चाग्नौ। एवं हि श्रूयते-"अत्र ताꣳ स्रुचमनुप्रास्यति यदत्राज्यलिप्तं तन्नेद्बहिर्द्धाग्नेरसत्" ( श० ब्रा० ९-३-३-१४ ) इति ॥ २ ॥

अग्नये स्वाहे(१)ति षट् पार्थानि जुहोति ॥ ३ ॥

तानि च राजसूयिकानि, तत्राम्नानात्। इह च श्रूयते-"स वै राजसूयस्य पूर्वाणि जुहोति" ( श० ब्रा० ९-३-४-८ ॥ इति ॥ ३ ॥

वाजप्रसवीयानि वप्रावत्सम्भृत्य चमसवत्स्रुवेण वाजपेयिकानि वाजस्येममिति ॥ ४ ॥

'वाजप्रसवीयानि' इति नामधेयं, विध्यर्थवादमन्त्रत्वासम्भवात् समुदायनामधेयञ्चैतत्। सप्त ह्येतानि कर्माणि वाजपेयिकानि। प्रयोजनमन्यतमाऽपाये तस्यैवावृत्तिः। तानि च वप्रावत्सम्भृत्य चमसवत्स्रुवेण। वप्राशब्देनाग्निक्षेत्रकेदाराभिधानम्। तद्वदत्रापि सम्भृत्य चमसवत् चतुःस्रक्तिना उदुम्बरेण स्रुवेण वाजपेयिकानि "वाजस्येमम्"(२) इति प्रतिमन्त्रं जुहोति। वाजपेयिकग्रहणाच्च अप्पयसी प्रक्षिप्येते। एवं हि तत्राचार्येणाभिहितम्—"औदुम्बरे पात्रेऽप आसिच्य पयश्च सप्तदशान्नान्यावपति यावत्स्मृति वा" (का० श्रौ०, १४-४-३४, ३५, ३६) इति। एवं च सति सप्त षड्वर्गाः सप्त चतुर्मुष्टिकान्युदादेयान्यापश्चेति ॥ ४ ॥

आग्निकानि च वाजस्य न्विति ॥ ५ ॥

आग्निकानि च वाजप्रसवीयानि "वाजस्य(३) नु" इति प्रतिमन्त्रं जुहोति। आग्निकेष्वपि सप्तैव सर्वौषधस्य चतुर्मुष्टिकानि ॥ ५ ॥

स्रुवं प्रास्य परिश्रित्स्पृक्कृष्णाजिनमास्तीर्य पुच्छादुत्तरꣳ शेषेऽपः कृत्वा ॥ ६ ॥

'अभिषिञ्चति' इति सूत्रशेषः। स्रुवमग्नौ प्रास्य तदन्ते परिश्रित्संलग्नं पुच्छादुत्तरतः कृष्णाजिनमास्तीर्य हुतशेषेऽपः कृत्वा ॥ ६ ॥

(१) अग्नये स्वाहा० ( वा० सं० १०-५ )।
(२) वाजस्येमम्० (वा०सं० ९-२३,२४,२५,२६,२७,२८,२९,३० )।
(३) वाजस्य नु० ( वा०सं १८-३०,३१,३२,३३,३४,३५,३६ )।

कुत एतत्?—

आभिषेकसामर्थ्यात् ॥ ७ ॥

अन्यथाऽभिषेक एव न भवति(१) ॥ ७ ॥

क्षीरोदके वा(२) वाजपेयिकानीति श्रुतेः ॥ ८ ॥

वा नैवापामासेकः येन क्षीरोदके वाजपेयिकशेषे विद्येते एव । अतश्चा भिषेकोऽपि सम्भवत्येव ॥ ८ ॥

तत्राभिषिच्यते ब्रह्मवर्चसकामश्चित्यन्वारब्धो देवस्य त्वेति ॥ ९ ॥

तत्र कृष्णाजिनेऽभिषिच्यते यजमानश्चित्यन्वारब्धो "देवस्य त्वा(३)" इत्यनेन मन्त्रेण । ब्रह्मवर्चसकामस्य च कृष्णाजिनेऽभिषेकः, "कृष्णाजिने ब्रह्मवर्चसकामम्" (श० ब्रा० ९-३-४-१४) इति वचनात् ॥९॥

तिष्ठन्बुभूषुः ॥ १० ॥

भूतिमिच्छंस्तिष्ठन्नभिषिच्यते ॥ १० ॥

भूत उपविष्टः ॥ ११ ॥

प्राप्तभूति(४)रुपविष्टोऽभिषिच्यते ॥ ११ ॥

बस्तचर्मणि पुष्टीच्छुः ॥ १२ ॥

पुष्टिमिच्छन्बस्तचर्मण्य(५)भिषिच्यते ॥ १२ ॥

उभयेच्छुरुभयोः ॥ १३ ॥

---

(१) अभिषेकस्य द्रवद्रव्यसाध्यत्वात्केवलेन सर्वौषधशेषेण तदसम्भवात्सामर्थ्याच्छेषेऽपामासेकं कृत्वा सोदकेन शेषेणाभिषेकः कर्तव्य इति पूर्वः पक्षः ।

(२) अथ सिद्धान्तः—वाशब्दः पूर्वपक्षनिरासार्थः नैव शेषेऽपामासेकः कार्य इति । यतः शेषमध्ये क्षीरोदके विद्येते । कुतः? "वाजपेयिकानि" इति श्रुतेः । अत्र वाजपेयिकानि वाजप्रसवीयानि, जुहोतीति श्रवणात् । तत्र च नामधेयात्क्षीरोदके स्त एवेति सांप्रदायिकाः । "औदुम्बरे पात्रेऽप आसिच्य पयश्च" (का० श्रौ० १४-४-३४) इत्युक्तेरिति महीधरः ।

(३) देवस्य त्वा० (वा० सं १८-३७) ।

(४) प्राप्तभूतिः ग्रामादिस्वामी ।

(५) बस्तो महाजस्तस्य चर्मणि ।

यो नाम पुष्टिब्रह्मवर्चस उभेऽपीच्छति स उभयोश्चर्मणोर्य्यवस्थि- तोऽभिषिच्यते ॥ १३ ॥

एके दक्षिणतश्चित्ये वा ॥ १४ ॥

स्थितमभिषिञ्चति, "तꣳ हैके दक्षिणतोऽग्नेरभिषिञ्चन्ति" (श० ब्रा० ९-३-४-११) "आहवनीय उ हैकेऽभिषिञ्चन्ति" (श० ब्रा० ९-३-४-१२) इति च श्रुतेः ॥ १४ ॥

प्राश्य चमसमिन्द्राय स्वाहेति षड् जुहोति प्रतिमन्त्रम् ॥१५॥

अग्नौ प्राश्य चमसम् "इन्द्राय स्वाहा"(१) इति षट् पार्थानि जुहोति। एतान्यपि राजसूयिकानि। ततश्च पूर्वपार्थाज्यसंस्कारोऽत्रापि भवति॥१५॥

द्वादशगृहीतं विग्राहं जुहोत्यृताषाडिति प्रतिस्वाहाकारꣳ राष्ट्रभृतो वाट्कारान्तः पूर्वः पूर्वो मन्त्रः ॥ १६ ॥

द्वादशगृहीतमाज्यं विगृह्य जुहोति "ऋताषाड्" इति प्रति- स्वाहाकारं राष्ट्रभृत्संज्ञकान्होमान्। तत्र च वाट्कारान्तः पूर्वः पूर्वो मन्त्रो भवति। उत्तरस्तु स्वाहाकारान्तः। एवं ह्यत्र श्रूयते "मि- थुनानि जुहोति" ( श० ब्रा० ९-४-१-५ ) "गन्धर्वाप्सरोऽभ्यो जु- होति" ( श० ब्रा० ९-४-१-४ ) "पुꣳसे पूर्वस्मै जुहोत्यथ स्त्रीभ्यः, एकस्माऽ इव पुꣳसे जुहोति, बह्वीभ्य इव स्त्रीभ्य, उभाभ्यां वषट्कारेण च स्वाहाकारेण च पुꣳसे जुहोति, स्वाहाकारेणैव स्त्रीभ्यः" ( श० ब्रा० ९-४-१-६ ) इति। एवं श्रवणे सति समाम्नायपरिपठिते मन्त्रे विभागः कर्त्तव्यः—यानि पुल्लिङ्गानि पदानि तान्येकवाक्यतामुपनेया- नि। एवं स्त्रीलिङ्गान्तान्यपि। "ऋताषाड्ऋतधामाग्निर्गन्धर्वः स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा वाट्" इति पूर्वो मन्त्रः। "तस्यौषधयो- प्सरसो मुदो नाम ताभ्यः स्वाहा" इत्युत्तरः। अत्र च "तस्यौषधय" इति सापेक्षत्वादृताषाड्ऋतधामाग्निर्गन्धर्व इत्यनुवर्तते(२) ॥ १६ ॥

---

(१) इन्द्राय स्वाहा० ( वा०सं० १०-५ )।

(२) तथाचैवं द्वादश मन्त्रा विभक्ता भवन्ति—ॐऋताषाड्ऋत- धामाऽग्निर्गन्धर्व्वः स न ऽइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट्।

ॐऋताषाड्ऋतधामाऽग्निर्गन्धर्वस्तस्यौषधयोऽप्सरसोमुदा नाम ताभ्यः स्वाहा (३८)

ॐसꣳहितो विश्वसामा सूर्य्यो गन्धर्वः स न ऽइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट्।

**पञ्चगृहीतं च रथशिरस्यध्यध्याहवनीयं ध्रियमाणे पञ्चकृत्वः स नो भुवनस्येति ॥ १७ ॥**

पञ्चगृहीतमाज्यं चशब्दाज्जुहोति । रथशिरस्यध्यध्याहवनीयं ध्रियमाणे पञ्चकृत्वः "स नो भुवनस्य"(१)इत्यनेन मन्त्रेण ॥ १७ ॥

अत्र विशेषमाह—

**प्रदक्षिणꣳ रथनीडपरिहारः(२) ॥ १८ ॥**

कर्तव्यः ॥ १८ ॥

**पुरुषाहुतिवद्वा ॥ १९ ॥**

वेति विकल्पः ॥ १९ ॥

---

ॐसꣳहितो विश्वसामा सूर्य्यो गन्धर्व्वस्तस्य मरीचयोऽप्सरसऽआयुवो नाम ताभ्यः स्वाहा (३९)

ॐसुषुम्णः सूर्य्यरश्मिश्चन्द्रमा गन्धर्वः स न ऽइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ।

ॐसुषुम्णः सूर्य्यरश्मिश्चन्द्रमा गन्धर्व्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम ताभ्यः स्वाहा (४०)

ॐइषिरो विश्वव्यचा वातो गन्धर्व्वः स न ऽइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ।

ॐइषिरो विश्वव्यचा वातो गन्धर्व्वस्तस्यापोऽप्सरसऽऊर्जो नाम ताभ्यः स्वाहा (४१)

ॐभुज्युः सुपर्णो यज्ञो गन्धर्वः स न ऽइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ।

ॐभुज्युः सुपर्णो यज्ञो गन्धर्व्वस्तस्य दक्षिणाऽअप्सरसस्तावा नाम ताभ्यः स्वाहा (४२)

ॐप्रजापतिर्व्विश्वकर्मा मनो गन्धर्व्वः स न ऽइदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् ।

ॐप्रजापतिर्व्विश्वकर्म्मा मनो गन्धर्व्वस्तस्यऽऋक्सामान्यप्सरसऽएष्टयो नाम ताभ्यः स्वाहा ( वा० सं० १८–४३ )

( १ ) स नो भुवनस्य० (वा० सं० १८–४४) इत्यनेन पञ्चधाऽऽवृत्तेन मन्त्रेण आहवनीयोपरि प्रतिप्रस्थात्रादिना धार्यमाणे रथशिरसि पूर्वसंस्कृतं पञ्चगृहीतमाज्यं पञ्चधा विभज्य पञ्चकृत्वो जुहोति इति तदर्थः ।

( २ ) प्रतिहोमं प्रदक्षिणं रथनीडस्य परिहारः कर्तव्यः । सर्वासु दिक्षु परिहारं परिहृत्य-परिहृत्य परिणीयेत्यर्थः ।

पक्षद्वयेऽपि—

अध्वर्युरभिमुखो रथशिरः(१) ॥ २० ॥

जुहोति ॥ २० ॥

इत्यष्टादशाध्याये पञ्चमी कण्डिका ।

वातहोमान् जुहोत्यञ्जलिनाहृत्य पुरस्ताद्धविर्वेदेरधो दक्षिणस्यां धुर्युत्तरत उत्तरस्यां दक्षि(२)णतो दक्षिणाप्रष्टेः समुद्रोऽसीति प्रतिमन्त्रम् ॥ १ ॥

वातहोमान् जुहोति अञ्जलिना आहृत्य पुरस्ताद्धविर्वेदेः अधो दक्षिणस्यां धुरि । एवमेवोत्तरत आहृत्योत्तरस्यां धुरि । दक्षिणतः पश्चात् आहृत्यान्यं दक्षिणा(३)प्रष्टेरेवमेव । "समुद्रो(४)ऽसि" इति मन्त्रैः प्रतिमन्त्रम ॥ १ ॥

योक्त्रपरिहरणं च सर्वत्र ॥ २ ॥

चशब्दाद्धोमसमनन्तरमेव(५) ॥ २ ॥

प्रगृह्याध्वर्योरावसथहरणम् ॥ ३ ॥

रथस्य कर्तव्यम् ॥ ३ ॥

दक्षिणाकालेऽध्वर्यवे ददाति ॥ ४ ॥

रथम् ॥ ४ ॥

अश्वांश्च ॥ ५ ॥

ददाति ॥ ५ ॥

नव जुहोति यास्त(६) इति प्रतिमन्त्रम् ॥ ६ ॥

---

(१) रथशिर इति द्वितीयैकवचनम् ।

(२) इदमधिकं क्वचित् ।

(३) युगमध्याद्य इत्यर्थः ।

(४) समुद्रोसि० ( वा० सं० १८–४५ ) ।

(५) सर्वत्र त्रिष्वपि होमेषु योक्त्रेण तस्य तस्य हुतस्य वातस्याश्वस्थानीयस्य योजनं करोतीत्यर्थः ।

(६) यास्ते० ( वा० सं० १८–४६, ४७, ४८, ४९, ५० ) अत्र यास्तेऽअग्ने, या वो देवाः, रुच न्नः, तत्त्वा यामि एतेचत्वारः, पञ्चाशत्कण्डिकायां च स्वाहान्ताः पञ्चेति नव मन्त्रा बोद्धव्याः ।

आहुतीः ॥ ६ ॥

जानन्ब्राह्मणोक्ता जुहुयाद्वा ॥ ७ ॥

"यां कां च ब्राह्मणवतीमाहुतिं विद्यात्तामेतस्मिन्काले जुहुयात्" ( श० ब्रा० ९-४-२-२७ ) इति श्रुतेः । तामेव प्रकृत्याह-"न जुहुयान्नेदतिरेचयानि" ( श० ब्रा० ९-४-२-२८ ) इति । विहितप्रतिषेधाद्विकल्पः ॥ ७ ॥

हविर्धानप्रक्षालनाद्याग्नीध्रालम्भनात्कृत्वा धिष्ण्यांश्चिनोत्यष्टेष्टकाँल्लोकम्पृणाभिश्चतुःस्रक्तींस्तिरश्चो न्युप्य न्युप्य ॥ ८ ॥

वैकृतावसरे प्राकृतानुवृत्त्यर्थमाह—हविर्धानप्रक्षालनाद्याग्नीध्रालम्भनात्प्राकृतं कर्म कृत्वा धिष्ण्यांश्चिनोत्यष्टेष्टकान् । 'लोकम्पृणाभिः' इति तद्धर्मप्रवृत्त्यर्थम् । चतुःस्रक्तीन्, तिरश्च इति तिर्यक्प्रस्तारान् नोपरिस्थलिकया चयनम् । न्युप्य न्युप्येति "यं यमेवाध्वरधिष्ण्यं निर्वपति तं तं चिनोति" ( श० ब्रा० ९-४-३-५ ) इति वचनात ॥ ८ ॥

पृश्न्यश्मा चाग्नीध्रीये ॥ ९ ॥

उपधेयः ॥ ६ ॥

सकृन्मन्त्रवचनम् ॥ १० ॥

होत्रीये त्रिरेकविंशत्या ॥ ११ ॥

होतृधिष्ण्ये त्रिर्मन्त्रवचनम्(१)। एकविंशतिभिरिष्टकाभिश्चयनम्॥११॥

ब्राह्मणाच्छंस्ये द्विरेकादशसु षण्मार्जालीये ॥ १२ ॥

शेषा अष्टेष्टकाः ॥ १३ ॥

यावदिष्टकं परिश्रितः परिनिधाय(२) ॥ १४ ॥

"तेषां वै यावत्य एव यजुष्मत्यस्तावत्यः परिश्रित" ( श० ब्रा० ९-४-३-९) इति वचनात् । परिनिधानं परिश्रितां श्रूयते न निखननम् । "स वै पर्य्येव निदधाति" ( श० ब्रा० ९-४-३-२ ) ॥ १४ ॥

पुरीषं च तूष्णीम् ॥ १५ ॥

पुरीषनिर्वापे मन्त्रो माभूदिति 'तूष्णीम्' इत्युक्तम् ॥ १५ ॥

---

( १ ) लोकम्पृण० (वा० सं० १५-५९) इति मन्त्रस्य त्रिः पठनम् ।

( २ ) यस्मिन्धिष्ण्ये यावत्य इष्टका उपहिताः तस्मिन् तावतीः परिश्रित उपदधाति परितो भूमावेव स्थापयति ।

प्राकृतानुवृत्त्यर्थमाह—

**अनुदेशाद्या पुरोडाशस्विष्टकृतोऽभिषेचनीयवत् ॥ १६ ॥**

कर्म भवति(१)। 'एष वोऽमी राजा' इत्यस्य वचनसामर्थ्यात् विलिङ्गस्यापि प्रयोगो भवति। "अथैनं पूर्वाभिषेकेणाभिमृशति" (श० ब्रा० ९-४-३-१६) इति प्रकृत्याह "एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानाᳫं राजा" (श० ब्रा० ९-४-३-१६) इति ॥ १६ ॥

**अग्नियोजनम्प्रातरनुवाकमुपाकरिष्यन्परिधीनालभ्य यथापूर्वमग्निं (२)युनज्मीति प्रत्यृचम् ॥ १७ ॥**

प्रातर्विमोचनम्। प्रातरनुवाकमुपाकरिष्यन्नग्नियोजनं करोति यथासूत्रितम् ॥ १७ ॥

**आग्निमारुतस्तोत्रपुरस्ताद्विमोचनं परिधिषंध्योर्दिवो मूर्धेति प्रत्यृचम् ॥ १८ ॥**

आग्निमारुतस्तोत्रस्य पुरस्तादग्निमोचनं परिधिषंध्यालम्भनं कृत्वा "दिवो मूर्धा"(३) इति प्रत्यृचम् ॥ १८ ॥

**प्रायणीयेऽतिरात्रे युक्त्वोदयनीये विमोकमेके ॥ १९ ॥**

एके अहरहर्युञ्जन्ति च विमुञ्चन्ति च ॥ १९ ॥

**अध्वरसमिष्टयजुरन्त इष्टो (४)यज्ञ इति प्रत्यृचमपरे ॥२०॥**

समिष्टयजुषी जुहोति ॥ २० ॥

**पशुपुरोडाशमन्वनुबन्ध्यस्य देविकाहवीᳫंषि निर्वपति यजप्रैषाणि ॥ २१ ॥**

अनूबन्ध्यस्य पशुपुरोडाशमनु देविकाहविषां निर्वापः क्रियते। यजप्रैषाणि ॥ २१ ॥

तानीदानीमाह—

**अनुमतिराकासिनीवालीकुहूभ्यश्चरवो धाता द्वादशकपालः सर्वहुतः ॥ २२ ॥**

---

(१) अनुदेशादि "सदोद्वारं पूर्वेण" (का० श्रौ० ८-६-२१) इति एतस्मादारभ्य आपुरोडाशस्विष्टकृतः अभिषेचनीयवत् इति राजसूयान्तर्गताभिषेचनीयसोमस्येव कर्म भवति।

(२) अग्निं युनज्मि० ॥ (वा० सं० १८-५१, ५२, ५३)

(३) दिवो मूर्द्धासि० ॥ (वा० सं० १८-५४, ५५)

(४) इष्टो यज्ञो० (वा० सं० १८-५६, ५७,)

कर्तव्यः ॥ २२ ॥

**हृदयशूलान्ते स्रुवाहुतीर्जुहोति यदाकूतादिति प्रत्यृचमष्टौ ॥ २३ ॥**

अनूबन्ध्याहृदयशूलान्ते "यदाकूतात्"(१) इति प्रत्यृचमष्टौ स्रुवाहुतीर्जुहोति ॥ २३ ॥

**चित्रोसीति चित्यनाम कृत्वोपतिष्ठते ये अग्नय(२) इति॥२४॥**

तमेव चित्यम् ॥ २४ ॥

**पयस्या मैत्रावरुणी तूपरमिथुनदक्षिणोदवसानीयान्ते॥२५॥**

उदवसानीयान्तग्रहणं मा भूदुपस्थानान्ते। पयस्यायाश्च तूपरौ छागौ मिथुनाहौं दक्षिणा ॥ २५ ॥

**वर्षत्यसरणमतः ॥ २६ ॥**

"अग्निचिद्वर्षति न धावेत्" इति वचनात् ॥ २६ ॥

**पक्ष्यभोजनम् ॥ २७ ॥**

"न वयसोऽग्नि(३)चिदश्नीयात्" (श०ब्रा० १०-१-४-१३) इति॥२७॥

**सवर्णोपार्थी ॥ २८ ॥**

सवर्णशब्देन द्विजात्यभिधानम्। ततश्च शूद्रानिवृत्तिः। एवं ह्याम्नन्ति। "अग्निं चित्वा" प्रथमं चित्वा "न रामामुपेयात्"इति। रामा च शूद्रा। सा हि "रमणायोपेयते न धर्माय" (निरु० १२-१३) इति ॥२८॥

**द्वितीये स्वामेव ॥ २९ ॥**

द्वितीयेऽग्निचयने विनिवृत्ते स्वामेवोपेयात् "क्षत्रियां वैश्यां च" इति। एवमपि हि श्रूयते इति ॥ २९ ॥

**तृतीये न कां चन ॥ ३० ॥**

तृतीयेऽग्निचयनेविनिवृत्ते न काञ्चनोपेयात् ब्रह्मचार्येव भवति ॥३०॥

**यावज्जीवं व्रतान्यविशेषात् ॥ ३१ ॥**

"अग्निचिद्वर्षति न धावेत्" इत्येवमादीनि भवेयुः। कुत एतत् ? अविशेषात्। न ह्यत्र कालविशेषः श्रूयते। एतावन्तं कालमेतानि व्रतानीति॥३१॥

एवं स्थित आह—

**सम्वत्सरं वा कालस्यानवस्थितत्वात् ॥ ३२ ॥**

संवत्सरं वा यावदेतानि व्रतानि भवेयुः। कुत एतत् ? कालस्यानवस्थितत्वात्। न हि कालो व्यवस्थितः। शास्त्रे व्यवस्थितेन च

(१) यदाकूतात्० ॥ (वा०सं०१८-५८, ५९, ६०, ६१, ६२, ६३, ६४, ६५)
(२) येऽग्नयः (वा०सं०१८-६७) (३) पक्षिणो मांसमग्निचित्।

भावितव्यम् ॥ ३२ ॥

तद्व्रतश्रुतेश्च ॥ ३३ ॥

अपि च तद्व्रतश्रुतिर्भवति "संवत्सरसम्मिता वै व्रतचर्या" ( श० ब्रा० ५-५-३-२ ) इति । तदेतत्पक्षद्वयं प्रदर्शितमाचार्येण । अत्र यः श्रेयस्करतरः पक्षः स एवाभ्युपेयः । कोऽसौ ? "यावज्जीवं व्रतान्येतानि" इति । कुत एतत् ? अग्निचित्संयोगात् । अग्निं चितवान् यः सोऽग्निचिदुच्यते । यावज्जीवं चासावग्निचित् । अतो व्रतान्यपि तावदेवेति । आचार्यस्याप्ययमभिप्रायः । येन विश्वजिद्याजिनः संवत्सरसम्मितां व्रतचर्यामाह-"संवत्सरं न याचेत्" ( का० श्रौ० २२-१-३२ ) इति । यत्पुनरुक्तं "संवत्सरसम्मिता वै व्रतचर्या" इति, उक्तविधिशेषत्वात्तद्विषयमेव तदिति ॥ ३३ ॥

चित्याशक्तौ पुनः सोमेज्यायां स्वयमातृण्णाविश्वज्योतिर्ऋतव्यानामन्यतमाः ॥ ३४ ॥

उपधेयाः । "स्रवत्यु हैषाऽग्निचित आहुतिः सोमाहुतिर्यामनिष्के जुहोति" ( श० ब्रा० ९-५-१-५७ ) इति प्रकृत्यैवमेव श्रुतत्वात् । "स स्वयमातृण्णा एवोपदधीत" "तथा ऋतव्या एवोपदधीत" "विश्वज्योतिष एवोपदधीत" ( श० ब्रा० ९-५-१-५८, ५९, ६० ) ॥ ३४ ॥

पुनश्चितिम् ॥ ३५ ॥

"पुनश्चितिमेवोपदधीत" ( श० ब्रा० ९-५-१-६१ ) इति च ॥३५॥

अचयनं वा(१) ॥ ३६ ॥

कुत एतत्?—

चित्यस्याहवनीयाभिसम्पत्तेः(२) ॥ ३७ ॥

आहवनीय एव चित्याभिसम्पत्तिश्रवणात् । "यो वावचितेऽग्निर्निधीयते तामेवेष्टकामेष सर्वोऽग्निरभिसम्पद्यते" ( श० ब्रा० ९-५-१-६१ ) इति ॥ ३७ ॥

इत्यष्टादशाध्याये षष्ठी कण्डिका ।

इति श्रीकर्कोपाध्यायकृतौ कात्यायनसूत्रभाष्ये अष्टादशोऽध्यायः ।

---

( १ ) स्वयमातृण्णादीनां अचयनमेव भवति ।

( २ ) एकवारं चित्यस्योपरि निधानेनैवाहवनीयाग्नेः सर्वदा चित्यात्मकता सम्पन्ना ।

# एकोनविंशोऽध्यायः ।

आचार्येणाग्निरनुविहितः । इदानीमवसरप्राप्तं सौत्रामण्यनुविधानं क्रियते ।

**ब्राह्मणयज्ञः सौत्रामण्यृद्धिकामस्य ॥ १ ॥**

"तस्मादेष ब्राह्मणयज्ञ एव यत्सौत्रामणी" (श०ब्रा०१२-९-१-१)इति वचनात् । ब्राह्मणग्रहणं क्षत्रियवैश्ययोर्निवृत्त्यर्थम् । सा च ऋद्धिकामस्य भवति, शाखान्तरात् ।

ननु तयोरपि निधनविशेषविधानमस्ति—"सञ्जित्यै विजित्यै सत्यजित्यै जित्यै" इति क्षत्रियस्य, "सम्पुष्ट्यै विपुष्ट्यै सत्यपुष्ट्यैपुष्ट्यै" इति वैश्यस्य । उच्यते, क्षत्रियवैश्ययोर्विशेषश्रवणमग्न्यङ्गसौत्रामणीविषयम् । कुत एतत् ? अग्नौ हि तयोरपि प्राप्तिरस्ति । तस्माद् वृद्धिकामस्य ब्राह्मणस्यैव, नेतरयोर्वर्णयोरिति । 'सौत्रामणी' इति कर्मनामधेयम् । तच्चेष्टिपशुसमुदायस्य, सन्निधानात् लिङ्गाच्च । "उभयं वै सौत्रामणीष्टिश्च पशुबन्धश्च" ( श० ब्र० १२-७-२-१२ ) इति । तथा च आचार्यप्रस्थानम्—'सौत्रामण्यामिष्टिपशवो भिन्नतन्त्राः कालभेदात्' इति। एवं प्राप्ते उच्यते-त्रिपशोर्वा नामधेयम् । कुत एतत् ? लिङ्गादेव । "आत्मा वै यज्ञस्य सौत्रामणी बाह्व ऐन्द्रश्च वयोधश्च"(श० ब्रा० १२-९-३-१६ इत्यैन्द्रवायोधसव्यतिरिक्ते वस्तुनि सौत्रामणीशब्दमाह । तथा-"तद्यदेतौ सौत्रामणिकं यूपमेतौ यूपावभितो भवतः" ( श० ब्रा० १२-९-३-१६ ) इति सौत्रामणीशब्दं त्रिपशाविवाह । यच्चोक्तम् "उभयं वै सौत्रामणीष्टिश्च पशुबन्धश्च" इति, तदितरेषामङ्गत्वेऽपि सम्भवत्येव । यद्वा पयोग्रहसुराग्रहसम्बन्धेनोभयरूपा सौत्रामणीति । आचार्यप्रस्थानन्तु प्रकरणोपलक्षणार्थम् । प्रयोजनं त्रिपशोरेवान्तराये प्रयोक्तृत्वमिति ॥ १ ॥

**अग्निचित्सोमयाजिसोमातिपूतसोमवामिनाम् ॥ २ ॥**

एभिश्च निमित्तैः सौत्रामणी भवति । तत्र 'अग्निचित्सोमयाजि' इति ग्रहणम् अग्निमतः सोमस्याङ्गं यथा स्यादिति । स हि फलवान्, निष्फलोऽग्निरिति । एवं च सत्यग्निमत्सोमयागान्ते सौत्रामणी भवति ।

ननु च "अग्निं चित्वा सौत्रामण्या यजेत" इति वचनसामर्थ्यात् चयनसमनन्तरमेव प्राप्नोति । नेत्युच्यते, 'अग्निं चित्वा' इत्यत्राग्नेः पार-

र्थेनोपादानम् "अग्निं चित्वा" इति चयनेन तत्कार्यमभिनिर्वर्त्येत्येतदुक्तं भवति। किं च तत्कार्यं? तत्र स्थितेनाग्निना सोमयागाभिनिर्वृत्तिः। तस्मादग्निमतः सोमस्याङ्गमिति। तदुक्तमाचार्येण "अग्निचित्सोमयाजि" इति।

ननु च 'भिन्ने जुहोति' 'स्कन्ने जुहोति' इति यथाऽत्र निमित्तकालता नैमित्तिकस्य, एवमिहापि चयनाभिनिर्वृत्तिकालता किन्न भवति? विषमोऽयमुपन्यासः, यत्र हि निमित्तं स्वतन्त्र(१)मेव भवति तत्र निमित्तकालता नैमित्तिकस्य युक्ता। तदुक्तमाचार्येण "कालो वा प्रत्ययात्" ( का० श्रौ० २५-१-३ ) इति। इह पुनरग्नेः सोमाङ्गतया विधानसामर्थ्यात् अग्निकार्याभिनिर्वृत्त्युत्तरकालतैव युक्तरूपेति 'अग्निं चित्वा इत्यस्यार्थः। तस्मादग्निमता यः सोमेनेष्टवांस्तस्यैव सौत्रामणी।

ननु चानग्निमतोऽपि सोमस्याङ्गत्वेन सौत्रामणी श्रूयते—"सोमेनेष्ट्वा सौत्रामण्या यजेत" (श०ब्रा०१२-८-२-२) इति। नैतदेवम्, 'अग्निश्चित्वा' इत्यस्य वाक्यस्याग्निप्रकरणे श्रुतत्वात्तदङ्गता युक्ता। यस्य प्रकरणं तस्यान्यद्विधीयमानं तदङ्गमेव भवतीति न्याय्यम्। "सोमेनेष्ट्वा सौत्रामण्या यजेत" इति सौत्रामणीप्रकरणे पाठः। तेन प्रत्युत विपरीतवृत्त्या सोमस्यैव सौत्रामण्यङ्गता भवति, न सौत्रामण्याः सोमाङ्गता। यथा "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इति वाजपेयं प्रकृत्य विधानात् वाजपेयाङ्गता बृहस्पतिसवस्य।

तस्मान्नानग्निमति सोमे सौत्रामणी। "सोमेनेष्ट्वा सौत्रामण्या यजेत' इति किमर्थस्तर्हि पाठः? अग्निमत्सोमस्यानुवादोयमित्यदोषः।

यद्वा 'अग्निश्चित्वा' इत्यस्यैव शेषोऽयम्। अग्निमता(२) 'सोमेनेष्ट्वा' इत्येतदुक्तं भवति।

ननु च क्रमार्थमेतद्वाक्यं कस्मान्न भवति? यथा "दर्शपूर्णमासाभ्यामिष्ट्वाऽन्येन यजेत" इति, एवं "सोमेनेष्ट्वा सौत्रामण्या यजेत" इति? नैतदेवम्-अङ्गत्वप्रतिपादनस्वरूपो ह्यर्थवादोऽत्र भवति। "सोमेनेष्ट्वा सौत्रामण्या यजेत" इत्युक्त्वाआह "यथा धेनुर्दुग्धा पुनराप्यायेतैवꣳ हैत्र पुनराप्यायते" इति। तस्मादग्निमत्सोमाङ्गमेवेति। सोमातिपूतसोमवामिनोश्च सौत्रामणी भवति, शाखान्तरश्रवणात्। (३)सोमातिपूतः

( १ ) 'स्वयमेव' इ० पा०।

( २ ) 'अग्निचिता' इ० पा०।

( ३ ) मुखेतरच्छिद्रेण सोमवामो सोमातिपूतः, मुखेन च तद्वामी सोमवामी इति स्पष्टं महीधर भाष्ये।

सोमवामी च ब्राह्मण एव । न हि क्षत्रियवैश्ययोरतद्विशेषणमिति ।

ननु च सोमकार्ये तयोरपि न्यग्रोधविधानम्. तेन तदतिपवने तद्वमने च किमिति न भवति? नैतदेवम्, यदि नाम कार्यापत्त्या धर्मप्राप्तिर्भवति । न चायं सोमधर्मः । किं तर्हि तदतिपवने यागान्तरविधानमिति । अग्निचितस्तु वर्णत्रयस्यापि भवति, अग्निसंयोगविधानात्॥ २ ॥

राज्ञो(१)पवरुद्धस्य च ॥ ३ ॥

सौत्रामणी भवति । राज्ञः अपरुद्धस्य राज्यात्प्रच्यावितस्येत्यर्थः, "दुष्टरीतुर्ह पौंसायनो दशपुरुषं राज्यादपरुद्ध आस" (श० ब्रा० १२-९-३-१) इति तद्विधानात् ॥ ३ ॥

अलब्धपशोरपशोः ॥ ४ ॥

सौत्रामणी भवति । पशुयोग्यः सन् यो नाम पशून्न विन्दते सोऽलब्धपशुरपशुः ॥ ४ ॥

आदित्य(२)श्चरुः ॥ ५ ॥

'भवति' इति सूत्रशेषः "आदित्यं चरुं यक्ष्यमाणो निर्वपति" (श० ब्रा० १२-८-२-११) इति श्रुतेः ॥ ५ ॥

अन्ते(३)च ॥ ६ ॥

आदित्यश्चरुर्भवति । "आदित्यमीजान" (श० ब्रा० १२-९-२-११) इति । ईजानशब्द इष्टवत्येव भवति ॥ ६ ॥

आमिक्षाया(४)वा पूर्वः ॥ ७ ॥

आदित्यश्चरुर्भवति । तस्य हि कक्षौ चरव इति कक्षसंस्तवः । वायोधसस्य च बाहुसंस्तवात् पयस्यान्ते च विधानात् आमिक्षायाः पूर्वो भवतीति सम्प्रदायः । विकल्प इत्यपरे ॥ ७ ॥

धेनुर्दक्षिणा ॥ ८ ॥

अस्यादित्यस्य चरोर्भवति ॥ ८ ॥

तत्र विभागमाह—

वत्सः पूर्वे ॥ ९ ॥

---

(१) स्वराज्यात्प्रच्यावितस्य राज्ञः स्वराज्यप्राप्त्यर्थं सौत्रामणी भवति ।

(२) अदितिदेवताकः प्रथमं चरुर्भवति ।

(३) अन्ते समाप्तौ स एव चरुर्भवति ।

(४) अन्ते य आदित्यश्चरुः स आमिक्षायाः पयस्याः पूर्वो भवति ।

च(१)रौ ॥ ९ ॥

मातोत्तरे ॥ १० ॥

दीयते । "वत्सं पूर्वस्यां ददाति मातरमुत्तरस्याम्" ( श० ब्रा० १२-९-२-११ ) इति । इष्ट्यपेक्षया स्त्रीलिङ्गान्तता ॥ १० ॥

अभ्यादधामी(२)ति प्रत्यृचमाहवनीये तिस्रः समिधोऽभ्यादधाति ॥ ११ ॥

उद्धृत्याहवनीयम् ॥ ११ ॥

सत्यवादी ॥ १२ ॥

'यजमानो भवति' इति शेषः । अत्र चेष्टिषु केचिद् व्रतग्रहणं नेच्छन्ति, सौत्रामणिकस्य सत्यनियमस्य विद्यमानत्वात् । यथा दीक्षितस्य सत्यवदननियमेन ज्योतिष्टोमे व्रतग्रहणाभावः, एवमिहापीति । तदेतन्नातीव युक्तरूपम् । येन चोदकपरिप्राप्तसत्यनियमाबाधेनापि सौत्रामणिकस्य सत्यनियमस्य प्राप्तिरस्त्येव तद्व्याप्यप्रदेशाद्बहिः । अपि चेष्टिविधानेन स एव पूर्वसत्यनियमः प्राप्नोति । प्राकृतसत्यनियमगृहीता एव इष्टयो विधीयन्ते । तस्मादयमन्तरालधर्म इति । ज्योतिष्टोमेऽप्येवमेवास्त्विति चेत् ? न, दीक्षितनिबन्धनत्वात्तस्य यावद्दीक्षितकालभावित्वाच्च सत्यनियमस्य प्राकृतस्य नावसर इति बाध्यते । प्रयोजनमिष्टिषु व्रतं गृह्यत एव ॥ १२ ॥

हुतोच्छिष्टभक्षः ॥ १३ ॥

यजमानो भवति । अग्निहोत्रहुतशेषभक्ष इत्यर्थः ॥ १३ ॥

चतूरात्रम् ॥ १४ ॥

'अयं क्रतुर्भवति' इति सूत्रशेषः । किं वा स्यात्, पौर्णमास्यां सर्वेष्टयो मा भूवन्निति ॥ १४ ॥

अग्निहोत्रं जुहोति ॥ १५ ॥

पुनर्विधानसामर्थ्यात् स्वयमेवेति नियमः ॥ १५ ॥

ऐन्द्रः(३) पशुः ॥ १६ ॥

---

( १ ) पूर्वे प्रथमे आदित्यचरौ वत्सो दक्षिणा भवति ।

( २ ) अभ्यादधामि० (वा० १'० २०-२४,२५२६ ) आदित्येष्ट्यनन्तरं त्रिपश्वर्थमाहवनीयदक्षिणाग्नी विहृत्याग्न्यन्वाधानं ब्रह्मवरणं च कृत्वाऽऽहवनीयमुद्धृत्य तत्र यजमानस्तिस्रः समिधः प्रत्यृचमादधाति ।

( ३ ) प्रथममैन्द्रः पशुर्भवति तत आदित्यग्रहः ।

'कर्तव्यः' इति शेषः ॥ १६ ॥

**चरुपश्वोर्विपर्यासमेके ॥ १७ ॥**

इच्छन्ति, कक्षसंस्तवाच्चरोः बाहुसंस्तवाच्चैन्द्रस्येति । यद्येवं पूर्वः कस्मादादित्य उक्तः ? "यक्ष्यमाणो निर्वपति" इत्यतो वचनात् । अस्तु तथेति चेत् ? न, कक्षसंस्तवात्, बाहुसंस्तवाच्चेतरस्य । अन्तर्बहिर्भावमङ्गीकृत्य संस्तवोऽयमिति । कथं तर्हि यक्ष्यमाण इति भवति । प्राक्त्रिपशुकालात् यक्ष्यमाणो भवति ॥ १७ ॥

**अन्तः पात्यस्थाने चर्मणि सुरासोमविक्रयिणः सीसेन शष्पक्रयस्तोक्मानामूर्णाभिर्लाजानाꣳसूत्रैः सुरासोमविक्रयिन् कय्यास्ते सुरासोमा३ इत्यामन्त्र्यामन्त्र्य सर्वेषु ॥ १८ ॥**

प्रक्रमतृतीयेन सोमवदुत्तरामिति वक्ष्यति । तत्रान्तःपात्यस्थानमस्ति । तत्र सुरासोमविक्रयिणः सकाशाच्चर्मणि सीसेन शष्पक्रयः कर्तव्यः । सीसं प्रसिद्धमेव । 'शष्प'शब्देन व्रीहयो विरूढा उच्यन्त इति सम्प्रदायः । अपरे तु 'शष्प'शब्दं तृणमात्रवाचकमाहुः । प्रसिद्धो ह्ययं तृणेष्वपीति । 'तोक्म'शब्देन विरूढा यवा उच्यन्ते । तेषामूर्णाभिः(१) क्रयः, लाजानां(२) च सूत्रैः । यच्च पठ्यते-"ऊर्णासूत्रेण क्रीणाति" ( श० ब्रा० १२-७-२-११ ) इति, स द्वन्द्वैकवद्भावः । 'सुरासोमविक्रयिन् कय्यास्ते सुरासोमा' इत्यामन्त्र्यामन्त्र्य क्रयः कर्तव्यः । 'सर्वेषु' इति च सर्वग्रहणं नग्नहुविषयम् । तस्यापि चामन्त्र्यानियतद्रव्येण क्रयणं कर्तव्यम् ॥ १८ ॥

**क्लीबादेके ॥ १९ ॥**

क्रेतुमिच्छन्ति । क्लीबः प्रसिद्ध एव ॥ १९ ॥

**दक्षिणेन हुत्वा नग्नहुचूर्णानि कृत्वा तांश्च व्रीहिश्यामाकौदनयोः पृथगाचामौ निषिच्य चूर्णैः सꣳसृज्य निदधाति तन्मासरम् ॥ २० ॥**

दक्षिणेन द्वारेण प्रवेश्याग्न्यागारं नग्नहु(३)चूर्णानि कृत्वा । नग्नहुः

---

( १ ) ऊर्णाभिः मेषरोमभिः ।

( २ ) लाजानां भृष्टव्रीहीणाम् ।

( ३ ) नग्नहुशब्दार्थमाह—

किमेव उच्यते। तांश्च शष्पादीन् चूर्णयित्वा व्रीहिश्यामाकौदनयोः पृथगाचामौ निषिच्य चूर्णैः संसृज्य निदधाति 'तन्मासरम्' उच्यते। व्रीहिश्यामाकाभ्यां च सुरा निष्पाद्यते। सा च यागसाधनम्। तेन सा तद्धर्मैरभिसम्बध्यते। अतस्तयोश्चतुर्मुष्टिकग्रहणपूर्वकं पृथगोदनौ निष्पाद्येते॥ २०॥

**ओदनौ चूर्णमासरैः सꣳसृज्य स्वाद्वीं त्वाꣳशुना त इति॥ २१॥**

चूर्णमासरसꣳसृष्टावोदनौ "स्वाद्वीं(१) त्वा" इति मन्त्राभ्यां कुम्भ्यां प्रक्षिपति॥ २१॥

**त्रिरात्रं निदधाति॥ २२॥**

प्रक्षिप्ता च त्रिरात्रं निधेया(२) सुरा॥ २२॥

**एकस्याः पयसाऽपाकृतेनाश्विनेन परिषिञ्चति परीतो षिञ्चतेति॥ २३॥**

---

सर्जत्वक्त्रिफला चैव, शुण्ठी चैव पुनर्नवा।
चतुर्जातकसंयुक्ता, पिप्पली गजपिप्पली॥
वंशाऽवका बृहच्छत्रा, चित्रकं चेन्द्रवारुणी।
अश्वगन्धां समुत्पाट्य, मूलान्येतानि निर्दिशेत्॥
धान्यकं च यवानी च, जीरकं कृष्णजीरकम्।
द्वे हरिद्रे वचा चैव, विरूढा व्रीहयो यवा॥ इति।

क्रयणानन्तरं तानि शष्पादीन्यादाय दक्षिणेन हृत्वा ऽग्न्यगारं प्रवेश्य पूर्वं नग्नहुचूर्णानि कृत्वा सर्जत्वगाद्यौषधानि तूष्णीं पिष्ट्वा शष्पतोक्मलाजांश्च चूर्णीकृत्य दर्शपूर्णमासधर्मेण पात्रासादनादि व्रीहि श्यामाकचतुर्मुष्टिग्रहणपूर्वकं फलीकरणान्तं समन्त्रकं कृत्वा बहुतरोदके पृथक्पृथक्चरुं पक्त्वा शृतालम्भनानन्तरं व्रीहिश्यामाकौदनयोः पृथगाचामौ निषिच्य पृथग्भिन्नयोः पात्रयोश्चर्वोर्मध्यादतिरिक्तमुष्णोदकमवस्राव्य तदुदकं नग्नहुप्रभृतिभिश्चतुर्भिश्चूर्णैः संसृज्य स्थापयति। तन्मासरं तस्य चूर्णसंसृष्टस्याचामस्य मासरमितिसंज्ञा।

(१) स्वाद्वींत्वा० (वा०सं०१९-१) अꣳशुना ते० (वा०सं०२०-२७)

(२) एवमाचामयोश्चूर्णसंसर्गानन्तरमोदनौ चतुर्भिश्चूर्णैः संसृज्य "स्वाद्वीन्त्वा" "अꣳशुना त" इति द्वाभ्याम्मन्त्राभ्यां एकस्मिन्महति पात्रे प्रक्षिप्य "तिस्रो रात्रीः" (श० ब्रा० १२-७-३-६) इत्यादिश्रुतेः त्रिरात्रं निदधाति सुगुप्ते देशे स्थापयति इति जीर्णसम्प्रदायः।

एकस्या गोः पयसाऽपाकृतेनाश्विनेन सुरां परिषिञ्चति "परीतो षिञ्चता"(१) इत्यनेन मन्त्रेण। "एकस्यै दुग्धेन प्रथमाᳪँरात्रिं परिषिञ्चति" ( श० ब्रा० १२-८-२-११ ) इति वचनात् । अश्विनावुद्दिश्यापाकरणं कर्तव्यम् । तच्चापूर्वत्वादप्रधानत्वाच्च पयसः 'अश्विभ्यामपाकरोमि' इति । 'गोस्पर्शनमात्रमेव' इति सम्प्रदायः । अपरे तु धर्मवदपाकरण-मिच्छन्ति ॥ २३ ॥

शष्पचूर्णानि चावपति ॥ २४ ॥

च शब्दात्सुरायाम् ॥ २४ ॥

सारस्वतेन द्वयोः प्रातः ॥ २५ ॥

प्रातः शब्देन च द्वितीयमहरभिधीयते । तत्रापि च रात्रावेवाभि-षेकः । "प्रथमाᳪँ रात्रिं परिषिञ्चति" इति प्रकृत्य "द्वयोर्दुग्धेन द्वि-तीयाम्" ( श० ब्रा० १२-८-२-११ ) इत्याह । द्वितीयां रात्रिमिति गम्यते(२) ॥ २५ ॥

तोक्मचूर्णानि च ॥ २६ ॥

आवपति ॥ २६ ॥

ऐन्द्रेणोत्तमे तिसृणाम् ॥ २७ ॥

(३)गवां दुग्धेनैन्द्रेण परिषिञ्चति ॥ २७ ॥

लाजचूर्णानि च ॥ २८ ॥

आवपति । अत्र चूर्णानां पयसश्च संस्कारकत्वम् । साधनं तु व्रीहि-श्यामाकावेव । अतस्तयोरेव देवतोद्देशेन ग्रहणम ॥ २८ ॥

इत्येकोनविंशेऽध्याये प्रथमा कण्डिका ।

---

वेदी मिमीते वरुणप्रघासवत् ॥ १ ॥

उत्तराऽन्या भवति दक्षिणाऽन्येति । दक्षिणस्याः प्रतिप्रस्थातृकर्तृ-कता वतिना लभ्यते ॥ १ ॥

प्रक्रमतृतीयेनावृत्तेनोत्तराᳪँ सोमवत् ॥ २ ॥

---

( १ ) परीतो षिञ्चता० ( वा० सं० १९-२ )

( २ ) "सरस्वत्या अपाकरोमि" इति गावौ स्पृष्ट्वा दोहितेन त-योर्दुग्धेन तेनैव मन्त्रेण सुरां सिञ्चतीत्यर्थः ।

( ३ ) तृतीयेन्हि "इन्द्राय सुत्राम्णेऽपाकरोमि" इति स्पृष्टानां तिसृणां गवामित्यर्थः ।

प्रक्रमस्य तृतीयं (१)प्रक्रमतृतीयम् । तेनोत्तरस्यां वेद्यामावृता मानक्रिया सोमवत्कर्तव्या । 'सोमवत्' इति च प्राची षट्त्रिंशत् पश्चात्रिंशत्त्रयस्त्रिंशद्वा पुरस्ताच्चतुर्विंशतिः तृतीयेनेति कुतोऽध्यवसितम् ? 'वितृतीये यजेत वितृतीयं वै सोमस्य सौत्रामणी' इति वचनात् । एवं च सति यदि प्रक्रमस्य तृतीयं गृह्यते ततः क्षेत्रस्य नवमभागः परिच्छिद्यते । तत्र वितृतीये यजेतेत्यसमर्थं स्यात् । तस्मात्प्रक्रमशब्देन प्रक्रमपरिच्छिन्नं क्षेत्रमभिधीयते, यथा पादावृत्त्या । परिच्छिन्नं क्षेत्रं पादावर्तशब्देनाभिधीयते, एवं प्रक्रमपरिच्छिन्नं प्रक्रमशब्देन । तस्य तृतीयं प्रक्रमतृतीयम् । तेन च मानस्याशक्यत्वात् परिच्छेदकरणं प्रमाणं लक्ष्यते । तेन प्रमाणेन सोमवत् क्रियोत्तरस्याः । यद्वा प्रक्रमपरिच्छिन्नक्षेत्रतृतीयकरणीप्रमाणेन सोमवदावृत्तेनेति । प्रक्रमतृतीयकरणीप्रकारश्च शुल्बकारेणोक्त एव ॥ २ ॥

## तयोः पश्चात्खरौ करोति ॥ ३ ॥

तयोर्वेद्योर्निष्पन्नस्वरूपयोः पश्चाद्भागे खरौ करोति । ख(२)रकरणं च शा(३)खान्तरे विहितमेव ॥ ३ ॥

## श्वः (४)प्रणयनीयाधानादि करोत्याज्यासादनात् स्फ्यादि करोति दक्षिणस्यां वरुणप्रघासवत् ॥ ४ ॥

एवं चतुर्दश्यां उत्तरवेदिच्छादनान्तोत्तरा वेदिर्भवति, दक्षिणोत्करकरणान्ता । तस्यां च 'वरुणप्रघासवत्' इति वत्युपदेशात्प्रतिप्रस्थाता कर्ता ॥ ४ ॥

## सौरमेवास्याम् ॥ ५ ॥

दक्षिणस्यां (५)सौरमेव भवति । एवकारकरणं च तदङ्गाभावज्ञापनार्थम् । तत्कुतः ? अत्र हि श्रूयते "आश्विनोऽजो धूम्रः सारस्वतो मेष ऐन्द्र ऋषभ" इति । तथा "पयश्च सुरा च भवतः" (श० ब्रा० १२-

---

( १ ) प्रक्रमतृतीयञ्च—शुल्बसूत्रे ४५ । तत्कारिकायां च—
पदस्याक्ष्णया तिरश्चो तयोरक्ष्णया च भवेत् ।
सौत्रामण्या मिमातव्या वेदिः सोमवदुत्तरा ॥ ( शु०का० १६ )

( २ ) संस्कारनिमित्तकत्वात्खरशब्दस्य ।

( ३ ) 'प्रदेशान्तरे' इ० पा० ।

( ४ ) श्वः शब्देन चतुर्थं यजनीयमहरुच्यते पौर्णमासी अमावास्या वा ।

( ५ ) अस्यां दक्षिणस्यां वेदौ केवलं सौरमेव कर्म भवति ।

७-३-८) इति सर्वस्यास्यैकतन्त्र्यम् । तत्र वचनाद्दक्षिणेऽग्नौ सुराग्रहहोमः । "दाक्षिणेऽग्नौ सुराग्रहान् जुह्वति" (श०ब्रा० १२-९-३-१२) इति । तदङ्गान्युत्तर एव । तथा चाह–"उत्तरेऽग्नौ पशुभिः पुरोडाशैः पयोग्रहैरितिचरन्ति यदुचान्यत्" (श०ब्रा०१२-८-३-१४) इति । अन्यग्रहणेन सौरग्रहाङ्गान्युच्यन्ते । तान्युत्तरस्यामेवैकतन्त्र्यात् । अतश्च आचार्येण ज्ञापितमेतत् 'सौरमेवास्यां' भवति । एवकारकरणात् अङ्गान्युत्तर एव । एवं च कृत्वा तन्त्रैकत्वान्न दक्षिणवेद्यर्थं प्रणीताः क्रियन्ते । 'अग्निप्रणयनम्' इत्याहवनीयादेव दक्षिणस्याम् । सपाशुकेषु चातुर्मास्येषु तु तन्त्रभेदाद्दाक्षिणवेद्यर्थं प्रणीताप्रणयनं क्रियते गार्हपत्याच्चाग्निप्रणयनम् ॥५॥

**श्व(१)भ्रं खात्वा खरमपरेण चर्मावधाय प(२)रिस्रुतमासिच्य कारोतरमवदधाति कारोतराद्वा चर्मणि मन्त्रलिङ्गात्पूतामादत्ते सिञ्चन्ति परिषिञ्चन्तीति ॥ ६ ॥**

दक्षिणां वेदिश्रोणिमपरेण श्वभ्रं खात्वा चर्मावधाय परिस्रुतमासिच्य तत्र कारोतरमवदधाति सुरापावनाय । कारोतरं च (३)सुरापावनं प्रसिद्धं शौण्डिकानाम् । ततः पूतां सुरामादत्ते "सिञ्चन्ति परिषिञ्चन्ति" (४)इत्यनेन मन्त्रेण । कारोतराद्वा पतितां चर्मणि गृह्णन्तीति । कुत एतत् ? चर्मणि मन्त्रलिङ्गात् । "कारोतरेण दधतो गवां त्वचि" ( वा० सं० १९-८२ ) इति मन्त्रलिङ्गमप्यर्थप्राप्तस्योपायस्य नियामकं भवति । यद्येवं कारोतरादेव पतितां चर्मणि गृह्णाति । सम्प्रदाये तु विकल्पः(५) ॥ ६ ॥

**(१)सते पुनाति गोऽश्ववालवालेन पुनाति ते परिस्रुतामिति ॥ ७ ॥**

सतशब्दः पात्रवाची । तच्च पालाशम् । तत्र हि सुरा न विनाशमुपयाति । तत्र गोऽश्ववालपवित्रेण सुरां पुनाति "पुनाति ते परिपुनाति ॥ ८ ॥

---

( १ ) गर्तम् । ( २ ) सुराम् ।

( ३ ) चालनिका ।

( ४ ) सिञ्चन्ति परिषिञ्चन्ति० ( वा० सं० २०-२८ )

( ५ ) अथवा पूर्वं चर्मणि कारोतरमवधाय तत्र सुरामासिञ्चति तथा च सति कारोतराच्चर्मणि सुरा पतति । कुतः ? मन्त्रलिङ्गात् "कारोतरेण दधतो गवांस्त्वचि" इति पूतां सुरामादत्ते । (१)

स्रुतम्''(१) इत्यनेन मन्त्रेण ॥ ७ ॥

**वायोः पूत(२) इति सोमातिपूतस्य ॥ ८ ॥**

**प्राङि(३)ति तद्वामिनः ॥ ९ ॥**

'पुनाति' इति शेषः ॥ ९ ॥

**उत्तरस्यां पयो वैतसेऽजाऽविलोमपवित्रेण ब्रह्मक्षत्रमिति ॥ १० ॥**

उत्तरस्यां वेद्यां अजाऽविलोमपवित्रेण वैतसे(४)पात्रे पयः पुनाति "ब्रह्मक्षत्रम्" (५)इत्यनेन मन्त्रेण । तच्च पयो यागार्थत्वाद्धर्मवद्भवति१०॥

**ब्रह्मानुमन्त्रणमध्वर्यो अद्रिभिरिति ॥ ११ ॥**

पूयमानं पयो ब्रह्माऽनुमन्त्रयते "अध्वर्यो अद्रिभिः"(६) इति ॥११॥

**पयोग्रहान् गृह्णाति कुविदङ्गे(७)ति ॥ १२ ॥**

अनेन मन्त्रेण ॥ १२ ॥

**पृथगुपयाम(८)योनी ॥ १३ ॥**

प्रतिग्रहं भवतः ॥ १३ ॥

**खरयोः सादनम् ॥ १४ ॥**

पयोग्रह(९)सुराग्रहाणां च कर्तव्यम् ॥ १४ ॥

**आश्विनमा(१०)द्रवत्येन ॥ १५ ॥**

---

( १ ) पुनाति ते परिस्रुतं ( वा० सं० १९-४ )

( २ ) वायोः पूतः पवित्रेण प्रत्यङ्० ( वा० सं० १९-३ )

( ३ ) वायोः पूतः पवित्रेण प्राङ्क्सोमो० ( वा० सं० १९-३ )

( ४ ) वेतसवृक्षविकारे पात्रे ( वैतसो जलजम्बुकः )

( ५ ) ब्रह्म क्षत्त्रम्० ( १९-५ )

( ६ ) अद्ध्वर्य्योऽअद्रिभिः० ( वा० सं० २०-३१ )

( ७ ) कुविदङ्ग० ( वा० सं० १९-६ )

( ८ ) अत्र मन्त्रसमाम्नाये 'उपयामगृहीतोसि' 'एष ते योनिः' इत्येते द्वे यजुषी सकृत्पठिते अपि त्रिषु ग्रहेषु पृथग्भवतः ।

( ९ ) 'पयोग्रहाणाम्' इ० पा० ।

( १० ) द्रवत्वात्तत्स्रवेण स्यान्नवा गृह्णातिशब्दतः ।
यत्रावद्यतिशब्दः स्यात्स्रुवस्तत्र प्रवर्तते ॥
इति वाजिनभाष्ये हि प्रोक्तं तेनात्र नोदितम् ।
उपस्तराभिघारौ स्तो न तयोर्विनिवर्तकम् ॥

पात्रेण गृह्णाति ॥ १५ ॥

**गोधूमकु(१)वलचूर्णानि चावपति तेजोसी(२)ति ॥१६॥**

'च' शब्दाद्ग्रहे ॥ १६ ॥

**सारस्वतमौदुम्बरेण ॥ १७ ॥**

पात्रेण गृह्णाति ॥ १७ ॥

**उप(२)वाकबदरचूर्णानि च वीर्यमसी(३)ति ॥ १८ ॥**

'च' शब्दादावपति। उपवाकशब्देन इन्द्रयवः ॥ १८ ॥

**ऐन्द्रं नैयग्रोधेन ॥ १९ ॥**

**यवक(४)र्कन्धुचूर्णानि च बलमसी(५)ति ॥ २० ॥**

आवपति ॥ २० ॥

**स्थालीभिः सौराञ्नाना हि वामिति व्यत्यासम् ॥ २१ ॥**

सौरान् ग्रहान् गृह्णाति "नाना हि वाम्"(६) इत्यनेन मन्त्रेण। तांश्च गृह्णन् व्यत्यासेन गृह्णाति। पयोग्रहं गृहीत्वा ततः सुराग्रहं (७) पुनरप्येव मेव(८)। "व्यतिषक्तान् गृह्णाति" ( श० ब्रा०१२-७-३-१५ ) इति

---

गमकं किंचिदत्रास्ति सम्प्रदाये दधिग्रहे।
आम्नातौ च परं तत्रावदानं द्विरितीरितम् ॥
उपस्तराभिघारौ तु वाजिनेऽपि प्रदर्शितौ।
वसाहोमे पशौ सूत्रे श्रुतौ वाऽपि निदर्शनात् ॥

तथा च आज्यग्रहमाश्वत्थेनेत्यत्र भाष्यम्—'ततश्च आहवनीययजतिकत्वाद् ध्रुवायाः सवषट्कारत्वाच्चतुर्गृहीतमाप्यायैव' इति।

( १ ) कुवलान्यामलकतुल्यानि बदराणि।

( २ ) तेजोऽसि० ( वा० सं० १९-९ )

( ३ ) बदराणि निरुपपदबदराणि चणकबदराणि।

( ३ ) व्वीर्य्यमसि० ( वा० सं० १९-९ )

( ४ ) कर्कन्धूनि-अनुपजीव्यानि आरण्यबदराणि।

( ५ ) बलमसि० ॥ ( वा० सं० १९-८ )

( ६ ) नाना हि वाम्० ॥ ( वा० सं १९-७ )

( ७ ) यद्यपि कलिवर्ज्यप्रकरणे 'सौत्रामण्यां सुराग्रहः' इति। 'न' इत्यनुषज्यते। कातीयसूत्रे ऋषभस्थाने छाग उक्तस्तेन किमायातम्, सूत्रभाष्यकारमते सुराग्रहनिषेधो नास्ति।

( ८ ) अयमर्थः-आदावाश्विनं पयोग्रहं गृहीत्वाऽऽसाद्य तत आश्विनं सुराग्रहस्य ग्रहणासादने। ततः सारस्वतौ पयोग्रहसुराग्रहौ। तत

वचनात् ॥ १२ ॥

पयोग्रहान्वा पूर्वम् ॥ २२ ॥

पयोग्रहान्वा पूर्वं गृह्णाति(१)। एवमपि हि श्रूयते इति ॥ २२ ॥

सुराग्रहाञ्छ्रीणात्योजोऽसीति वृकव्याघ्रसिंहलोमभिः प्रतिमन्त्रं मिश्रैः ॥ २३ ॥

"ओजोऽसि"(२) इत्येभिर्मन्त्रैः प्रतिमन्त्रं वृकादिलोमभिर्मिश्रैः सुराग्रहाञ्छ्रीणातीति ॥ २३ ॥

एके यथासंख्यम् ॥ २४ ॥

लोमभिः श्रयणं कुर्वन्ति ॥ २४ ॥

सोमो राजे(३)त्यनुवाकेन ग्रहानुपतिष्ठते युगपत् ॥२५॥

यौगपद्येन च ॥ २५ ॥

चतुर्भिर्वा पयोग्रहाञ्छेषेण सौरान् ॥ २६॥

उपतिष्ठते ॥ २६ ॥

दीक्षावत्पावयतोऽन्तःपात्ये श्येनपत्राभ्यां या व्याघ्रमिति ॥ २७ ॥

अध्वर्युप्रतिप्रस्थातारावन्तःपात्ये स्थितं यजमानं श्येनपत्राभ्यां पावयतो "या व्याघ्रम्" (४)इत्यनेन मन्त्रेण । दीक्षावदिति ऊर्ध्वमवाञ्चं च (५) ॥ २७ ॥

---

ऐन्द्रौ पयोग्रहसुराग्रहौ । उपयामयोनी अत्र सुराग्रहेपि पृथक् प्रथमे 'नाना हि' इति पठित्वा 'उपयामगृहीतोऽस्याश्विनं तेजः' इति ग्रहणम्, 'एष ते योनिर्मोदाय त्वा' (वा०सं० १९-८) इति सादनं, द्वितीये सारस्वतग्रहे 'नाना हि' इत्यन्ते 'उपयामगृहीतोऽसि सारस्वतं वीर्यम्' इति ग्रहणम् एषते योनिरानन्दाय त्वा' इति सादनम्; तृतीये ऐन्द्रग्रहे 'नाना हि' इति मन्त्रान्ते 'उपयामगृहीतोस्यैन्द्रं बलम्' इति ग्रहणम्, 'एष ते योनिर्महसे त्वा' इति सादन मिति।

(१) सर्वेषामपि पयोग्रहान् गृहीत्वा ततः सुराग्रहानित्यर्थः।

(२) ओजोसि० (वा० सं० १९-९)

(३) सोमो राजा० ॥ (वा० सं० १९-७२,७३,७४,७५,७६,७७,७८,) इत्यष्टर्चेनानुवाकेनाध्वर्युरुपतिष्ठते युगपत्पयोग्रहान् सुराग्रहांश्च ।

(४) याव्याघ्रम्० (वा० सं० १९-१०)

(५) एकेनार्धेन नाभेरूर्ध्वं प्रदक्षिणं, द्वितीयार्धेन नाभेरधः, उभा-

**अग्निं प्रेक्षयति यदापिपेषेति ॥ २८ ॥**

'प्रेक्षयति" इति कारितत्वादध्येषणा(१)। "यदापिपेष"(२) इति यजमानः प्रेक्षते ॥ २८ ॥

**पयोग्रहसंमर्शनꣳ सम्पृचस्थे(३)ति ॥ २९ ॥**

**विपृचस्थेति(४)**

इत्येकोनविंशेऽध्याये द्वितीया कण्डिका।

---

**सौराणाम् ॥ १ ॥**

अभिमर्शनम्। सौरानभिमृश्योदकस्पर्शनमिति सम्प्रदायः। व्यत्यासग्रहणेऽप्येवम् ॥ १ ॥

वैकृतावसरे प्राकृतानुवृत्त्यर्थमाह—

**अभ्र्यादि करोति ॥ २ ॥**

**आश्विनोऽजो धूम्रः ॥ ३ ॥**

पशुर्भवति। अजग्रहणमुत्तरविवक्षया ॥ ३ ॥

**सारस्वतो मेषः ॥ ४ ॥**

**ऐन्द्र ऋषभः ॥ ५ ॥**

**मध्ये यूपः ॥ ६ ॥**

**दक्षिणोत्तरावैन्द्रवायोधसयोः ॥ ७ ॥**

एवं देशाध्यवसानं कर्तव्यम्। एवं हि श्रूयते—"तद्यदेतꣳ सौत्रामणिकं यूपमेतौ यूपावभितो भवतः" (श० ब्रा० १२-९-३-१६) इति ॥७॥

**वपामार्जनान्ते ग्रहानादाय पूर्ववदनुवाचनꣳ सुरासोमेभ्योऽनुब्रूहीति ॥ ८ ॥**

'पूर्ववत्' शब्देन च राजसूयसौत्रामणिक उच्यते। तत्र ह्युक्तम्—

---

भ्यामर्धाभ्यां नाभेरूर्ध्वं पुनश्च ताभ्यामेवाध इति वा।

(१) 'अग्निं प्रेक्षस्व' इति प्रैषेणाध्वर्युर्यजमानमग्निं दर्शयति, स च प्रेषित औत्तरवेदिक मग्निं प्रेक्षते।

(२) यदापिपेष० (वा० सं० १९-११)

(३) सम्पृचस्थ० (वा० सं० १९-११) इत्यनेन मन्त्रेण त्रयाणामपि पयोग्रहाणां यजमानः सहैव स्पर्शं करोति।

(४) विपृचस्थ० (वा० सं० १९-११) अनेन च सुराग्रहाणाम्।

"अश्विभ्याᳬं सरस्वत्या इन्द्राय सुत्राम्ण" (श० ब्रा० ५-५-४-२४) इति, 'एता हि ग्रहदेवता' इति । अतश्च पयोग्रहार्थं तदुद्देशेनोपाकरणम् । सुराग्रहार्थे च व्रीहिश्यामाकयोश्चतुर्मुष्टीनां ग्रहणमिति । अयं च चरकसौत्रामण्यनुवाचनातिदेशोऽपरो विशेषः ॥ ८ ॥

**सप्रैषं तु ॥ ९ ॥**

'तु' शब्दो विशेषणार्थः ॥ ९ ॥

**प्रस्थितमिति च ॥ १० ॥**

'च' शब्दादपरो विशेषः । प्रस्थितशब्दस्य प्रयोगः सुरासोमान्प्रस्थितान्प्रेष्येति ॥ १० ॥

**त्रिपशोः सर्वम् ॥ ११ ॥**

प्रस्थितशब्दवद्भवति । सर्वग्रहणं च वपाऽर्थम् । पशुपुरोडाशार्थमित्यपरे । तच्चानुपपन्नम् । येनायं सवनीयेषु पठ्यते—"प्रस्थितमिति च प्रसुते" (का० श्रौ० ६-६-२३) तेनेह प्राप्तस्योपसंहारार्थमिदं वचनम् न च पुरोडाशे प्रस्थितशब्दस्य प्राप्तिः । तस्मात्सर्वग्रहणं वपाऽर्थमेव । पशुशब्दस्याङ्गेषूपचरितत्वात्तत्रैव मा भूदिति 'सर्वं' ग्रहणम् । इह चोपसंहारात्प्रस्थितशब्दस्य पशुगणान्तरेष्वप्रवृत्तिः ॥ ११ ॥

**सुरावन्त(१)मिति जुहोति ॥ १२ ॥**

पयोग्रहान्(२) ॥ १२ ॥

**पालाशैः सौरान्न मृन्मयमाहुतिमानश इति श्रुतेर्यस्त इति ॥ १३ ॥**

पालाशैः सुराग्रहान् जुहोति "यस्त"(३)इत्यनेन मन्त्रेण । कुत एतत् 'पालाशैः'इति? यस्मात् मृन्मयमाहुतिं न व्याप्नोति । कथं ज्ञायते? "यद्वानस्पत्यैर्देवेभ्यो जुहत्यथ कस्मादेतं मृन्मयेनैव जुहोति" (श० ब्रा० १४-२-२-५३) इति । वानस्पत्यं देवानामुचितं मृन्मयं चानुचितमिति ज्ञापयति । अपि च "पालाशान्युपशयानि भवन्ति" (श० ब्रा० १२-७-२-१५) इति अत्र श्रूयते मा भूददृष्टार्थता तेषामिति ॥१३॥

**अध्वर्युः प्रतिप्रस्थाताग्नीध्रमश्विनेत्याश्विनं भक्षयन्ति द्विर्द्विरावर्त्तम् ॥ १४ ॥**

---

(१) सुरावन्तम्० (वा० सं० १९-३२)

(२) अध्वर्युस्त्रीनपि पयोग्रहान्सहैव जुहोति ।

(३) यस्ते० (वा० सं० १९-३३) इति मन्त्रेण प्रतिप्रस्थाता पालाशोलूखलैः सुराग्रहान् दक्षिणेऽग्नौ यजति ।

अध्वर्य्वादय आश्विनग्रहशेषं द्विर्द्विरावर्त्यावर्त्य "यमश्विना"(१) इति मन्त्रेण भक्षयन्ति॥ १४॥

**होतृब्रह्ममैत्रावरुणाः सारस्वतमाश्विनवत्॥ १५॥**

'भक्षयन्ति' इति शेषः॥ १५॥

**शेषं शेषमासिञ्चत्युत्तरे पूर्वस्य॥ १६॥**

भक्षितशेषं पूर्वस्य ग्रहस्योत्तर आसिच्यते(२)॥ १६॥

**ऐन्द्रं यजमानः॥ १७॥**

'भक्षयति' इति शेषः॥ १७॥

**यदत्रेति सौरान्भक्षयन्ति यथाभक्षितं प्राचीनावीतिनो दक्षिणतः॥ १८॥**

दक्षिणतो वितानस्य व्यवस्थिताः प्राचीनावीतिनः सन्तो "यदत्र" (३) इत्यनेन मन्त्रेण सौरान्भक्षयन्ति। यथा पयोग्रहाणां भक्षणं कृतं तथैवेति॥ १८॥

**प्राणभक्षमेके॥ १९॥**

कुर्वन्ति। स चायं विकल्पः। शास्त्रस्य तुल्यत्वात्॥ १९॥

**परिक्रीतो वा वैश्यराजन्ययोरन्यतरः॥ २०॥**

'भक्षयेत्' इति॥ २०॥

**अङ्गारेषु वा बहिष्परिधि दक्षिणतो जुहोत्याश्विनमुत्तरे मध्यमे सारस्वतमैन्द्रं दक्षिणे पितृभ्य(४) इति प्रतिमन्त्रम्॥ २१॥**

जुहोति(५)॥ २१॥

**अक्षन्पितर(६) इति प्रक्षालनेनोपासिञ्चति(७)॥ २२॥**

---

(१) यमश्विना० (वा० सं १९-३४)

(२) पूर्वस्य पूर्वस्य ग्रहस्य शेषमुत्तर उत्तरे ग्रहे आसिञ्चति।

(३) यदत्र० (वा० ० १९-३५)

(४) पितृभ्यः० (वा० सं० १९-३६)

(५) सुराग्रहाणां भक्षणं घ्राणम् परिक्रीतभूपालवैश्यान्यतरकर्तृकंपानमिति पक्षत्रयमुक्तम्। चतुर्थमाह यद्वाऽऽहवनीयस्याङ्गारेषु परिधेर्बहिर्दक्षिणदिक्स्थेषु होमशेषान्सुराग्रहान्पितृभ्य इति मन्त्रत्रयेण जुहोति।

(६) अक्षन्पितरः० (वा० सं० १९-३६)

(७) सौरग्रहहोमपात्रक्षालनजलेन यथास्वमङ्गारान्सिञ्चति प्रतिमन्त्रम्।

यथाहोमं पात्रे ॥ २२ ॥

पितरः शुन्धध्व(१)मिति जपति ॥ २३ ॥

कुम्भीमासज्य कुम्भवत् शतवितृण्णां वालपवित्रहिरण्यान्यन्तर्धाय नवर्चं वाचयति पुनन्तु मेति ॥ २४ ॥

'कुम्भवत्' इति दक्षिणस्याग्नेरुपरि सुरावतीमासजति वालपवित्रहिरण्यान्यन्तर्धाय मध्ये नवर्चं वाचयति "पुनन्तु मा"(२) इति ॥ २४ ॥

सोमवतां बर्हिषदामग्निष्वात्तानां च ॥ २५ ॥

'च' शब्दान्नवर्चं(३) वाचयति ॥ २५ ॥

पूर्ववत् सोमातिपूतश्चेत् ॥ २६ ॥

सोमातिपूतसौत्रामण्यां पूर्ववदुपस्थानं कर्तव्यम् 'सोमवदादि' इति ॥ २६ ॥

ये समाना(४) इति यजमानो जुहोति ॥ २७ ॥

उत्तरे च यज्ञोपवीत्युत्तरया ॥ २८ ॥

ऋचा(५) जुहोति । चशब्दाद्यजमानः । अत्र च श्रूयते—"सर्वे यज्ञोपवीतानि कृत्वोत्तरमग्निमुपसमायन्ति" ( श० ब्रा० १२-८-१-१९ ) इति ॥ २८ ॥

(६)अन्वारब्धेषु पयो जुहोति द्वे स्रुती (७)इति ॥२९॥

तच्चैतज्जुहोतिधर्मैर्धर्मवद्भवति ॥ २९ ॥

(८)शेषं यजमानो भक्षयतीदꣳ हविरिति ॥ ३० ॥

(९)अनेन मन्त्रेण ॥ ३० ॥

चात्वाले मार्जयन्ते सपत्नीका हिरण्यमन्तर्धाय

इत्येकोनविंशेऽध्याये तृतीया कण्डिका ।

---

( १ ) पितरः शुन्धद्ध्वम् ( वा० सं० १९-३६ )

( २ ) पुनन्तु मा० ( वा० सं० १९-३७, ३८, ३९, ४०, ४१, ४२, ४३, ४४, ) अत्र प्रथममन्त्रे ऋग्द्वयमिति नव ।

( ३ ) त्वꣳ सोम० ॥ ( वा० सं० १९-५२, ५३, ५४, ५५, ५६, ५७, ५८, ५९, ६० ) ( ४ ) ये समानाः० ( वा० सं० १९-४५ )

( ५ ) ये समानाः० ( वा० सं० १९-४६ )

(६) ऋत्विग्यजमानेषु कृतान्वारम्भेषु अध्वर्युः ।

(७) द्वे स्रुती० ( वा० सं० १९-४७ )

(८) उखास्थितं शेषं पयः । (९) इदꣳहविः० ( वा० सं० १९-४८ )

**पशुपुरोडाशान्निर्वपत्यैन्द्रꣳ सावित्रं वारुणं दशकपालम्॥१॥**

"अन्यदेवत्याः पशवो भवन्ति" वचनात् "अन्यदेवत्याः पुरोडाशाः" (श० ब्रा० १२-७-२-१६) इति । पशुपुरोडाशस्य च प्रकृतौ पशुदेवतासंस्कारार्थतोक्ता, सा चात्र न सम्भवति । तत्र केचिदाहुः—पशुपुरोडाश ऐन्द्रः पशुदेवतासंस्कारकः, सावित्रः संस्कारसामान्यात् सारस्वतस्य, वारुण आश्विनस्य । एवं संस्कारकत्वमेषाम् । तत्पुनः युक्तायुक्तविचारार्हमिति ॥ १ ॥

**एककपालं चावभृथाय ॥ २ ॥**

वारुणं चैककपालं तैरेव सहावभृथाय निर्वपति । वारुणस्य दशकपालतैन्द्रसावित्रयोरपि कपालसंख्योपलक्षणार्थम् । एवं हि श्रूयते—"एकादशकपाल ऐन्द्रो भवति, द्वादशकपालः सावित्रो, दशकपालो वारुणः" (श० ब्रा० १२-७-२-१८, १९, २०) इति ॥ २ ॥

**आसाद्यैनानाज्यभागौ यजत्यत्र स्विष्टकृद्वनस्पत्योः प्रैषदर्शनात् ॥ ३ ॥**

पशुपुरोडाशानासाद्याज्यभागौ यजति । अत्र हि क्रमे स्विष्टकृद्वनस्पत्योः प्रैषे आज्यभागदेवतयोः सङ्कीर्तनदर्शनात् ॥ ३ ॥

**यथोक्तं वा मन्त्राणामविधानात् ॥ ४ ॥**

'वा'शब्दः पक्षव्यावृत्तौ । नात्र आज्यभागौ विद्येते । यथाप्राप्तमेवाज्यभागयोरनुष्ठानम् । कथं च प्राप्तिः ग्रहयागात्पूर्वम् ? तेषां हि दर्शपूर्णमासचोदकेनाज्यभागयोः प्राप्तिः । यत्तु-'स्विष्टकृद्वनस्पत्योः प्रैषदर्शनात्' इत्युक्तम् । तन्न, मन्त्राणामविधायकत्वात् । न हि विधायका मन्त्राः ॥ ४ ॥

**त्रयस्त्रिꣳशतं दक्षिणा ददात्यनुशिशु च वडबधेनुम् (१)॥५॥**

ननु च धेनुग्रहणादेवानुशिशुत्वं प्राप्तम् अनुशिशुग्रहणं न कर्तव्यम् ? न तत्कृतोपकाराभावाच्छिशुर्न लभ्यते, तस्मात्कर्तव्यमेव । धेनुग्रहणं तर्हि किमर्थम्, अनुशिशुग्रहणमेव कर्तव्यम् । कर्तव्यं वा । अक्रियमाणे हि परशिशुरपि प्राप्नुयात् । तन्मा भूदित्युभयमुक्तम् । अस्मिन्नवसरे दक्षिणादानमुक्तं पशुपुरोडाशान्ते यथा स्यादिति ॥ ५ ॥

---

(१) वडवा चासौ, शिशुश्च सः, तयैव जातो यः शिशुः । तेन सहितां वडवां दद्यादित्यर्थः ।

**एकादशिनिधर्माः पशुगणेषु(१) ॥ ६ ॥**

भवन्ति, गणत्वसामान्यात् ॥ ६ ॥

**शमित्रनुशासनप्रभृति वनस्पत्यन्तं कृत्वा सोमासन्दीवदासन्दीं जानुमात्रपादीं वेद्योर्निदधाति क्षत्रस्य योनिरिति ॥ ७ ॥**

"द्वाऽ उत्तरस्यां वेद्यां पादौ भवतो द्वौ दक्षिणस्याम्" (श०ब्रा० १२-८-३-६) इति श्रुतेः(२)। शमित्रनुशासनं तु द्वितीयं कर्तव्यम्। प्रथमं हि सवनीयचोदकपरिप्राप्त्या पशुपुरोडाशस्योदकदानान्ते तत्पात्रसम्मार्गं कृत्वा निर्वृत्तमिति ॥ ७ ॥

**कृष्णाजिनमस्यामास्तृणाति मा त्वे(३)ति ॥ ८ ॥**

आसन्द्याम् ॥ ८ ॥

**तस्मिन्नास्ते यजमानो निषसादेति ॥ ९ ॥**

"निषसाद"(४) इत्यनेन मन्त्रेण यजमान उपरि विशेत् ॥ ९ ॥

**पादयो रुक्मा उपास्यति राजतꣳ सव्ये मृत्योरिति ॥ १० ॥**

(५)अनेन मन्त्रेण ॥ १० ॥

**सौवर्णꣳ शिरस्येके विद्योदिति ॥ ११ ॥**

सौवर्णं पुनः शिरस्येके आचार्याः उपास्यन्ति, एके दक्षिणपादे।

---

(१) पशूनां गणाः द्विप्रभृतिपशुसमूहाः तेषु पशुगणेषु एकादशिनिधर्मा नियोजनादयो भवन्ति।

(२) क्षत्रस्य योनिः० (वा० सं० २०-१) इत्यनेन मन्त्रेण जानुप्रमाणपादामासन्दीं तथा निदधाति यथा तस्या द्वौ पादौ उत्तरवेद्यां द्वौ च दक्षिणस्यां भवेताम्। सोमासन्दीवदिति मुञ्जरज्ज्युतामित्यर्थः।

(३) मा त्वा० ॥ (वा० सं० २०-१)

(४) निषसाद० ॥ (वा० सं० २०-२)

(५) आसन्द्युपविष्टस्य यजमानस्य पादयोरधः रुक्मौ मण्डलाकारौ भूषणविशेषौ न्यस्यति। मृत्योः पाहि (वा०सं०२०-२) अनेन मन्त्रेण राजतं सव्ये, "विद्योत्पाहि" (वा० सं० २०-२) अनेन च दक्षिणे सौवर्णम्।

'विद्योत्' (१)इत्यनेन मन्त्रेण ॥ ११ ॥

**खुरैर्वसाग्रहान् द्वात्रिꣳशतं जुहोति सीसेनेति(२) प्रत्यृचम्(३) ॥ १२ ॥**

खुराश्चार्षभाः प्रतिपत्तव्याः ॥ १२ ॥

**द्वौ द्वौ हुत्वा शेषान्त्सते करोति ॥ १३ ॥**

तांश्च द्वौ द्वौ हुत्वा तच्छेषान्त्सते करोति वैतसे ॥ १३ ॥

**सर्वसुरभ्युन्मृदितꣳ शेषैराभिषिञ्चत्या मुखादवस्रावयन्प्रतिदिशꣳ सर्वत्र सावित्रमश्विनोः सरस्वत्या इन्द्रस्येति प्रतिमन्त्रम् ॥ १४ ॥**

सर्वसुरभिभिश्चन्दनादिभिरभ्युन्मृदितं यजमानं ग्रहशेषैराभिषिञ्चति । आमुखादवस्रावयन् । आमुखादिति मर्यादेयम् । अकर्मविषयत्वात् । प्रतिदिशं व्यवस्थितः । "सर्वतः परिक्रामम्" (श० ब्रा० १२-८-३-१७) इति वचनात् सर्वत्र सावित्रं सर्वाभिषेकेषु सावित्रं मन्त्रमाह—'अश्विनोः' 'सरस्वत्या' 'इन्द्रस्य' (४)इति च प्रतिमन्त्रम् ॥ १४ ॥

**सर्वाभिश्चतुर्थम् ॥ १५ ॥**

अभिषेकं सर्वाभिर्देवताभिः करोति । "पुरस्तात्प्रत्यङ्ङभिषिञ्चति पुरस्ताद्धि प्रत्यगन्नमद्यते शीर्षतः शीर्षतो ह्यन्नमद्यते" (श० ब्रा० १२-८-३-१७) इति प्रकृत्य श्रुतेः ॥ १५ ॥

**महाव्याहृतिभिरेके ॥ १६ ॥**

सा चेयं स्वपदविभाषा "तꣳ हैकऽ एताभिश्च देवताभिरभिषि-

---

(१) विद्योत्पाहि । ( वा० सं० २०-२ )

(२) सीसेन तन्त्रं० ( वा० सं० १९-८०, ८१, ८२, ८३, ८४, ८५, ८६, ८७, ८८, ८९, ९०, ९१, ९२, ९३, ९४, ९५, )

(३) 'पञ्चपलो ग्रहः' इति परिशिष्टोक्तेः ऋषभखुराणां महत्त्वाच्चार्षभैः खुरैः पशूनां वसां गृहीत्वा 'सीसेन' इति प्रतिमन्त्रं द्वात्रिंशत्संख्याकान्खुराग्रहान् जुहोति । एकेन मन्त्रेण द्वयोर्होम इत्यर्थः ।

(४) 'अश्विनोर्भैषज्येन०', 'सरस्वत्यै भैषज्येन०' 'इन्द्रस्येन्द्रियेण०' (वा०सं०२०-३ ) इति त्रिभिर्मन्त्रैः प्रतिमन्त्रम् । अत्र 'देवस्य त्वा' इति त्रिष्वपि मन्त्रेष्वन्वेति ।

भ्रन्ति भूर्भुवः स्वरित्येताभिश्च व्याहृतिभिः" (श०ब्रा० १२-८-३-१८) इति वचनात् ॥ १६ ॥

अत्र न ज्ञायते किं व्याहृतिपदं पूर्वं देवतापदेभ्य उतोत्तरमित्यत आह—

## उत्तमेन वा ॥ १७ ॥

उत्तमेन (१)व्याहृतिपदेनाभिषेको न पूर्वेण न चानियमः। कुत एतत्? पाठक्रमात्। "तं हैकऽ एताभिश्च देवताभिरभिषिञ्चति भूर्भुवः स्वरित्येताभिश्च व्याहृतिभिः" (श० ब्रा०१२-८-३-१८ इति ॥ १७ ॥

## उन्मर्दनमभिषेके ऽवनीयैके ॥ १८ ॥

उन्मर्दनं चन्दनादि तदभिषेके ऽवनीयाभिषेकमेके कुर्वन्ति ॥ १८ ॥

## यजमानमालभते कोऽसीति ॥ १९ ॥

अनेन मन्त्रेण(२) ॥ १९ ॥

## सुश्लोके(३)त्यालब्धो ह्वयति ॥ २० ॥

बदुक्तं भवति यजमानः(४) ॥ २० ॥

## अङ्गानि चालभते यथालिङ्गं शिरो म(५) इति प्रतिमन्त्रम् ॥ २१ ॥

'च'शब्दाद्यजमान एव यथालिङ्गमङ्गान्यालभते। अत्र च 'अस्तु' इति क्रियापदाध्याहारः, साकाङ्क्षत्वात् यथायोगं 'मे' इति च पदस्यानुषङ्गः ॥ २१ ॥

## उद्यच्छन्त्येनं शतरुद्रियवत्प्रमाणेषु ॥ २२ ॥

एनं यजमानं सुश्लोकादय आहूता उत्क्षिपन्ति शतरुद्रियवज्जानुदघ्नादिषु प्रमाणेषु। कुत एतत्? एवं दृष्टार्थताऽऽह्वानस्य भवति। सुश्लोकादिग्रहणं च राजसूयवदेव नामोपलक्षणार्थम् ॥ २२ ॥

## कृष्णाजिनेऽवरोहति प्रतिक्षत्र इति ॥ २३ ॥

(६)कृष्णाजिनेऽवतरति यजमानः "प्रतिक्षत्र" (७)इत्यनेन मन्त्रेण॥२३॥

---

(१) उत्तमेनेन्द्रस्येन्द्रियेणेत्यनेन चतुर्थमभिषिञ्चति इति संप्रदायभाष्ये।

(२) कोऽसि० (वा०सं० २०-४) (३) सुश्लोक० (वा०सं० २०-४)

(४) अध्वर्युणा आलब्धः कृतान्वारम्भो यजमानः सुश्लोकादिसंज्ञान्पुरुषानाह्वयति। (५) शिरो मे० (वा० सं० २०-५, ६, ७, ८, ९)

(६) आसन्दीत इति शेषः। (७) प्रति क्षत्रे० (वा० सं० २०-१०)

**त्रयस्त्रिꣳशं वसाग्रहं गृह्णाति(१) यो भूतानामिति ॥२४॥**

त्रयस्त्रिꣳशग्रहणाच्च (२)खुरेण ग्रहणम् ॥ २४ ॥

**आज्यग्रहमाश्वत्थेनैके ॥ २५ ॥**

एके आचार्या आज्यग्रहमाश्वत्थेन पात्रेण गृह्णन्ति । ततश्चाहवनीयजतित्वाद् ध्रुवायाः सवषट्कारत्वाच्चतुर्ग्रहणमाप्यायनं च ॥ २५ ॥

इत्येकोनविंशेऽध्याये चतुर्थी कण्डिका ।

---

**साम प्रेष्यति ॥ १ ॥**

'सा(३)म गाय' इत्येवं 'ब्रूहि' इति वा । ब्रह्मा गायति ॥ १ ॥

**ऐन्द्र्यां बृहत्यां गायति ॥ २ ॥**

इन्द्रलिङ्गायां बार्हतेन छन्दसोपेतायामृचि(४) गायति ॥ २ ॥

**सꣳश्रवसे विश्रवसे सत्यश्रवसे श्रवस इति सर्वे निधनमुपयन्ति ॥ ३ ॥**

**सञ्जित्यै विजित्यै सत्याजित्यै जित्या इति चात्रियस्य ॥४॥**

निधनम् ॥ ४ ॥

**सम्पुष्ट्यै विपुष्ट्यै सत्यपुष्ट्यै पुष्ट्या इति वैश्यस्य ॥५॥**

निधनम् । अग्न्यङ्गतया आग्निचितयोरपि प्रापितत्वात्सौत्रामण्याम् ॥५॥

**यथाम्नातं वा सर्वेषाम् ॥ ६ ॥**

सर्ववर्णानां यथाऽऽम्नातं निधनं भवति । तच्च "सꣳश्रवस" ( श० ब्रा० १२-८-३-२६ ) इत्येवमादि ॥ ६ ॥

**आस्ते प्रतिगरिष्यन् ॥ ७ ॥**

होतुरग्रतः ॥ ७ ॥

**त्रया देवा (५)इति शस्त्रान्ते जुहोति ॥ ८ ॥**

---

(१) यो भूतानाम्० ( वा० सं० २०-३२ ) इति सार्धकण्डिकात्मकेन मन्त्रेण । (२) आर्षभेणेत्यर्थः ।

(३) अत्र च सामगाने 'तथा च सूत्रान्तरम्' ( का० श्रौ० सू० ४-९-६ ) इत्यादिना ब्रह्मणः कर्तृत्वमुक्तम् आधानप्रकरणे ।

(४) बृहदिन्द्राय० ( वा० सं० २०-३० )

(५) त्रया देवा० ( वा० सं० २०-११, १२ ) इति कण्डिकाद्वयात्मकेन मन्त्रेण शस्त्रसमाप्तौ वषट्कृते त्रयस्त्रिंशं वसाग्रहं जुहोति ।

ग्रहम् । तच्चानुवाचनयजप्रैषपूर्वकम् । देवताश्चात्र प्रकृता एव । तथा च(१) याज्यानुवाक्ययोः तदभिधानं दृश्यते । "अश्विना तेजसा" "अश्विनापिबतम्" इति ॥ ८ ॥

**शेषमृत्विजः प्राणभक्षं भक्षयन्ति प्राणपाम इति ॥९॥**

ग्रहशेषमृत्विजः प्राणभक्षं भक्षयन्ति(२) "प्राणपा म" इत्यनेन मन्त्रेण ॥ ९ ॥

**प्रत्यक्षभक्षं यजमानो लोमानि प्रयतिरिति ॥ १० ॥**

अनेन (३)मन्त्रेण ॥ १० ॥

**स्विष्टकृत्प्रभृत्याबार्हिर्होमात्कृत्वा परिस्रुत्क्षीरलिप्तान्यादायावभृथवद्गमनम् ॥ ११ ॥**

स्विष्टकृत्प्रभृतिबार्हिर्होमान्तं कृत्वा परिस्रुत् क्षीरलिप्तान्यादायावभृथ वद्गच्छन्ति । शूलावभृथेन व्यवधानात् 'अवभृथवद्' इत्युच्यते ॥ ११ ॥

**आशूलाभिमन्त्रणात्कृत्वोदकाधिष्ठानप्रभृत्यावभृथेष्टेः॥१२॥**

शूलाभिमन्त्रणान्तं कर्म कृत्वा उदकाधिष्ठानप्रभृति आ अवभृथेष्टेः॥१२॥

**मासरकुम्भं प्लावयति यद्देवा इति ॥ १३ ॥**

अनेन(४) मन्त्रेण ॥ १३ ॥

**पूर्ववन्मज्जनम्॥ १४ ॥**

मासरकुम्भस्यैवावभृथे निमज्जनम(५) ॥ १४ ॥

**सुमित्रिया न इत्यपोऽञ्जलिनादाय दुर्मित्रिया इति द्वेष्यं परिषिञ्चति (६)द्वौ विक्रमा उदङ्गत्वा ॥ १५ ॥**

---

(१) अश्विना तेजसा० ( वा० सं० २०-८० )
अश्विना पिबताम्० ( वा० सं० २०-९० ) इमे याज्यानुवाक्ये ।

(२) अवजिघ्रन्ति प्राणपा मे० ( वा० सं० २०-३४, ३५ ) इति कण्डिकाद्वयात्मकेन । (३) लोमानि प्रयतिः० (वा० सं० २०-१३)

(४) अवभृथेष्टिं कृत्वा 'यद्देवा' इत्यादिना 'वरुणनोमुञ्च ( वा० सं० २०-१४, १५, १६, १७, १८, ) इत्यन्तेन सार्धकण्डिकाचतुष्कात्मकेन मन्त्रेण मासरकुम्भं जले तारयति ।

(५) 'पूर्ववत्' इति "अवभृथ०" (१८) इत्यादि "ओषधी रुताप." ( वा० सं० २०-१९. ) इत्यन्तेन सुराकुम्भस्य जले निमज्जनम् :

(६) द्वौ विक्रमावुदङ्गत्वा सुमित्रियान इत्यपः ।
आदायाञ्जलिना सिञ्चेद् द्वेष्यं दुर्मित्रिया इति ॥ इति श्रुतेः ।

(१)"सुमित्रिया न" इत्यनेन मन्त्रेणापोऽञ्जलिनादाय द्वौ विक्रमा उदङ्गत्वा "दुर्मित्रिया" (२)इति द्वेष्यं प्रतिषिञ्चति "यामस्य दिशं द्वेष्यः स्यात्तां दिशं परासिञ्चेत्" (श० ब्रा० १२-९-२-६) इति वचनात् ॥१५॥

अवभृथवत्स्नात्वा वासोऽपासनं द्रुपदादिवे(३)ति ॥ १६ ॥

अवभृथवत्स्नानग्रहणं वासोऽपासनार्थं(४) प्राप्तत्वादेव ॥ १६ ॥

सोमवदुत्क्रमणमागमनं च ॥ १७ ॥

सोमवदेव 'उद्वयम' (५)इत्युन्नयनं आमहीयजपवदागमनम् ॥ १७ ॥

आहवनीयमुपतिष्ठतेऽपो अद्येति ॥ १८ ॥

अनेन (६)मन्त्रेण ॥ १८ ॥

एधोसीति(७) समिधमादायाहवनीयेऽभ्यादधाति समिदसीति(८) ॥ १९ ॥

शूलावभृथसमिदाधानं सौत्रामणिकं च तन्त्रेण कालैकत्वाज्जुहोति ॥१९ ॥

जुहोति च समाववर्त्ती(९)ति ॥ २० ॥

'च' शब्दाच्छेषपरिसमाप्तिं करोति ॥ २० ॥

उदवसाय पयस्या मैत्रावरुणी ॥ २१ ॥

कर्तव्या । अस्याश्च पूर्वम् आदित्येष्टिरुक्तैव ॥ २१ ॥

तदन्ते पशुरिन्द्राय वयोधसे ॥ २२ ॥

तच्छब्देन पयस्या परामृश्यते ॥ २२ ॥

इत्येकोनविंशेऽध्याये पञ्चमी कण्डिका ।

---

(१) सुमित्रिया न० ( वा० सं० २०-१९ )

(२) दुर्मित्रियाः० ( वा० सं० २०-१९ )

(३) द्रुपदादिव० ( वा० सं० २०-२० )

(४) जलस्थावेव जायापती सौमिकावभृथवत् स्नात्वा कर्मकाले धृतं वासोऽप्सु क्षिपतः ।

(५) "उद्वयम्०" ( वा० सं० २०-२१ ) इति मन्त्रेण जलान्निष्क्रमणम् । 'अपाम सोमममृता अभूम' इति जपतां सर्वेषां त्रिपशुदेशमागमनम् ।

( ६ ) अपोऽअद्य० ( वा० सं० २०-२२ )

( ७ ) एधोसि० ( वा० सं० २०-२३ )

( ८ ) समिदसि० ( वा० सं० २०-२३ )

( ९ ) समाववर्ति० ( वा० सं० २०-२३ )

इत्येकोनविंशोऽध्याये पञ्चमी कण्डिका ।

आचार्येण सौत्रामण्यनुविहिता । इदानीमध्वर्युवेदविहितहौत्रव्याख्यानोपन्यासाय न्यायोपप्रदर्शनायाचार्य आह—

**सौत्रामण्यामिष्टिपशवो भिन्नतन्त्राः कालभेदात् ॥ १ ॥**

इह चादित्यपयस्यात्रिपशूनामन्यत्रापि सम्भवात्तद्विषयताऽपि मा भूदिति 'सौत्रामणी' ग्रहणम् प्रयोगवचनैकत्वप्रज्ञप्त्यर्थं च । 'एको हि प्रयोगवचनोऽत्र 'ऋद्धिकामः सौत्रामण्या यजेत' इति । अत्रेष्टिपशवो भिन्नतन्त्रा भवन्ति। कुत एतत्? कालभेदात्। भिन्नो हि कालः। "आदित्यं चरुं यक्ष्यमाणो निर्वपति । आदित्यमीजा न" ( श० ब्रा० १२-९-२-११ ) इति चैवमादि ।

ननु च प्रयोगवचनैकत्वे 'राजसूयेन स्वाराज्यकामोयजेत' इत्यत्र कालभेदात्तन्त्रभेद उक्तः 'इष्टिपशवो भिन्नतन्त्राः कालभेदात्' इति, किमर्थं पुनरुच्यते? सत्यमेतदेवम् । तत्र ह्यनुमत्यादीनां फलैकत्वे तन्त्रभेदोऽभिहितः, इह पुनस्तथा नेति । इह यागविशेषाणां सौत्रामणीसंशब्दितानाम् 'ऋद्धिकामः सौत्रामण्या यजेत' इति फलसम्बन्धः, तत्सन्निधानादितरेषां तदङ्गतेति वैषम्याद्भेदेनोच्यते । अङ्गानां प्रधानानां च प्रयोगवचनैकत्वादेकतन्त्र्यं मा भूदित्युच्यते ।

ननु च ज्योतिष्टोमवदेकतन्त्र्यं कस्मान्न भवत्यङ्गानां प्रधानानां च । न इत्युच्यते । तत्र हि ऋत्विग्वरणदेवयजनजोषणादीनामुत्तरकालं दीक्षणीयादिविधानम् । इह पुनरादित्यादीनामङ्गत्वेऽपि सति कालभेदात्तन्त्रभेद इति न दुरुक्तम् ॥ १ ॥

**सप्तदश सामिधेन्यः ॥ २ ॥**

अत्र भवन्ति । अनारभ्य समधीतं साप्तदश्यं प्रकृतितः पाञ्चदश्येनोत्कालितं यत्र यत्र श्रूयते तत्र तत्र भवति ॥ २ ॥

**वार्त्रघ्नावाज्यभागौ ॥ ३ ॥**

अत्र भवतः ॥ ३ ॥

**वृधन्वन्तौ वा पशुषु सान्नाय्यविकारात् ॥ ४ ॥**

पशुषु यस्याज्यभागौ तस्य वृधन्वन्तौ भवतः । पशुषु पयोग्रहा भवन्ति । तेषां सान्नाय्यविकाराद् वृधन्वन्तौ भवतः ॥ ४ ॥

**आमिक्षायां च ॥ ५ ॥**

वृधन्वन्तावेव सान्नाय्यविकारत्वात् । अधस्तनसूत्रे 'पशुषु' इति विशेषितत्वादामिक्षायामप्राप्तिर्मा भूदिति भेदेन ग्रहणम् ॥ ५ ॥

उपांशुदेवतेष्टिषु ॥ ६ ॥

'भवति' इति वाक्यशेषश्च ॥ ६ ॥

विराजौ संयाज्ये अविशेषोपदेशात् ॥ ७ ॥

संयाज्याशब्देन स्विष्टकृत्सम्बन्धिन्यौ याज्यानुवाक्ये उच्येते । ते च "प्रेद्धोऽअग्न" "इमोऽअग्न" ( ऋक्सं० ७-१-३,१८ ) इति । अविशेषेण हि सौत्रामणीं प्रकृत्य 'विराजौ संयाज्ये' इति समाम्नायते ॥ ७ ॥

वसिष्ठशुनकानां नाराशंसः ॥ ८ ॥

वसिष्ठानां शुनकानां च नाराशंसो द्वितीयः प्रयाजो भवति ॥८॥

(१)अत्रीणां चैके ॥ ९ ॥

द्वितीयं नाराशंसमिच्छन्ति । एके तनूनपातम् ॥ ९ ॥

प्राकृताः प्रथमोत्तमयोः (२)प्रयाजानुयाजप्रैषाः ॥ १० ॥

चोदकप्राप्त्या भवन्ति ॥ १० ॥

ऐन्द्रा(३)नेके प्रथमस्य वायोधसानुत्तमस्य ॥ ११ ॥

तत्कुतः ? लिङ्गात् । "होता यक्षत्समिधेन्द्रमिडस्पदे" इत्येवमादि । तत्पुनर्बहिः प्रकरणात्पाठे सति लिङ्गं विनियोजकमिति पर्यालोचनीयम् ॥ ११ ॥

समिद्ध इन्द्र इत्याप्रियः प्रथमस्य ॥ १२ ॥

---

( १ ) अनुक्तं वेति सूत्रेण सिद्धमेतत्कथं पुनः ।
उच्यते त्वेकयाज्यायां यद्यप्याप्रीषु पठ्यते ।
उभौ तनूनपाद्वापि तत्र यागो यथर्षि तु ।
वसिष्ठादिग्रहो हौत्रसूत्राम्नातोपलक्षकः ।
अन्यत्रापि विकल्पार्थमत्रीणां चैक इत्यपि ॥

( २ ) बह्वृचानां प्रैषाध्याये पठिताः प्राकृता इत्युच्यन्ते । प्रथमोत्तमयोः पश्वोः ।

( ३ ) ऐन्द्रस्य पशोः प्रैषे ऐन्द्रान्-"होता यक्षत्समिधेन्द्रमिडस्पदे०" ( वा० सं० २८-१ ) इत्यादीन् "होता यक्षदिन्द्रꣳ स्वाहा०-व्यन्तु होतर्यज" ( वा० सं० २८-११ ) इत्यन्तानेकादश मन्त्रान्, "होता यक्षत्समिधानं महद्यशः०" ( वा० सं० २८-२४ ) इत्यादीन् "होता यक्षत्स्वाहाकृती०" ( वा० सं० २८-३४ ) इत्यन्तानेकादश मन्त्रांश्च वायोधसस्य प्रैषे एके आहुः ।

आप्रियः प्रयाजयाज्याः "समिद्ध इन्द्र" (१)इति प्रथमस्य पशोर्भवति ॥ १२ ॥

**याज्यानुवाक्याश्च वपापुरोडाशपशूनामायात्विन्द्र(२)इति ॥ १३ ॥**

'च' शब्दात्प्रथमस्य भवन्ति ॥ १३ ॥

**होता यक्षत्समिधाग्नि(३)मिति प्रयाजप्रैषास्त्रिपशोः ॥ १४ ॥**

भवन्ति ॥ १४ ॥

**आप्रियश्च समिद्धो अग्निरश्विने(४)ति ॥ १५ ॥**

'च' शब्दात्त्रिपशोरेव ॥ १५ ॥

**अश्विनाहविरि(५)ति तिस्रो वपानां याज्यानुवाक्याः॥१६॥**

भवन्ति ॥ १६ ॥

---

( १ ) समिद्धऽइन्द्र० ( वा० सं० २०–३६,३७,३८,३९,४०,४१,४२,४३ ४४, ४५, ४६ )

( २ ) आयात्विन्द्रः० ( वा० सं० २०–४७,४८,४९,५०,५१,५२ ) इत्यादयः षड्ऋचः यथाक्रममैन्द्रस्य वपापुरोडाशपशूनां याज्यानुवाक्या भवन्ति। तत्र प्रथमो मन्त्रो वपानुवाक्या, द्वितीयो वपायाज्या, तृतीयः पशुपुरोडाशानुवाक्या, चतुर्थस्तद्याज्या; पञ्चमः पश्वनुवाक्या षष्ठस्तद्याज्येत्यर्थः।

( ३ ) होता यक्षत्समिधाग्निम्० ( वा० सं० २१–२९,३०,३१,३२,३३, ३४३५,३६,३७,३८,३९,४० ) इत्यादयो द्वादश कण्डिकाः त्रिपशोः प्रयाजप्रैषा भवन्ति।

( ४ ) समिद्धोऽ अग्निरश्विना० ( वा० सं० २०–५५,५६,५७,५८,५९, ६०,६१,६२,६३,६४,६५,६६ ) इत्यादया द्वादशानुष्टुभः त्रिपशोः प्रयाजयाज्या इत्यर्थः।

( ५ ) अश्विनाहविः० ( वा० सं० २०–६७,६८,६९ ] इति तिस्रः कण्डिकास्तिसृणामपि आश्विनसारस्वतैन्द्रसम्बन्धिवपानां याज्या अनुवाक्याश्च भवन्तीत्यर्थः। तत्प्रकारविधिश्चोत्तरसूत्रेण प्रदर्श्यते। स च यथा—आश्विनवपायागे प्रथमा अश्विनेति अनुवाक्या, यमश्विना इति च द्वितीया कण्डिका याज्या; सारस्वतवपायागे यमश्विनेति द्वितीया कण्डिका अनुवाक्या, तमिन्द्रमिति तृतीया च याज्या; ऐन्द्रवपायागे तु तमिन्द्रमिति तृतीया अनुवाक्या, अश्विनेति प्रथमा च याज्या।

प्रथमामनूच्य द्वितीया याज्या द्वितीयामनूच्य तृतीया याज्या तृतीयामनूच्य प्रथमायाज्या ॥ १७ ॥

"सर्वाः पुरोनुवाक्या भवन्ति, सर्वा याज्याः" ( श० ब्रा० १२-८-२-३५ ) इति श्रुतेः। तथा "सर्वाः प्रथमा भवन्ति सर्वा मध्यमाः सर्वा उत्तमाः" ( श० ब्रा० १२-८-२-३५ ) इति ॥ १७ ॥

य इन्द्र(१) इति पुरोडाशानां पूर्ववत् ॥ १८ ॥

पूर्ववच्छब्देन 'प्रथमामनूच्य' इत्येवमादि लभ्यते ॥ १८ ॥

अश्विना गोभिरि(२)ति च हविषाम् ॥ १९ ॥

चशब्दात्पूर्ववद्याज्यानुवाक्याः ॥ १९ ॥

ग्रहाणां (३)युवꣳ सुरामं पुत्रमिवेति ॥ २० ॥

याज्यानुवाक्ये भवतः ॥ २० ॥

पशुस्विष्टकृतो यस्मिन्नश्वासो(४)ऽह्णाध्यग्न इति ॥ २१ ॥

---

( १ ) 'यऽइन्द्र' ( वा० सं० २०-७०, ७१, ७२ ) इति तिस्रः कण्डिकास्त्रयाणामपि आश्विनसारस्वतैन्द्रपशुपुरोडाशानां पूर्वोक्तक्रमेण याज्या अनुवाक्याश्च भवन्ति। स यथा—प्रथमस्याऽऽश्विनपशुपुरोडाशस्य प्रथमा कण्डिका अनुवाक्या द्वितीया च याज्या; द्वितीया अनुवाक्या तृतीया च याज्या सारस्वतपशुपुरोडाशस्य; ऐन्द्रपशुपुरोडाशस्य त्र तृतीया कण्डिका अनुवाक्या प्रथमा च याज्येति।

( २ ) 'अश्विनागोभिः' ( वा० सं० २०-७३, ७४, ७५ ) इति तिस्रो याज्या अनुवाक्याश्च त्रयाणामपि पशुहविषाम्। अत्रापि प्रथमा अनुवाक्या आश्विनहविषो द्वितीया च याज्या; सारस्वतस्य हविषो द्वितीया अनुवाक्या तृतीया च याज्या; ऐन्द्रस्य हविषश्च तृतीया अनुवाक्या प्रथमा च कण्डिका याज्येति बोध्यम्।

( ३ ) ग्रहाणां पयोग्रहाणां त्रयाणां सुराग्रहाणां च त्रयाणां "युवꣳ सुरामं०" ( वा० सं० २०-७६, ७७ ) इति द्वे कण्डिके याज्यानुवाक्ये भवतः। "षड्ग्रहा भवन्ति" "सर्वेषां ग्रहाणां द्वे याज्यानुवाक्ये भवतः" ( श० ब्रा० १२-८-२-३४, ३५ ) इति श्रुतेः। तत्र प्रथमाऽनुवाक्या द्वितीया च याज्येति महीधराचार्यः।

( ४ ) पशोः सम्बन्धिनि स्विष्टकृद्यागे 'यस्मिन्नश्वास' ( वा० सं० २०-७८, ७९ ) इति द्वे कण्डिके याज्यानुवाक्ये। तत्र प्रथमाऽनुवाक्या द्वितीया याज्येति बोध्यम्।

याज्यानुवाक्ये ॥ २१ ॥

**होता यक्षदश्विनाविति (१)त्रयो वपानां प्रैषा यथालिङ्गम् ॥ २२ ॥**

प्रैषा भवन्ति ॥ २२ ॥

**ग्रहाणां (२)चतुर्थः ॥ २३ ॥**

प्रैषो भवति ॥ २३ ॥

**हविषामुत्तरे (३)यथालिङ्गम् ॥ २४ ॥**

प्रैषा भवन्ति ॥ २४ ॥

**उत्तमौ वनस्पतिस्विष्टकृतोः ॥ २५ ॥**

यथालिङ्गमेव भवतः(४) ॥ २५ ॥

**प्रतिगरिष्यत्युपविष्टेऽध्वर्यौ शोꣳसावेत्याहूयाश्विना तेजसेत्यनुवाकꣳ शꣳसति ॥ २६ ॥**

केचिदुपविष्टेऽ(५)ध्वर्याविति पठन्ति । तेषां शोꣳसावेत्येतावानेवाहावः "अश्विना तेजसा" (६)इत्येतमनुवाकं शंसति ॥ २६ ॥

---

( १ ) होता यक्षदश्विनौ० ( ४१ ) होता यक्षत्सरस्वतीम्० ( ४१ ) होता यक्षदिन्द्रम्० ( वा० सं० २१–४१ ) इति त्रयो वपात्रयस्य क्रमात् प्रैषा एककण्डिकायामित्यर्थः ।

( २ ) होता यक्षदश्विनौ० ( वा० सं० २१–४२ ) अयं चतुर्थः प्रैषो ग्रहाणां भवति ।

( ३ ) चतुर्थात्प्रैषादुत्तरे "होता यक्षदश्विनौ छागस्य० ( वा० सं० २१–४३,४४,४५ ) इत्याद्यास्त्रयो यथालिङ्गं प्रैषा भवन्ति ।

( ४ ) अन्तेपठ्यमानौ "होता यक्षद्वनस्पतिमभि०" "होता यक्षदग्निꣳ स्विष्टकृतम्०" ( वा० सं० २१–४६,४७ ) इमौ प्रैषौ भवतो क्रमेण वनस्पतियागे स्विष्टकृद्यागेच ।

( ५ ) अध्वर्योशोंसावोमित्याहावेत्यृगादिस्थाहावोऽप्येवमेव स्यात्तस्माद् 'अध्वर्य्यौ' इति युक्तः पाठः ।

( ६ ) अथत्रिंशवसाग्रहसादनानन्तरमध्वर्योर्होतुः पुरस्तात्प्रतिगरार्थमुपवेशनमुक्तम् । ततश्च प्रतिगरार्थमध्वर्यौ होतुः पुरस्तादुपविष्टे सति होता अध्वर्यो शोंसावोमित्याहूय 'अश्विना तेजसा चक्षुः' (वा०सं० २०–८०, ८१, ८२, ८३, ८४, ८५, ८६, ८७, ८८, ८९, ९० ) इत्येकादशर्चमनुवाकं शस्त्रं शंसति ।

त्रिःप्रथमान्त्ये ॥ २७ ॥

प्रथमान्त्ये च त्रिः शंसति ॥ २७ ॥

त्रिचादिष्वाहूय(१) ॥ २८ ॥

त्रिचस्य त्रिचस्यादौ आहावं कुर्यात् ॥ २८ ॥

उत्तमाꣳ शिष्ट्वा प्राङ्नवम्या दशम्या वा त्रया देवा इति (२)निवित्सप्तदशावसानोङ्कारः ॥ २९ ॥

उत्तमाया ऋचः प्राङ्नवम्या वा दशम्या वा निवित्सप्तदशावसाना शंस्यते। (३)अवसाने ओङ्कारो भवति ॥ २९ ॥

ऋगन्तेऽन्त्येऽक्षरे स्वरप्रभृति प्रणवे लोपः ॥ ३० ॥

ऋचो (४)यदन्त्यमक्षरं तस्य प्रणवे परत्रावस्थिते स्वरप्रभृति लुप्यत इत्यर्थः। 'इन्द्राय दधुरिन्द्रियम्' इत्यत्र अमित्यस्य लोपः। एवं सर्वत्र॥३०॥

तस्मिन्प्रणवान्तं चैके ॥ ३१ ॥

तस्मिन्नेव प्रणवे चैकेऽन्तमपि लुम्पन्ति। तत्र मकारो लुप्यते। ओ इत्येतावानेव प्रणवो भवति ॥ ३१ ॥

इत्येकोनविंशेऽध्याये षष्ठी कण्डिका।

---

अश्विनातेजसाऽश्विना पिबतामिति याज्यानुवाक्ये सशास्त्रस्य ॥ १ ॥

सशास्त्रस्य ग्रहस्य "अश्विना तेजसा" "अश्विना पिबताम्" इति

---

( १ ) अस्मिन्ननुवाके एकादशर्चो वर्तन्ते। तासां प्रथमोत्तमयोस्त्रिः शंसनमुक्तम् परिशिष्टास्त्रयस्तृचाः तेषामादिष्वाहावः कार्यः।

( २ ) त्रयादेवा० ( वा० सं० २०-११,१२ )

( ३ ) अवसानोंकारः सर्वस्य निवित्पदाऽवसाने ओंकारः प्रयोक्तव्य इति श्रीअनन्तः। सप्तदशावसानः शंसनीय ओंकारः निवित्पदावसाने इति, सन्निधेः इति वासुदेवः, निवित्सप्तदशावसाना ओंकारसंगतेः इति देवः।

( ४ ) ऋचः सम्बन्धिन्यन्त्येऽक्षरे प्रणवे परे स्वरप्रभृतिवर्णजातस्य लोपो भवति। तद्यथा "इन्द्रायदधुरिन्द्रियम्" ( वा० सं० २०-८० ) 'अम्' इत्येतावदत्र लुप्यते तेन इन्द्रियोमित्येवं सम्पद्यते। एवं सर्वत्र ज्ञेयम्।

याज्यानुवाक्ये भवतः। अनयोश्च ऋचोरपि नियुक्तत्वाच्छक्तो अप्रयोगो मा भूदिति अनुवाकग्रहणमधस्तात्कृतम् ॥ १ ॥

अनुवाचनप्रैषौ समस्याऽनुयाजप्रैषा देवं बर्हिरि(१)ति ॥ २ ॥

याज्याश्च ॥ ३ ॥

एता एव(२) ॥ ३ ॥

अग्निमद्ये(३)ति सूक्तवाकप्रैषः ॥ ४ ॥

भवति ॥ ४ ॥

(४)प्राकृतः सूक्तवाकप्रभृति प्रागवभृथेष्टेः ॥ ५ ॥

अनुक्तं च ॥ ६ ॥

(५)यच्चान्वयेन होतुः प्राप्नोति तदप्यत्रैव भवत्येव ॥ ६ ॥

इमं मे (६)तत्त्वेत्येककपालस्य ॥ ७ ॥

याज्यानुवाक्ये भवतः ॥ ७ ॥

अग्नीवरुणयोस्त्वन्नः (७)स त्वमिति ॥ ८ ॥

याज्यानुवाक्ये ॥ ८ ॥

---

( १ ) अनुवाचनप्रैषौ समस्य कर्तव्यौ 'अनुब्रूहि' इत्यनुवाचनम् 'अमुं यज' इति प्रैषश्च। तद्यथा—अश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्णे 'अनुब्रूहि' इत्येवम्। "देवं बर्हिः सरस्वती" ( वा० सं० २१—४८, ४९, ५०, ५१, ५२, ५३, ५४, ५५; ५६, ५७, ५८ ) इत्याद्या एकादश कण्डिकास्त्रिपशोरनुयाजानां प्रैषा भवन्ति इत्यर्थः।

( २ ) 'देवं बर्हिः' इत्याद्या एवानुयाजानां याज्या भवन्ति।

( ३ ) अग्निमद्य० ( वा० सं० २१—५९, ६०, ६१ ) इत्यादिः कण्डिकात्रयात्मकः सूक्तवाके प्रैषो भवति।

( ४ ) सर्वं प्राकृतं प्रकृतिवदेव भवति।

( ५ ) यच्च प्रायणीयानुवाचनाग्निमन्थनीयामनोतायूपाञ्जनोच्छ्रयणादिप्राकृतं तत्सर्वमत्रापि भवति।

( ६ ) इमं मे० ( वा० सं० २१—१, २, ) इति द्वे कण्डिके अवभृथेष्टौ वारुणस्यैककपालस्य पुरोडाशस्य पुरोनुवाक्यायाज्ये क्रमेण भवतः।

( ७ ) त्वन्नः० ( वा० सं० २१—३, ४ ) अत्रापि प्रथमा कण्डिका पुरोनुवाक्या द्वितीया याज्या एवं सर्वत्र।

**आदित्यस्य सुत्रामाणं महीमूषु (१)मातरमिति ॥ ९ ॥**

**आ नः प्र बाहवेति पयस्यायाः(२) ॥ १० ॥**

**वाजिनस्य श न्नो(३) वाजे वाज इति ॥ ११ ॥**

अयं तु विशेषः—

**अनवानं याज्या ॥ १२ ॥**

**वायोधसाप्रियः समिद्धो अग्निः समिधे(४)ति ॥ १३ ॥**

वायोधसस्य पशोराप्रियः प्रयाजयाज्याः "समिद्धो अग्निः समिधा" इत्येता भवन्ति ॥ १३ ॥

**याज्यानुवाक्याश्च वपापुरोडाशपशूनां वसन्तेन ऋतुने(५)ति ॥ १४ ॥**

'च' शब्दाद्वायोधसस्यैव ॥ १४ ॥

इत्येकोनविंशेऽध्याये सप्तमी कण्डिका।

इति उपाध्यायकर्कविरचिते कात्यायनसूत्रभाष्ये एकोनविंशतितमोऽध्यायः समाप्तः।

---

(१) सुत्रामाणम्०, महीमूषु० (वा० सं० २१—६, ५) इति पुरोनुवाक्या याज्या च क्रमेण भवत इत्यर्थः।

(२) आ नः० (वा० सं० २१—८, ९) इति द्वे कण्डिके पयस्यायाः पुरोनुवाक्या याज्या च क्रमेणेत्यर्थः।

(३) श न्नः० (वा० सं० २१—१०, ११) इति द्वे कण्डिके पयस्यान्तर्गतवाजिनयागस्य पुरोनुवाक्या याज्या च क्रमेण भवत इत्यर्थः।

(४) समिद्धोऽ अग्निः० (वा० सं० २१-१२, १३, १४, १५, १६, १७, १८, १९, २०, २१, २२)।

(५) वसन्तेनऽ ऋतुना० (वा० सं० २१--२३, २४, २५, २६, २७, २८) इति षड्ऋचः पुरोनुवाक्या याज्येति क्रमेण वायोधसस्य पशोर्वपादीनां भवन्ति।

# विंशोऽध्यायः ।

सौत्रामणीविधानसमनन्तरं श्रुतिमन्त्रपाठावसरप्राप्तोऽश्वमेधोऽनुविधीयते ।

**राजयज्ञोऽश्वमेधः सर्वकामस्य ॥ १ ॥**

राजशब्दोऽभिषेकवति क्षत्रिये वर्तत इत्युक्तं प्रदेशान्तरे। तथा च—"क्षत्रिययज्ञ उ वाऽ एष यदश्वमेधः" ( श० ब्रा० १३-४-१-२ ) इति । "तस्माद्राष्ट्र्यश्वमेधेन यजेत" ( श० ब्रा० १३-१-६-३ ) इति । राज्ञो यज्ञः राजयज्ञः, न ब्राह्मणवैश्ययोरिति । अश्वमेध इति त्रिरात्रस्य यज्ञक्रतोर्नामधेयम् । स सर्वकामस्य भवति । सर्वकामावाप्तिश्च परमात्माख्यसत्वप्राप्तिमन्तरेण न भवति यावच्छरीरकालभाविनो हि कामा इति । तेन 'सर्वकामस्येति मुमुक्षोः' इत्येतदुक्तं भवति । तथा चाह—"सर्वान्ह वै कामानाप्नोति सर्वा व्यष्टीर्व्यश्नुते योऽश्वमेधेन यजते" (श० ब्रा० १३-४-१-१ ) इति ॥ १ ॥

**अष्टम्यां नवम्यां वा फाल्गुनीशुक्लस्य ॥ २ ॥**

फाल्गुनशुक्लपक्षेऽष्टम्यां नवम्यां वा प्रारम्भः । "सा यासौ फाल्गुनी पौर्णमासी भवति" इति प्रकृत्य "तस्यै पुरस्तात्षडहे वा सप्ताहे वऽर्त्विज उपसमायन्ति" ( श० ब्रा० १३-४-१-४ ) इति श्रुतेः ॥ २ ॥

**ग्रीष्म एके ॥ ३ ॥**

आरम्भं कुर्वन्ति (१)श्रुतेरेव ॥ ३ ॥

**ब्रह्मौदनं पचति चतुर्णां पात्राणामञ्जलिप्रसृतानां च ॥ ४ ॥**

"चतुरः पात्रांश्चतुरोऽञ्जलींश्चतुरः (२)प्रसृतान्" ( श० ब्रा० १३-४-१-५ ) इति श्रुतेः ॥ ४ ॥

**अक्त्वैनमाद्यर्त्विग्भ्यः प्रयच्छति ॥ ५ ॥**

अक्त्वैनमोदनमाद्यर्त्विग्भ्यः समर्पयति ॥ ५ ॥

---

(१) "ग्रीष्मेऽभ्यारभेतेति" (श० ब्रा० १३-४-१-२) ज्येष्ठशुक्ले आषाढशुक्ले वा अष्टम्यां नवम्यां वा प्रारभेत इत्यर्थः ।

(२) प्रसृतश्चैकहस्ताङ्गुलिकोशः । चतुर्णां पात्राणां, चतुर्णामञ्जलीनां, चतुर्णां प्रसृतानां चेत्यर्थः ।

**तेभ्यश्चत्वारि सहस्राणि ददाति शतमानांश्च तावतः ॥ ६ ॥**

चत्वारि गोसहस्राणि (१)चत्वारि च सुवर्णरक्तिकाशतानि ऋत्विग्भ्यो ददाति ॥ ६ ॥

**अकृत्वाज्यशेषेण रशनां द्वादशारत्निं त्रयोदशारत्निं वा निदधाति ॥ ७ ॥**

(२)ब्रह्मौदनावसिक्ताज्यशेषेण ॥ ७ ॥

**आदानकाले वाऽञ्जनम् ॥ ८ ॥**

कार्यार्थत्वात् । एवं चाज्यशेषं स्थाप्यते । 'वा'शब्दोऽवधारणार्थः ॥८॥

**नि(३)ष्कं प्रतिमुञ्चन्वाचयति तेजोऽसीति ॥ ९ ॥**

चतुःसौवर्णिकं निष्कमाभरणविशेषं यजमाने प्रतिमुञ्चन्वाचयति "तेजोऽसि" (४)इत्यमुं मन्त्रम् ॥ ९ ॥

**वाचं यच्छेति चाह ॥ १० ॥**

'च'शब्दादनन्तरम् ॥ १० ॥

**आ वरदानाद्वाग्यमनम् ॥ ११ ॥**

(५)भवति ॥ ११ ॥

---

(१) प्रत्यृत्विजं गवां सहस्रं सुवर्णरक्तिकाशतं च दद्यादित्यर्थः ।

(२) ब्रह्मौदनाञ्जनार्थेत्यर्थः ।

(३) वस्तुतस्तु 'निष्कः सुवर्णाश्चत्वारः' इति चतुःसुवर्णपरिमितं रौप्याभरणं रूप्यप्रकरणे पाठात्, शतमानमपि रौप्यमेव तस्य प्रकरणे पाठादिति प्राप्ते सौवर्णग्रहणम् ।

याज्ञवल्क्यः—द्वे कृष्णले रूप्यमाषो धरणं षोडशैव ते ।
शतमानं तु दशभिर्धरणैः पलमेव तु ॥
विंशाधिकशतत्रयकृष्णलपरिमितम् ।

(४) तेजोऽसि० (वा० सं० २२-१) इति'पाहि'इत्यन्तं कण्डिकार्धमध्वर्युर्वाचयति । स निष्कश्च पश्चात्प्रातर्होमान्ते पूर्णाहुत्यनन्तरं यजमानेनाध्वर्यवे दीयते ।

(५) दक्षिणादानपर्यन्तमित्यर्थः "वरेण वाचं विसृजते" (श० ब्रा० १३-४-१-१०) इति श्रुतेः ।

**पत्न्य(१)श्चायन्त्यलङ्कृता निष्किण्यो महिषी वावाता परिवृक्ता पालागली सानुचर्यः शतेन शतेन ॥ १२ ॥**

"चतस्रो जाया उपक्लृप्ता भवन्ति" (श० ब्रा० १३-४-१-८) इति प्रकृत्य श्रुतत्वात्। ताश्च सहानुचरीभिरायन्ति शतेन शतेन ॥ १२ ॥

ता विशेषयति—

**राजदुहितरः प्रथमायाः १३ ॥**

अनुचर्यः(२) ॥ १३ ॥

**राजन्यानां द्वितीयायाः १४ ॥**

पत्न्या राजन्यदुहितरोऽ(३)नुचर्यः ॥ १४ ॥

**सूतग्रामण्यां तृतीयायाः १५ ॥**

सूतः (४)सङ्करजातः, ग्रामणीर्महत्तरः। तयोर्दुहितरस्तृतीयाया अनुचर्यः ॥ १५ ॥

**क्षात्र(५)संग्रहीतॄणां चतुर्थ्याः ॥ १६ ॥**

पत्न्याः अनुचर्यो भवन्ति। क्षत्ता प्रतीहारो दूतो वा, सङ्ग्रहीता च सारथिः ॥ १६ ॥

**अग्न्याधेयवत्प्रविश्य हुतेऽग्निहोत्रेऽपरेण गार्हपत्यमुदक्शिराः संविशत्यूर्वन्तरे वावातायां ब्रह्मचारी॥१७॥**

'अग्न्याधेयवत्' इति (६)पूर्वया द्वारा यजमानो, दक्षिणा पत्न्य इत्युक्तं भवति। हुतेऽग्निहोत्रे गार्हपत्यमपरेणोदक्शिराः संविशति यजमानो वावातायां ऊर्व(७)न्तरे। ब्रह्मचारी भवति ॥ १७ ॥

---

(१) पूर्वोक्तनिष्काभरणं धारयन्त्यः पत्न्यो यजमानसमीपे आगच्छन्ति। महिषी प्रथमपरिणीता स्त्री। द्वितीया वावाता वल्लभा। तृतीया परिवृक्ता अवल्लभा। चतुर्थी पालागली दूतपुत्री। अनुचरीणां शतेन-शतेन ताः पत्न्यः सानुचर्यो भवन्ति।

(२) महिष्या राजपुत्र्योऽनुचर्यो भवन्ति।

(३) क्षत्रियजातिमात्राणां दुहितरः।

(४) सूतोऽश्वपोषकः।

(५) क्षत्तार आयव्ययाध्यक्षाः तेषां समूहः क्षात्रम्।

(६) "पूर्वेण प्रविशति दक्षिणेन पत्नी" (का० श्रौ० ४-७-१८) इत्युक्तेः।

(७) "अन्तरोरूऽअसंवर्तमानः शेते" (श०ब्रा०१३-४-१-९)इतिश्रुतेः।

इतराश्चान्वक् ॥ १८ ॥

इतराश्च पत्न्यो यजमानमनुसंविशन्ति(१) ॥ १८ ॥

प्रातराहुत्यां हुतायां पूर्णाहुत्यन्ते वरदानं ब्रह्मणे ॥१९॥

प्रातराहुत्यन्ते पूर्णाहुत्यां हुतायां ब्रह्मणे वरं ददाति ॥ १९ ॥

अध्वर्यवे च प्रतिमुक्तं निष्कम् ॥ २० ॥

'च'शब्दाद्ददाति ॥ २० ॥

पुरोडाशोऽग्नये पथिकृते ॥ २१ ॥

कर्तव्यः । स (२)चोपांशुर्भवति ॥ २१ ॥

शतमानं दक्षिणा सौवर्णम् ॥ २२ ॥

शतसंख्यामितं सुवर्णम् । तच्चावमया मात्रया मितं भवति । अवमा च मात्रा रक्तिका ॥ २२ ॥

हिरण्यपरिमाणेऽन्यत्रापि ॥ २३ ॥

हिरण्यपरिमाणे मृग्येऽन्यत्रापि दाक्षायणादौ शतमानमेव भवति । अपरे तु वर्णयन्ति—'शतमाने श्रूयमाणे सौवर्णो भवति(३) न राजतम्' इति ॥ २३ ॥

पौष्णं चरुं निर्वपति वासःशतं दक्षिणा ॥ २४ ॥

तस्य च वाससां शतं दक्षिणा । अयमप्युपांश्वेव(४) ॥ २४ ॥

देवस्य त्वेति (५)रशनामादाय ब्रह्मन्नश्वं मन्त्स्यामीत्याह ॥ २५ ॥

ब्रह्मौदनाज्यशेषेण रशनामक्त्वाऽऽदानम् "तेन रशनामभ्यज्यादत्ते" इति श्रुतेः ॥ २५ ॥

---

(१) "तदेवापीतराः संविशन्ति" (श० ब्रा० १३-४-१-९) इतिश्रुतेः ।

(२) "अथाग्नेयीमिष्टिं निर्वपति" इति प्रकृत्य "उपांशु हविषो याज्यानुवाक्ये" (श० ब्रा० १३-४-१-१३) इत्युक्तत्वात् ।

(३) यत्र यत्र शतमानं श्रूयते तत्र हिरण्यपरिमाणं ज्ञातव्यं न तु राजतपरिमाणे इत्यर्थः ।

(४) "अथ पौष्णीं निर्वपति" इति प्रकृत्य "उपांशु हविषो याज्यानुवाक्ये" (श० ब्रा० १३-४-१-१५)इति श्रुतेः ।

(५) देवस्य त्वा०(वा० सं० २२-१) इत्यारभ्य "सरमारपत्नी" (वा० सं० २२-२) इत्यन्तेन मन्त्रेण द्वादशारत्निं त्रयोदशारत्निं वा दर्भमयीं द्वि-

(१)तं बधानेति (२)ब्रह्माऽनुज्ञातोऽभिधा असीति(३) बध्नात्यश्वं त्रिरूपम् ॥ २६ ॥

रूपशब्दो वर्णवाची। त्रिवर्णमित्यर्थः। "त्रिरूप एवैषोऽश्वः स्यात्" ( श० ब्रा०१३-४-२-४ ) इति वचनात् ॥ २६ ॥

सर्वरूपं वा ॥ २७ ॥

'वा' विकल्पार्थः। "यस्मिन्त्सर्वाणि रूपाणि भवन्ति" ( श० ब्रा० १३-४-२-१ ) इति श्रुतेः ॥ २७ ॥

शीघ्रम् ॥ २८ ॥

प्रसिद्धमेव(४) ॥ २८ ॥

दक्षिणधुर्यसमम् ॥ २९ ॥

दक्षिणेन धुर्येण तुल्यमित्यर्थः। अथवा यो दक्षिणस्यां धुरि असामान्येन, तत उत्कृष्टतर इत्यर्थः ॥ २९ ॥

साहस्रम् ॥३०॥

गोसहस्रार्ह(५)म् ॥ ३० ॥

ललामम् ॥ ३१ ॥

नीलीपौण्ड्रकम्(६) ॥ ३१ ॥

कृत्तिकाञ्जि वा ॥ ३२ ॥

कृत्तिका शकटमिव यस्य ललाटे पौण्ड्राणि। अत्र येषां वर्णानामविरोधस्ते समुच्चीयन्ते। येषां विरोधस्ते आम्नानसामर्थ्यात् विकल्प्यन्ते ॥ ३२ ॥

पूर्वकायकृष्णः शुक्लापरम् ॥ ३३ ॥

"तस्य कृष्णः पूर्वार्धः, शुक्लोऽपरार्धः" ( श० ब्रा० १३-४-२-४ ) इति श्रुतेः ॥ ३३ ॥

---

गुणमश्वबन्धनार्थां रज्जुमादाय"ब्रह्मन्नश्वं भन्त्स्यामि०"(वा० सं० २२-४) इत्यादि "तेन राध्यासम्" इत्यन्तं मन्त्रं ब्रह्माणं प्रत्याह इत्यर्थः।

(१) "तं बधान देवेभ्यः प्रजापतये तेन राध्नुहि" (वा० सं० २२-४)

(२) 'ब्रह्मा' इति प्रतिनिधिव्युदासार्थम् असन्निधानादिना तत्प्राप्तेः।

(३) अभिधाऽ असि० (वा० सं० २२-३) इत्यारभ्य "देवेभ्यः प्रजापतये (२२-४) इत्यन्तेन।

(४) वेगवत्तरमिति यावत्।

(५) गवां सहस्रं मूल्यं योऽर्हति।

(६) नीलवर्णलाञ्छनयुक्तम्।

कृष्णसारङ्गं वा ॥ ३४ ॥

कृष्णवर्णसहितान्यवर्णम् ॥ ३४ ॥

स्थावरा अपो गत्वा प्रजापतये त्वेति प्रोक्षत्यश्वं प्रतिमन्त्रम् ॥ ३५ ॥

या न वहन्ति ता स्थावरा आपः(१), ता गत्वा "प्रजापतये त्वा०"(२) इति प्रतिमन्त्रमश्वं प्रोक्षति ॥ ३५ ॥

आयोगवमाह श्वानं चतुरक्षमभिमन्यस्वेति ॥ ३६ ॥

आयोगवः—सङ्करजातः, वैश्यायां शूद्रेण जातः, तमाह–'श्वानं चतुरक्षमभिमन्यस्व' इत्येवम् । चतुरक्षश्वाभावाद्यस्याक्षिसमीपे पौण्ड्राणि स गुणवृत्त्या चतुरक्षः ॥ ३६ ॥

पुँश्चलूमेके ॥ ३७ ॥

'श्वानं चतुरक्षमभिमन्यस्व' इत्येवमाहुः । पुंश्चलू—स्त्रीलोलुप उच्यते ॥ ३७ ॥

सिध्रकमुसलेनै(३)नं हन्ति ॥ ३८ ॥

स एवं प्रेषितस्सन् सिध्रकमुसलेनैनं श्वानं हन्ति ॥ ३८ ॥

इति विंशेऽध्याये प्रथमा कण्डिका ।

यो अर्वन्तमिति वाचयति ॥ १ ॥

"यो अर्वन्तम्" (४)इत्यमुं मन्त्रं वाचयति ॥ १ ॥

वेतसकटेनाधोऽश्वं प्लावयति परो मर्त इति ॥ २ ॥

वेतसकटेना(५)श्वस्याधस्तात् प्लावयति—"परो मर्त" इत्यनेन मन्त्रेण ॥ २ ॥

अग्निसमीपमानीयाऽग्नये स्वाहेति जुहोत्यनुवाकेन प्रतिमन्त्रम् ॥ ३ ॥

---

(१) तडागादिस्था इति यावत् ।

(२) प्रजापतये त्वा० (वा० सं० २२–५) इति पञ्चभिः यजुर्भिः प्रोक्षत्यध्वर्युः ।

(३) सिध्रकवृक्षोद्भवेन ।

(४) योऽ अर्वन्तम्० (वा० सं० २२–५) इत्यादि 'वरुणः' इत्यन्तम् ।

(५) परो मर्त्तः० (वा० सं० २२–५) इतिमन्त्रेण वेतसवृक्षशाखानिमितेन कटेन तं मारितं श्वानमश्वस्याधः प्रदेशे जलमध्ये तारयति ।

अग्निसमीपमानीयाश्वम्। अनुवाकेन जुहोति प्रतिमन्त्रम् "अग्नये स्वाहा" (१)इत्येव ॥ ३ ॥

**सहस्रं वावर्तम् ॥ ४ ॥**

सहस्रं वाहुतीनां जुहोति अनुवाकमावर्त्यावर्त्य "सहस्रं जुहोति" ( श० ब्रा० १३-१-३-१ ) इति वचनात् ॥ ४ ॥

**आश्वस्रवणविरमणाद्वा ॥ ५ ॥**

जुहोति। 'वा' (२)शब्दो विकल्पार्थः ॥ ५ ॥

**द्वादशकपालान्निर्वपति भिन्नतन्त्रांञ्छतमानदाक्षिणान्मध्यमस्य राजतः, सावित्रे प्रसवित्रे, सवित्रऽआसवित्रे, सावित्रे सत्यप्रसवायेति ॥ ६ ॥**

कालैक्यात्तन्त्रैक्यं मा भूदिति 'भिन्नतन्त्रान्' इत्युक्तम्। मध्यमस्य राजतः शतमानो दक्षिणा, इतरयोः सौवर्णः ॥ ६ ॥

**प्रयाजेषु दक्षिणतो ब्राह्मणो यजमानस्य यज्ञदानयुक्ताः स्वयंकृतास्तिस्रो गाथा गायत्युत्तरमन्द्रायाम् ॥७॥**

प्रयाजेषु तायमानेषु दक्षिणतो व्यवस्थितो ब्राह्मणः, ब्राह्मणग्रहणादृत्विग्व्यतिरिक्तः। यजमानस्य यज्ञदानयुक्ताः स्वयं कृता एव तिस्रो गाथा गायत्युत्तरमन्द्रायाम्। उत्तरमन्द्रा च गायनप्रसिद्धा। वीणासंकृतं च गानम् "वीणागाथी" ( श० ब्रा० १३-४-२-८ ) इति श्रुतेः ॥७॥

**राजन्यो धृतिषु(३) युद्धजययुक्ताः ॥ ८ ॥**

गाथा गायत्युत्तरमन्द्रायाम्। वीणागाथी स्वयंकृता युद्धजययुक्ताः ॥ ८ ॥

**अध्वर्युयजमानौ दक्षिणेऽश्वकर्णे जपतो विभूर्मात्रेति ॥ ९ ॥**

(४)अमुं मन्त्रम् ॥ ९ ॥

---

(१) अग्नये स्वाहा०(वा० सं० २२-६)इति एककण्डिकात्मकेन अनुवाकेन प्रतिमन्त्रं सकृद्गृहीत्वा जुह्वा स्तोकीयसंज्ञा दशाज्याहुतीर्जुहोति।

(२) अथवा न सहस्रस्य नियमः किन्तु यावत्कालं क्लिन्नादश्वशरीरादुदकं स्रवति तावज्जुहोतीत्यर्थः। शाखान्तरात्।

(३) हूयमानासु।

(४) विभूर्मात्रा० (वा० सं० २२-१९)

पशुवदुत्सर्जनं निरष्टे ऽश्वशते ॥ १० ॥

'पशुवत्' इत्युत्तरपूर्वा दिग्लभ्यते । निरष्टे निरमणे वृद्धतया ऽश्वशते(१) ॥ १० ॥

(२)देवा आशापाला इति रक्षिणोऽस्यादिशत्यनुचरीजातीयांस्तावतस्तावतः कवचिनिषङ्गिकलापिदण्डिनो यथासंख्यम् ॥ ११ ॥

एवं हि श्रूयते—"राजपुत्राः कवचिनः शतम्" (श. ब्रा.१३-४-२-५) इत्येवमादि ॥ ११ ॥

वडवाभ्यो(३) वारणम् ॥ १२ ॥

अश्वस्य ॥ १२ ॥

(४)प्रस्नेयाचोदकात् ॥ १३ ॥

इदानीं रक्षितॄणां वृत्तिमाह—

ब्राह्मणोऽश्वमेधेऽविद्वान्वृत्तिः स वः ॥ १४ ॥

अश्वमेधानभिज्ञो ब्राह्मणो वो वृत्तिः(५) । तामेव हि प्रकृत्य श्रूयते—"स पानं करवाथ खादं निवपाथ" ( श० ब्रा०१३-४-२-१७ ) इति ॥१४॥

पक्वान्नं च सर्वेषु ॥ १५ ॥

अश्वमेधविद्वत्स्वपि(६) ॥ १५ ॥

---

(१) अध्वर्युयजमानौ अश्वशते शताश्वानां मध्ये चतुर्विंशतिवर्षवयस्काश्वे पशुवदुत्सर्जनं कुरुतः । कीदृशे ? निरष्टे अश्वस्य दन्तगतान्यष्टौ वयोव्यञ्जनानि, एकैकं त्रीणि-त्रीणि वर्षाणि अनुवर्तन्ते । तानि निर्गतान्यस्मादिति निरष्टम् अतीतचतुर्विंशतिवर्षमित्यर्थः ।

(२) उत्सृष्टस्याश्वस्य रक्षिणः पुरुषान् अध्वर्युः "देवाऽ आशापाला०" (वा० सं० २२-१९) इति मन्त्रेणादिशति शत राजपुत्रान् , शतं राजन्यपुत्रान्, शतं सूतग्रामणीपुत्रान्, शतं क्षात्रसंग्रहीतृपुत्रान् । कीदृशानित्याह—कवचीत्यादिना । सन्नाहवन्तः कवचिनः, खड्गधारिणो निषङ्गिणः, शरावपनभस्त्रावन्तः कलापिनः, वंशादिधारिणो दण्डिनः ।

(३) वर्षपर्यन्तम् ।

(४) प्रस्नेयात् स्नानाहात् ।

(५) तादृशब्राह्मणस्य गृहे खानपानादि कुरुत ।

(६) अश्वमेधवेदितृब्राह्मणानामपि गृहे यत्पक्वान्नं तद् गृण्हीध्वम् "अथ यत्किंच जनपदे कृतान्नं सर्वं वः" (श० ब्रा० १३-४-२-१७) इति श्रुतेः ।

**रथकारगृहवासाश्च ॥ १६ ॥**

"रथकारकुल एव वो वसतिः" (श० ब्रा० १३-४-२-१७) इति ॥१६॥

**अभिषेक्या भविष्यत समाप्नुवन्त इत्याह राजपुत्रान् १७**

नेतरान्(१) ॥ १७ ॥

**दक्षिणतो वेदेर्हिरण्मयेषूपविशन्ति ॥ १८ ॥**

सम्प्रत्यभावाद् भूतकालीना वेदिः ॥ १८ ॥

तेषां विशेषमाह—

**अध्वर्युयजमानौ (२)कूर्चयोः ॥ १९ ॥**

सौवर्णयोः ॥ १९ ॥

**(३) फलकयोर्वा ॥ २० ॥**

**होतृब्रह्मोद्गातारः कशिपुषु ॥ २१ ॥**

कशिपुशब्देन मसूरक उच्यते(४) ॥ २१ ॥

**होतर्भूतान्याचक्ष्व भूतेष्विमं यजमानमध्यूहेति ॥२२॥**

इति विंशेऽध्याये द्वितीया कण्डिका ।

---

**पारिप्लवं प्रेष्यति ॥ १ ॥**

पारिप्लवमृग्वन्द्वमाख्यानम् ॥ १ ॥

तस्मिन्वक्ष्यमाणे—

**हवै होतरिति प्रतिगृह्णाति तदन्ते प्रेष्यति (५)वीणागणगिनो राजर्षिभिर्यजमानं सङ्गायतेति ॥ २ ॥**

वीणागणगिन उपसमेता भवन्ति "तानध्वर्युः सम्प्रेष्यति" (श० ब्रा० १३-४-३-३) इति श्रुतेः ॥ २ ॥

---

(१) राजपुत्रान्प्रत्याह-यूयम् अश्वरक्षणं समाप्नुवन्तः पट्टाभिषेकयोग्या भविष्यथ । (२) सपादमासनं कूर्चः ।

(३) पादरहितमासनं फलकम् । (४) मृद्वासनमित्यर्थः ।

(५) वीणानामलाबुवीणा त्रितन्तिः सप्ततन्तिः शततन्तिः इत्यादीनां गणो वीणागणः, तेन ये गायन्ति ते वीणागणगाः, ते सन्ति शिष्या येषां गायनाचार्याणां ते वीणागणगिनः तत्सम्बोधनं हे वीणागणगिनः । राजर्षिभिरुपमानभूतैः सहोपमेयभूतं यजमानं 'सङ्गायत' इति प्रैषं दद्यादध्वर्युः ।

**दक्षिणाग्नौ जुहोति हिङ्काराय स्वाहेति प्रक्रमान् ॥ ३ ॥**

"हिङ्काराय स्वाहा"(१) इत्येभिर्मन्त्रैः प्रतिमन्त्रं प्रक्रमसंज्ञकान् होमान् दक्षिणाग्नौ जुहोति ॥ ३ ॥

**आहवनीयेऽस्तमिते चतस्रो धृतीरिह रन्तिरिति(२) ॥४॥**

'जुहोति' इत्यनुवर्तते । 'चतस्र' इति ग्रहणं मन्त्रविवेकार्थम् । आहवनीयग्रहणमधिकृतदक्षिणाऽग्निव्युदासार्थम् ॥ ४ ॥

**वावातासम्वेशनसावित्र्युत्तरमन्द्रागानपारिप्लवधृतीः सम्वत्सरम्(३) ॥ ५ ॥**

वावातासम्वेशनसावित्रीणां चान्द्रमसः सम्वत्सरः । तेन हि सर्वत्र व्यवहारः । पारिप्लवधृतीनां तु सावनः(४) । एवं हि श्रूयते पारिप्लवं प्रकृत्य "षट्त्रिंꣳशतं दशाहानाचष्टे" ( श० ब्रा० १३-४-३-१५ ) इति । धृतिषु च "षोडश नवतीरेता वाऽ अश्वस्य बन्धनम्" (श०ब्रा०१३-१-६-२ ) इति । इयं च संख्या सावन एव संवत्सरे घटते न चान्द्रमस इति ॥ ५ ॥

**अर्धमासमासत्रैमास्यषण्मास्यानि चैके ॥ ६ ॥**

वावातासंवेशनादीनि कुर्वन्ति शाखान्तरात् । अस्मिंश्च पक्षे मासाविरोधेनोपक्रमः कार्यः ॥ ६ ॥

**वीणागाथिभ्यां पृथक् शते ददाति ॥ ७ ॥**

शतꣳ शतं ददातीत्यर्थः ॥ ७ ॥

**राजर्षिभिः सङ्गायनमा दक्षिणीयायाः ॥ ८ ॥**

कर्तव्यः(५) ॥ ८ ॥

**दीक्षान्ते देवैरौपवसथ्यात् ॥ ९ ॥**

---

( १ ) हिङ्काराय स्वाहा० ( वा० सं० २२-७, ८ ) इत्यादि एकोनपञ्चाशन्मन्त्रैर्जुहोति ।

( २ ) इह रन्ति० ( वा० सं० २२-१९ ) इत्यादीनि चत्वारि यजूंषि ।

( ३ ) सम्वत्सरपर्यन्तं प्रत्यहं भवन्ति । संवत्सरश्चोत्सर्गदिवसादारभ्य गणनीयो न ब्रह्मौदनदिवसादिति देवयाज्ञिकः ।

( ४ ) तत्साहचर्याद्वावातासम्वेशनसावित्र्युत्तरमन्द्रागानानामपि सावन एव संवत्सरः । न ह्येकः शब्दो विधेयभेदेन अर्थभेदमाश्रयते । तस्मात्सावन एव सर्वत्रेतिस्पष्टं देवयाज्ञिके ।

( ५ ) संवत्सरे पूर्णे सत्यपि इति शेषः ।

"दीक्षणीयायाꣳ सꣳस्थितायाꣳ सायं वाचि विसृष्टायाम्" (श० ब्रा० १३-४-४-२ ) इति प्रकृत्याह—"देवैरिमं यजमानꣳ सञ्ज्ञायत" इति ॥९॥

**पश्वादौ प्रजापतिना सुत्यासु ॥ १० ॥**

सुत्यासु पश्वादौ 'प्रजापतिनेमं यजमानꣳ सञ्ज्ञायत' इति प्रैषः ॥१०॥

**अन्ते च ॥ ११ ॥**

एवमेव प्रेषणम् । 'अन्त' ग्रहणेनोदवसानीयान्त उच्यते । "उदवसानीयायामन्ततः सꣳस्थितायाम्" ( श० ब्रा० १३-४-४-४ ) इति श्रुतेः । एवमेवाहरहः परिहृतास्वेव वसतीवरीष्वपि । एतदप्यन्तग्रहणेन सूचितम् ॥ ११ ॥

**अश्वापदीज्या (१)चरुभिः साविष्यन्ते ॥ १२ ॥**

तत्कालता मा भूदिति 'साविष्यन्त'ग्रहणम् ॥ १२ ॥

**पौष्णः स्रामे ॥ १३ ॥**

स्रामः—सिंहाणक (२)उच्यते ॥ १३ ॥

**सौर्योऽक्ष्यामये ॥ १४ ॥**

अक्षिरोगे ॥ १४ ॥

**वारुणोऽप्सु मृते ॥ १५ ॥**

'यवमयो भवति' इत्युक्तमेव ॥ १५ ॥

**भूमिकपालो वैश्वानरोऽरिष्टयामये ॥ १६ ॥**

अरिष्टरोगे द्रोण्यामये(३) ॥ १६ ॥

**लोष्टकपालं जानुकण्र्यो भेदात् ॥ १७ ॥**

एवं हि श्रूयते—"वैश्वानरं द्वादशकपालं भूमिकपालं पुरोडाशमनुनिर्वपेत्" ( श० ब्रा० १३-३-८-३ ) इति । तत्पुनरनुपपन्नम्, येनात्र वैश्वानरो द्वादशकपालोऽनूद्यते—यो वैश्वानरो द्वादशकपालः स भूमिकपालः कर्तव्य इति । द्वादशकपालताया भूमिकपालतायाश्चासम्भवात् । लोष्टकपालत्वे च भूमिकपालतानुपपत्तिरेव । 'तस्माद्भूमिक-

---

( १ ) अश्वस्य रोगाद्यभिभवे चरुभिरिज्या भवति ।

( २ ) सिंहाणकः शालिहोत्रे प्रसिद्धः ।

( ३ ) द्रोण्यामयो ह्यक्षताऽऽमय उच्यते । रिष्टिः आयुधं तत्कृत आमयो रिष्टयामयः, न रिष्टयामयः अरिष्टयामय इति व्युत्पत्तेः । कपालस्थाने चास्य भूमिरेव भवति ।

पाल एव' इति सम्प्रदायः(१) ॥ १७ ॥

**नाशे तन्त्रेण द्यावापृथिव्यः पयो वायव्यः सौर्यः ॥१८॥**

'तन्त्र'शब्दस्तन्त्रैक्यार्थ इति केचित् । तत्पुनरनुपपन्नम् । कालाधभेदादिना प्राप्तत्वात् । तस्माद्वैश्वदेविकमत्र तन्त्रं यथा स्यादिति ।

ननु च वैश्वदेविकप्रकृतित्वेन प्राप्नोत्येव तत् । नेत्युच्यते । वायव्यसौर्याभ्यां न हि नवप्रयाजतादिविधिरुच्यते । अतस्तत्प्राप्त्यर्थं 'तन्त्रेण' इति वचनम्(२) ॥ १८ ॥

**अन्यत्रापि ॥ १९ ॥**

अन्यस्मिन्नपि नष्टे द्रव्ये इयमिष्टिर्भवति । "स यद्यस्याप्यन्यन्नश्येद्देतयैव यजेत" (श० ब्रा० १३-३-८-६) इति । 'अस्य' इति च ग्रहणात्प्रकरणाद्बहिर्न(३) भवति ॥ १९ ॥

**प्रजाते वायव्यम् ॥ २० ॥**

"यद्यश्वो वडवां स्कन्देद्वायव्यं पयोऽनुनिर्वपेत्" (श० ब्रा० १३-३-८-१) इति वचनात्(४) ॥ २० ॥

**मृतादर्शनयोः—**

**मृते चाऽदर्शने(५) च ।**

**इति विंशेऽध्याये तृतीया कण्डिका ।**

---

(१) वस्तुतस्तु लोष्टकपालत्वे भूमिकपालत्वमपि सिद्ध्यति । तदाह–लोष्टा एव कपालानि यस्यासौ । कुतः ? 'भेदात्' कपालेषु संख्यायोगेन भेदोपदेशात् । न चासौ भूमिकपालत्वे सम्भवति । तस्माल्लोष्टानि मृत्खण्डानि कपालस्थाने उपधेयानि । एवं सति उभयानुग्रहो भवति । लोष्टानां भेदाद् द्वादशकपालता, भूमिकपालता चेति ।

( २ ) अश्वस्य नाशे तन्त्रेण त्रिहविष्केष्टिर्भवति । "अथ यदि नश्येत् त्रिहविषमिष्टिमनुनिर्वपेत्" ( श० ब्रा० १३-३-८-६ ) इति श्रुतेः ।

(३) अश्वमेधयाजिनाऽन्यत्रापि हिरण्यादिद्रव्ये नष्टे इयमेवेष्टिर्भवति ।

(४) वडवायां कृतरेतःस्कन्दनः प्रजात इत्युच्यते ।

(५) मृते अश्वस्यादर्शने अपुनरागमनसंभवे च अन्यस्याश्वस्य रशनादानादि अश्वयुक्तम् अश्वसम्बन्धि अश्वोपकारकं सर्वं कर्म पुनः करोति । तत्र प्रथमं लौकिकेनाज्येन रशनाञ्जनं, ततो मन्त्रेणादानं, ब्रह्मन्नश्वमिति प्रश्नः, ब्रह्मानुज्ञातस्याश्वबन्धनम्, अपःप्रति नयनं, प्रोक्षणम्, अश्वहननं, प्लावनम्, 'अग्नये स्वाहा' इति अनुवाकेन होमः, कर्णजपः, उत्सर्गः, प्रक्रमहोमाश्च यावन्तः पूर्वमनुष्ठितास्ते सर्वेऽप्यत्र आवर्त्यन्ते इति स्पष्टं देवयाज्ञिके ।

**अन्यस्य रशनादानादि करोत्यश्वयुक्तम् ॥ १ ॥**

रशनादानाद्यन्यस्याश्वयुक्तं कर्तव्यम्। अश्वहननं तु न भवति, अश्वयोगाभावात्। "अग्नये स्वाहा" इति चानुवाकेन होमः(१)। प्रक्रम-होमधृतिहोमावपी(२)ति चेत्। न, अश्वसम्बन्धात्। अश्वसम्बन्धो हि भवति, "हिङ्काराय स्वाहा" इत्येवमादिप्रक्रमाणां धृतिहोमानामपि "षोडश नवतीरेता वा अश्वस्य बन्धनम्"(श०ब्रा०१३-१-६-२) इति। अन्यस्य रशनादानादि करोतीत्यर्थः। प्राप्तत्वादवाच्यमेनादिति चेत् ? स्यात्, प्रायश्चित्तव्युदासार्थत्वात्। तत्कुतः ? "अन्यमानीय प्रोक्षेयुः सैव तत्र प्रायश्चित्तिः" (श० ब्रा० १३-३-८-६) इति वचनात् ॥ १ ॥

**पश्वालम्भनाद्याऽऽध्वरदीक्षणीयायाः कृत्वा चत्वार्यौ-द्गृभणानि(३) जुहोत्याध्वरिकाणि ॥ २ ॥**

पश्वालम्भनं च पौर्णमास्यामेव। तदाद्यध्वरदीक्षणीयान्तं च। यत्कारणं द्वादशाहचोदकानुग्रहेण षष्ठ्यामाग्निके च सप्तम्यां निर्वपति इति भवति ॥ २ ॥

**काय स्वाहेति(४) चाश्वमेधिकानि त्रीणि ॥ ३ ॥**

'औद्ग्रभणानि जुहोति' इति वर्तते ॥ ३ ॥

**कृष्णाजिनदीक्षाऽतः ॥ ४ ॥**

(५)अतोऽनन्तरं कृष्णाजिनदीक्षा ॥ ४ ॥

---

(१) अत्र न भवतीत्यनुषज्यते। देवयाज्ञिकस्तूभावपि कर्तव्यौ तयोरश्वयोगस्य सत्त्वादित्याह।

(२) अस्यापि 'न भवतः' इति शेषः।

(३) साग्निचित्ये क्रतौ य इष्टकापशुर्विहितः तस्य आलम्भनादि कर्म कृत्वा चत्वार्यौद्ग्रभणानि "आकूत्यै प्रयुज०" (वा० सं० ४-७) इत्यादीनि जुहोति। अत्र देवयाज्ञिकः—चैत्र्यां पौर्णमास्यां पश्वालम्भनादि कर्तव्यं, चैत्रकृष्णषष्ठ्यां सप्तमी दीक्षणीया, ततः प्रभृति द्वादश दीक्षाः, ततो वैशाखशुक्लतृतीयायां क्रयः, वैशाखशुक्लचतुर्दश्यामग्नीषोमीयः, वैशाख्यां च प्रथमा सुत्येति।

(४) चत्वारि आध्वरिकाण्यौद्ग्रभणानि हुत्वा "कायस्वाहा०" (वा० सं० २२-२०) इति आश्वमेधिकानि, त्रीण्यौद्ग्रभणानि जुहुयात्।

(५) अत औद्ग्रभणहोमानन्तरं दीक्षणीयाशेषं समाप्य कृष्णाजिनदीक्षा तत्रोपवेशनान्ता कर्तव्या।

**अध्वरदीक्षणीयायाश्चत्वारि त्रीणि त्रीणि चाश्वमेधिकानि ॥ ५ ॥**

अध्वरदीक्षणीयाया आग्नावैष्णवस्य चत्वार्यौद्ग्रभणानि त्रीणि त्रीणि चाश्वमेधिकानि(१) जुहुयात्परिपाट्या ॥ ५ ॥

**कृष्णाजिनान्तमन्वहं प्राकृतव्रतो ऽकृतत्वात् ॥ ६ ॥**

कृष्णाजिनान्तमन्वहं कर्तव्यम्(२) सप्ताहं दीक्षणीयाप्रचारे प्राकृतमेव व्रतं भवति । कुत एतत् ? अकृतत्वाद्दीक्षासंस्कारस्य । दण्डान्तेन हि दीक्षितो भवति ॥ ६ ॥

**आग्निके च सप्तम्यां निर्वपति ॥ ७ ॥**

आग्निके च(३) हविषी सप्तम्यामिष्ट्यां निर्वपति । ते च "वैश्वानरो" "घृते चरुरादित्येभ्य" (का० श्रौ० १६-४-२८, २९) इति ॥ ७ ॥

**अभ्यञ्जनप्रभृति करोति ॥ ८ ॥**

इहाभ्यञ्जनविधानात्पूर्वं(४) न भवति, इति गम्यते ॥ ८ ॥

**षडाग्निकानि चतुःस्थाने ॥ ९ ॥**

चतुर्णामौद्ग्रभणानामाध्वरिकाणां स्थाने षडाग्निकानि जुहुयात् त्रीणि चाश्वमेधिकानि(५) ॥ ९ ॥

---

(१) "सप्ताहं प्रचरन्ति" (श०ब्रा० १३-१-७-२) इति श्रुतेः सप्ताहं दीक्षणीया कार्या । तत्र प्रत्यहं कर्तव्यमाह—अध्वरदीक्षणीयायाश्चत्वारि चत्वार्यौद्ग्रभणानि 'आकूत्यै प्रयुज०' इत्यादीनि त्रीणि त्रीणि चाश्वमेधिकानि 'कायस्वाहा' इति कण्डिकापठितानि प्रत्यहमन्यान्यन्यानि पाठक्रमेण । एवं सप्त-सप्त प्रत्यहं हूयन्ते । 'काय स्वाहा' इति कण्डिकायां सप्त त्रिकाणि पठितानि तन्मध्ये सप्तसु अहःसु क्रमेणैकैकं त्रिकं हूयते । तत्र द्वितीयत्रिके स्वाहाकाराद्यं मन्त्रत्रयं 'स्वाहाधिमाधीताय' इत्यादि ।

(२) कृष्णाजिनोपवेशनान्तं कर्म प्रत्यहं षट्स्वपि दीक्षणीयासु भवति ।

(३) अत्र चकाराद् आग्नावैष्णवश्च भवति ।

(४) षट्सु दीक्षणीयास्वित्यर्थः ।

(५) प्रत्यहं यानि चत्वार्यौद्ग्रभणानि आध्वरिकाणि हूयन्ते तेषां चतुर्णां स्थाने सप्तम्याम् "आकूतिमग्निम्०" (वा०सं० ११-६६) इति षडाग्निकानि जुहोति । त्रीणि चाश्वमेधिकानि "विष्णवे स्वाहा" (वा० सं० २२-२० )इत्यादीनि ।

दशमं विश्वो देवस्ये(१)ति ॥ १० ॥

जुहोति ॥ १० ॥

कृष्णाजिनाद्यासमिदाधानात्कृत्वाऽऽ-ब्रह्मन्निति जपति(२) ॥ ११ ॥

उत्सर्गकाल एके ॥ १२ ॥

"आब्रह्मन्" (३)इति जपमिच्छन्ति । ततश्च विकल्पः ॥ १२ ॥

दीक्षा द्वादशोपसदश्च ॥ १३ ॥

(४)किमर्थमिदमुच्यते ? अत्र हि पक्षे महाव्रतमुत्तमं भवति । अहीनानां च व्रतवतां सर्वजिद्दीक्षात्वमुक्तं, तन्मा भूदिति द्वादशदीक्षाग्रहणम् । श्रूयते चात्र–"द्वादश दीक्षा द्वादशोपसदस्तिस्रः सुत्याः" ( श० ब्रा० १३-४-४-१ ) इति ॥ १३ ॥

नित्योदकं देवयजनं पुरस्तात् ॥ १४ ॥

नित्यं सर्वदा स्थायि उदकं यत्र तद्देवयजनमध्यवसेयम् ॥ १४ ॥

आद्योऽग्निर्द्विगुणस्त्रिगुण एकविꣳशतिविधो वा ॥ १५ ॥

शाखान्तराद्विकल्पः(५) ॥ १५ ॥

एकादशिनीवदेकविꣳशतिर्यूपाः ॥ १६ ॥

'भवन्ति' इति शेषः । 'एकादशिनीवत्' इति किमर्थमुच्यते ? प्राप्तत्वादेव, "द्वे त्वेवैते एकादशिन्यावालभेत" ( श० ब्रा० १३-५-१-३ )

---

( १ ) सप्तम्यां दीक्षणीयायां षडाग्निकानि त्रीणि चाश्वमेधिकानि एवं नव हुत्वा दशममौद्ग्रभणं "विश्वो देवस्य०" (वा०सं० २८-२१) इति जुहोति ।

( २ ) कृष्णाजिनदीक्षात आरभ्योखायां त्रयोदशसमिदाधानान्तं कृत्वाऽध्वर्युरेव "आब्रह्मन्०" (वा० सं० २२-२२) इति जपति ।

( ३ ) उत्सर्गैरुपतिष्ठत इत्युत्सर्गोपस्थानकाले एके 'आब्रह्मन्०' इति जपमिच्छन्ति । यद्वा अश्वस्योत्सर्गकाले "विभूर्मात्रा०" (वा० सं० २२-१९ ) इति जपानन्तरम् इत्यर्थः ।

( ४ ) अश्वमेधस्याहीनत्वेन द्वादशाहप्रकृतिकतया चोदकेनैव द्वादशोपसत्त्वे सिद्धे इत्यादिः ।

( ५ ) आद्येऽग्नौ सार्धसप्तपुरुषाः क्षेत्रफलम् । तत्र द्विगुणपक्षे स पञ्चदशपुरुषो भवति । त्रिगुणपक्षे सार्धद्वाविंशतिपुरुषः ।

इति मा भूत्तद्व्यक्रियाव्यत्यासेन च मानार्थम् 'एकादशिनी'(१)इति ॥१६॥

**(२)रज्जुदालौ मध्ये ॥ १७ ॥**

भवति ॥ १७ ॥

**अभितः(३) पैतुदारवौ ॥ १८ ॥**

भवतः ॥ १८ ॥

**षट् षड् बैल्वखादिरपालाशाः ॥ १९ ॥**

यूपा भवन्ति ॥ १९ ॥

**त्रयस्त्रयोऽभितः ॥ २० ॥**

"त्रय इत्थात्" ( श० ब्रा० १३-४-४-५ ) इति वचनात् ॥ २० ॥

**प्रतियूपमग्नीषोमीयाः ॥ २१ ॥**

पशवो नियुज्यन्ते । ते च दक्षिणयूपादारभ्य वचनसामर्थ्यात् । अतश्च 'एकादशिनीवत्' उक्तेऽपि सर्वेषामद्यैवोच्छ्रयणम् ॥ २१ ॥

**प्रातरग्निष्टोमः ॥ २२ ॥**

भवति ॥ २२ ॥

**एकादशिन्यौ सवनीयाः (४)पशवो भवन्ति ॥ २३ ॥**

"द्वे त्वेवैते एकादशिन्यावालभेत" ( श० ब्रा० १३-५-१-३ ) इति श्रुतेः ॥ २३ ॥

तत्र च—

**(५)मध्यम आग्नेयौ ॥ २४ ॥**

'नियुज्येते' शेषा व्यत्यासेन ॥ २४ ॥

**(६)उत्तरयोश्च ॥ २५ ॥**

अह्नोरेकादशिन्यावालभेत ॥ २५ ॥

**(७)उत्तमे गावो बहुरूपाः ॥ २६ ॥**

---

( १ ) सर्वे च यूपा एकविंशत्यरत्नयो भवन्ति ।

( २ ) रज्जुदालः श्लेष्मातकः 'गूंदी' इतिलोके प्रसिद्धः ।

( ३ ) पैतुदारुः देवदारुः ।

( ४ ) 'पशवो भवन्ति' इति पाठः अत्र पुस्तकेऽधिकः ।

( ५ ) मध्यमे यूपे प्रथमौ पशू आग्नेयौ आलम्भनीयौ ।

( ६ ) उत्तरयोरपि द्वितीयतृतीययोरह्नोर्द्वे द्वे एकादशिन्यौ सवनीयाः पशवो भवन्ति ।

( ७ ) उत्तमेह्नि एकादशिन्योः पशवो बहुरूपा, विचित्रवर्णा गाव आलब्धव्याः ।

आलभ्यन्ते ॥ २६ ॥

**विजयमध्याद्धोतुः प्राची दिक् दक्षिणा ब्रह्मणोऽध्व-र्योः प्रतीच्युद्गातुरुदीची ॥ २७ ॥**

विजयमध्यात्प्राच्यान्दिशि यदुत्पन्नं द्रव्यं तद्धोतुर्दीयते(१)दक्षिणा ब्रह्मणः प्रतीच्यध्वर्योरुदीच्युद्गातुः ॥ २७ ॥

**तृतीयं तृतीयमन्वहं ददाति भूमिपुरुषब्राह्मणस्ववर्जम् ॥२८॥**

(२)आद्यर्त्विकप्रतिपुरुषाणां च तत एव चोदकानुरूपो विभागः। "अथातो दक्षिणानाम्" (श० ब्रा० १३-५-४-२४) इति प्रकृत्य सर्वमेवै-तदेवं श्रूयत इति। ब्राह्मणस्वं यद्दण्डादुत्पन्नं तन्न देयम्। तस्य हि ब्राह्मणेष्वेव विनियोगः स्मृतौ विहित इति ॥ २८ ॥

**तृतीयसवनउक्थ्यं गृहीत्वाऽऽग्निमारुत-काले त्रैधं विगृह्णाति ॥ २९ ॥**

**तच्चमसाननुहोमभक्षौ ॥ ३० ॥**

आग्निमारुतचमसाननु होमभक्षौ भवतः ॥ ३० ॥

**वसतीवरीर्गृहीत्वा गृहीत्वा प्रतिदिशः समासिच्य परिहरति(३) ॥ ३१ ॥**

प्रतिदिशं वसतीवरीर्गृहीत्वा गृहीत्वा समासिच्य परिहरति। स चायं मध्यमस्य धर्मो वचनात्। ततश्च सर्वमेधआश्वमेधिके मध्यमेऽ-हनि वर्तमाने प्रतिदिशं 'वसतीवरि'ग्रहणं प्रवर्तते ॥ ३१ ॥

**आज्यसक्तुधानालाजानामेकैकं जुहोति प्राणाय स्वाहे-ति(४) प्रतिमन्त्रः सर्वरात्रमावर्तम् ॥ ३२ ॥**

---

(१) दिग्विजयकाले प्राच्या दिशो यद्द्रव्यमानीतं तद्धोतुर्देयम्, एवमग्रेऽपि।

(२) होतृगणान्तःपातिनां त्रयाणां पुरुषाणामित्यर्थः।

(३) द्वितीयस्याह्नोऽर्थे प्रतिदिशं सर्वाभ्यो दिग्भ्यः सकाशात् वस-तीवरीर्गृहीत्वा आसादनान्तं पृथक्कृत्वा परिहरणकाले एकस्मिन्महति-पात्रे समासिच्य मिश्रीकृत्य परिहरति।

(४) आज्यादीनां प्रतिप्रहरमेकैकं क्रमेण सर्वरात्रमुत्तरवेदिस्थाग्नौ "प्राणाय स्वाहा०" (वा० सं० २२-२३) इत्यादि द्वादशकण्डिकात्मकै-रनुवाकैः जुहोति। किं कृत्वा? आवर्तम् 'प्राणाय स्वाहा' इत्यादिकम् 'एकशताय स्वाहा'इत्यन्तं मन्त्रगणमावर्त्यावर्त्य 'सर्वरात्रम्' इति द्वितो-

आज्यादीनामेकैकेन द्रव्येण होममभिनिर्वर्तयति "प्राणायस्वाहा" इत्येभिर्मन्त्रैः प्रतिमन्त्रम् आवर्त्यावर्त्य सर्वरात्रम्। अत्र च रात्रेः प्रतिद्रव्यं विभागः प्रहरमेकमाज्येन, द्वितीयं सक्तुभिः, तृतीयं धानाभिः, चतुर्थं लाजैः। इह च कर्मपरिमाणानवगमात्कालपरिमाणेन कर्मपरिमाणपरिच्छेदः। न ह्यत्र कर्मपरिमाणं श्रूयते। यथा शतरुद्रिये सन्ततहोमेऽपि सति "षष्टिश्च ह वै त्रीणि च शतान्येतच्छतरुद्रियमथ त्रिᳫंशदथ पञ्चत्रिᳫंशत्" (श० ब्रा० ९–१–१–४३) इति। नैवमिह वचनं भवति। तेन यावन्तो होमाः प्रहरेण निवर्त्यन्ते, तावन्ति प्रतिद्रव्यं चतुर्मुष्टिकानि ग्राह्याणि। दर्विहोमानां पौर्णमासधर्मत्वेन आज्यस्य तूपांशुयाजविध्यन्तत्वेन परिमाणमेव।

केचित्त्वाज्यस्य पूर्णाहुतिकं विध्यन्तमिच्छन्ति। तदनुपपन्नम्, सक्त्वादिमध्ये आम्नानात्तस्य होमस्य। ततश्च दर्विहोमोऽयमुपांशुयाजविध्यन्तग्राहक इति। अतश्च स्रौवाच्चतुरवत्तेन होमः। इह च 'एकस्मै स्वाहा' 'द्वाभ्याᳫं स्वाहा' इत्येवमादौ 'त्रिभ्यः स्वाहा' 'चतुर्भ्यः स्वाहा' पञ्चभ्यः स्वाहा' इत्येवमादिः लुप्तः स्वाध्यायो द्रष्टव्यः। एवं ह्यत्र श्रूयते—"अनुपूर्वं जुहोति" इति, "एकोत्तरा जुहोति" इति तथा "नैकशतमत्येति" (श० ब्रा० १३–२–१–५, ६) इति ॥ ३२ ॥

व्युष्ट्या इति (१)व्युष्टायाम् ॥ ३३ ॥

रजन्यां जुहोति। तच्च—लाजैरेवेतिसम्प्रदायः ॥ ३३ ॥

(२)स्वर्गायेत्युदिते ॥ ३४ ॥

जुहोति। पूर्णाहुतिवत्संस्कारपूर्वकमाज्येन। युक्तरूपता पुनरुभयाग्रहणात् होमक्रियाया रात्रेः कात्स्न्र्येन संयोगः कार्यः। ततः प्रथमयामे घृतेन यागः, द्वितीये सक्तुभिः, तृतीये धानाभिः, चतुर्थे लाजैः। "एकस्मै०" (वा० सं० २२–३४) इति द्वादशेऽनुवाके "एकस्मै स्वाहा" "द्वाभ्याᳫं स्वाहा" इत्यत्र त्रिभ्यः स्वाहा, चतुर्भ्यः स्वाहा, पञ्चभ्यः स्वाहा, षड्भ्यः स्वाहा, सप्तभ्यः स्वाहा, अष्टभ्यः स्वाहा, नवभ्यः स्वाहा इत्येवमादयो मन्त्रा अपठिता अपि एकैकोच्चयेन शतपर्यन्ताः प्रयोज्या "एकोत्तरा जुहोति" (श० ब्रा० १३–२–१–५) इति श्रुतेः।

(१) व्युष्टायां समाप्तायां रात्रौ "व्युष्ट्यै स्वाहा" (वा० सं० २२–३४) इति घृताहुतिमेकांजुहोति।

(२) उदिते सूर्ये "स्वर्गाय स्वाहा" (वा० सं० २२–३४) इति च जुहोति।

योराज्येन(१)। अत्र च कर्मविरचना अनस्तमिते आदित्ये आज्यभागान्तं कर्तव्यम्, तत आज्यादिभिर्होमः। विरोधाच्चापररात्रिकं कर्म, प्रतिप्रस्थाता करोति। अध्वर्युर्हि अन्नहोमेषु व्यावृत्त इति।

ननु वैपरीत्यं कस्मान्न भवति। न, अध्वर्युकर्तृकताया अपररात्रिकेऽन्यत्र चरितार्थत्वात्। अन्नहोमेषु त्वचरितार्थतेति। तस्मादध्वर्युरेवान्नहोमेषु। तथा च लिङ्गम् "अध्वर्युरन्नहोमाञ्जुहोति" ( श० ब्रा० १३-५-१-४ ) इति। विधिरेवायमित्यपरे ॥ ३४ ॥

इति विंशोऽध्याये चतुर्थी कण्डिका।

---

प्रातरुक्थ्यः ॥ १ ॥

'भवति' इति सूत्रशेषः ॥ १ ॥

महिमानौ गृह्णाति सौवर्णेन पूर्वं हिरण्यगर्भ(२) इति, द्वितीयं राजतेन यः प्राणत(३) इति ॥ २ ॥

"महिमानौ" ( श० ब्रा० १३-२-११-१ ) इति ग्रहयोर्नाम। महिमानौ ग्रहौ गृह्णातीति सामानाधिकरण्यात् ॥ २ ॥

बहिष्पवमानाय सर्पणमश्वमालभ्य(४) ॥ ३ ॥

बहिष्पवमानं च वाचनिकमत्र अहर्गणे सदसि विहितत्वात् ॥ ३ ॥

वडबा दर्शयत्यभिरसति तत्स्तोत्रम् ॥ ४ ॥

अश्वस्य वडबा दर्शयति। दर्शनेन यद्धिङ्करोति तदेव स्तोत्रम् ॥४॥

स्तुवीरन्वा ॥ ५ ॥

उद्गातार इति विकल्पः। शास्त्रस्य तुल्यत्वात् ॥ ५ ॥

शतमानं ददाति ॥ ६ ॥

स्तोत्रदक्षिणा इति उद्गातृभ्यः ॥ ६ ॥

अश्वेनाक्रमयन्त्यास्तावम् ॥ ७ ॥

(५)आस्तावप्रदेशमश्वेनाक्रमयन्ति ॥ ७ ॥

---

( १ ) 'व्युष्ट्यै स्वाहा' इत्याहुतिरपि आज्येनैव होतव्येति महीधरोऽपि।
( २ ) हिरण्यगर्भः० ( वा० सं० २३-१ )।
( ३ ) यः प्राणतो० ( वा० सं० २३-३ )।
( ४ ) अश्वालम्भश्च पुच्छे।
( ५ ) बहिष्पवमानस्तवनप्रदेशम्।

ऐकादशिनानुपाकृत्याश्वादींश्च ॥ ८ ॥

'उपाकरोति' इति शेषः ॥ ८ ॥

होतरश्वमभिष्टुहीति प्रेष्यति ॥ ९ ॥

प्रैषार्थश्च "तमेकादशभिर्होताऽभिष्टौति यदक्रन्दः प्रथमं जायमान" ( श० ब्रा० १३-५-१-१६, १७ ) इति ॥ ९ ॥

युनक्त्येनं युञ्जन्ति ब्रध्नमिति ॥ १० ॥

एनमश्वं रथे "युञ्जन्ति ब्रध्नम्" (१)इत्यनेन मन्त्रेण ॥ १० ॥

इतरांश्च युञ्जन्त्यस्ये(२)ति ॥ ११ ॥

त्रीनश्वान्युनक्ति ॥ ११ ॥

अश्वाः सौवर्णालङ्काराः ॥ १२ ॥

भवन्ति ॥ १२ ॥

रथश्च ॥ १३ ॥

सौवर्णालङ्कारः ॥ १३ ॥

अपो यात्वाऽवगाढेषु वाचयति यद्वात इति ॥ १४ ॥

अपः प्रति यात्वाऽवतीर्णेष्वश्वेषु "यद्वात"(३) इत्यमुं मन्त्रं वाचयति ॥ १४ ॥

आयाय विमुक्तमश्वं महिषीवावाता परिवृक्ता-ऽऽज्येनाभ्यञ्जन्ति पूर्वकायमध्यापरकायान् यथा-देशं वसवस्त्वेति प्रतिमन्त्रम् ॥ १५ ॥

एत्य विमुक्तमश्वं महिष्याद्याः पत्न्योऽभ्यञ्जन्ति पूर्वकायमध्यापरकायान् यथादेशं इति । महिषी पूर्वकायं, मध्यं वावाता, अपरकायं परिवृक्ता । "वसवस्त्वा"(४) इत्येभिर्मन्त्रैः प्रतिमन्त्रम् ॥ १५ ॥

---

( १ ) युञ्जन्ति ब्रध्नम्० ( वा० सं० २३-५ )

( २ ) युञ्जन्त्यस्य० ( वा० सं० २३-६ )

( ३ ) ततः चतुर्भिरश्वैर्युक्ते रथे अध्वर्युयजमानौ उपविश्याश्वान्प्रधावयतः तडागादिकं प्रति । ततः जलमध्ये प्रविष्टेष्वश्वेषु "यद्वातो०" ( वा० सं० २३-७) इत्यमुं मन्त्रं यजमानं वाचयति इति ।

( ४ ) आयाय जलप्रदेशाद्देवयजनमागत्य रथाद्विमुक्तमश्वं महिष्याद्यास्तिस्रः पत्न्यो यथाक्रममश्वस्य पूर्वादिकायानभ्यञ्जन्ति घृतेन । महिषी पूर्वकायं "वसवस्त्वा०" इति, वावाता देहमध्यं "रुद्रास्त्वा०" इति, परिवृक्ता पश्चाद्भागम् "आदित्यास्त्वा०" (वा० सं २३-८) इति मन्त्रेण ।

**अभ्र्ꣳशमानान्मणीन्सौवर्णानेकशतमेकशतं (१)केसरपुच्छेष्वावयन्ति भूर्भुवःस्वरिति प्रतिमहाव्याहृति ॥ १६ ॥**

अभ्र्ꣳशमानान् इति यथा न पतन्ति सौवर्णान्मणीन्केसरयोः पुच्छे च प्रवयन्ति । (२)"भूः" इति महिषी, "भुवः"इति वावाता, "स्वः" इति परिवृक्ता ॥ १६ ॥

**अनुचर्यश्च तूष्णीमेकेषाम् ॥ १७ ॥**

आवयन्ति । एकेषां त्विति विकल्पः ॥ १७ ॥

**अश्वाय रात्रिहुतशेषं प्रयच्छति लाजी३ञ्छाची३निति॥१८॥**

(३)अनेन मन्त्रेण ॥ १८ ॥

**अप्स्ववहरणमखादति ॥ १९ ॥**

अखादत्यश्वे अप्स्ववहरणम् । सा चेयं प्रतिपत्तिः ॥ १९ ॥

**ब्रह्मा पृच्छति होतारं (४)यूपमभितः कः स्विदेकाकी(५)ति ॥ २० ॥**

"यूपमभितो वदतः" ( श० ब्रा० १३–२–६–९ ) इति वचनात् ॥२०॥

**(६)सूर्य इत्याचष्टे ॥ २१ ॥**

होता ॥ २१ ॥

**होता ब्रह्माणं का स्विदासीदि(७)ति ॥ २२ ॥**

'पृच्छति' इत्यनुवर्तते ॥ २२ ॥

---

( १ ) अत्र केसरयोः पुच्छे चेति भाष्ये बहुत्वगीः ।
सूत्रस्था व्याकृता सैवं वा सुदेवैर्विवेचिता ॥
तद्यथा—शिरोग्रीवापुच्छबालेष्विति ।

( २ ) 'भूः' इति एकशतं मणीन् सुवर्णमयान् अश्वशिरोरोमसु महिषी प्रवयति, वावाता ग्रीवारोमसु 'भुवः' इति, परिवृक्ता पुच्छरोमसु 'स्वः' इति ।

( ३ ) लाजी३ञ्छाची३न्० ( वा० सं० २३–८ )

( ४ ) परिधौ च खलेवाल्यां यूपसंस्कारवादिभिः ।
अश्वेऽपि यूपसंस्कारा वाच्या अस्त्विति चेच्छिवम् ॥ इति ।

( ५ ) कः स्विदेकाकी० ( वा० सं० २३–९ )

( ६ ) सूर्यऽएकाकी० (वा० सं २३–१०)

( ७ ) का स्विदासीत्० ( वा० सं० २३–११ )

**द्यौरिति (१)प्रत्याह ॥ २३ ॥**

ब्रह्मा ॥ २३ ॥

इति विंशोऽध्याये पञ्चमी कण्डिका ॥

पशूपाकरणान्तेचाश्वमेधिकमभिहितमश्वाभिष्टवादि । इदानीं प्राकृतानुवृत्त्यर्थमाह—

**अग्निमन्थनादि करोति ॥ १ ॥**

**अग्निष्ठेऽश्वतूपरगोमृगान्नियुनक्ति ॥ २ ॥**

यूपे ॥ २ ॥

**यथोक्तमश्वादौ देवताः ॥ ३ ॥**

यथाऽश्वस्तूपरोऽध्याये (२)उक्तास्तथैव प्रतिपत्तव्याः । ब्राह्मणमेवेदमिति ॥ ३ ॥

**(३)पर्यङ्ग्यानश्वे ॥ ४ ॥**

'नियुनक्ति' इति वर्तते ॥ ४ ॥

**पञ्चदश पञ्चदश(४)रोहितादीन्त्सौर्यान्तानितरेषु ॥ ५ ॥**

इतरेषु यूपेषु पञ्चदश रोहितादीन् सौर्यान्तान्नियुनक्ति । यूपोच्छ्रयणक्रमेण प्रवृत्तेः ॥ ५ ॥

---

(१) द्यौरासीत्० ( वा० सं० २३–१२ )

(२) अश्वस्तूपरः० ( वा० सं० २४–१ ) इत्यादि सम्पूर्णोध्यायः ।

(३) "कृष्णग्रीव ऽआग्नेयो रराटे०" इत्यादयः "वैष्णवो वामनः" (वा० सं० २४–१) इत्यन्ताः पर्यङ्ग्यसंज्ञकाः, तानश्वे यूपस्थानीये नियुनक्ति । अत्र अश्वस्य शरीरं तरणार्थं तुम्बीफलमिव सर्वतो रज्ज्वा गुम्फनीयम् । तथासति उक्तस्थाने पर्यङ्ग्यालम्भस्तत्तत्स्थाने गुम्फितरज्ज्वां सुकरः स्यादिति देवयाज्ञिकाचार्यः ।

(४) "रोहितो धूम्ररोहितः०"(वा० सं० २४–२) इत्यादीन् पञ्चदश पञ्चदश पशून् सौर्यान्तान् "श्वेताः सौर्य्याः"(वा०सं० २४–१९) इत्यन्तान् इतरेषु यूपेषु उच्छ्रयणक्रमेण नियुनक्ति । अत्र देवयाज्ञिकस्तु विशेषमाह—

येषां पशुवाचकानां पदानामर्था न ज्ञायन्ते ते निगमनिरुक्तव्याकरणोणादिवृत्त्यभिधानग्रन्थेभ्यो विलोक्यावगन्तव्याः । अत्र २२ ऐकादशिनाः, ३२७ अश्वादयः सौर्यान्ताः, २६० कपिञ्जलादयः, एवं ६०९ पशवः । श्लोकश्च—

षट्शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि ।
अश्वमेधस्य यज्ञस्य नवभिरधिकानि हि ॥ इति ।

**(१)कापिञ्जलादीन्पृषतान्तांस्त्रयोदश त्रयोदश यूपान्तरेषु ॥ ६ ॥**

"त्रयोदश त्रयोदशारण्यानाकाशेष्वालभते" (श० ब्रा० १३-५-१-१५) इति वचनात् । तांश्चाकाशोत्पत्तिक्रमेण । अपरे तु दक्षिणत आरभ्येच्छन्ति ॥ ६ ॥

**अद्भवप्रोक्षणमद्भ्यस्त्वा वायुष्ट्वेति(२) ॥ ७ ॥**

"आध्वरिकं यजुरनुद्रुत्याश्वमेधिकं यजुः प्रतिपद्यत" ( श० ब्रा० १३-२-७-१ )इति समुच्चयश्रवणात् ॥ ७ ॥

**उपगृह्णात्यपाम्पेरुरग्निः पशुरिति ॥ ८ ॥**

(३)मन्त्रद्वयेनाश्वस्य मुखे ॥ ८ ॥

**कपिञ्जलादीनुत्सृजन्ति पर्यग्निकृतान् ॥ ९ ॥**

देवतामुद्दिश्योद्दिश्य नियोगक्रमेणोत्सर्गः ॥ ९ ॥

**हिरण्यवासोधीवासेष्वश्वसंज्ञपनम् ॥ १० ॥**

"वासोऽधिवासꣳ हिरण्यमित्यश्वायोपस्तृणन्ति" ( श० ब्रा० १३-२-८-१ ) इति वचनात् । तृणमपि प्रवर्तत एव, (४)अदृष्टार्थत्वात् ॥१०॥

**(५)परिपशव्ये हुत्वा प्राणाय स्वाहेति तिस्रोऽपराः॥११॥**

---

( १ ) "वसन्ताय कपिञ्जलान्" (वा० सं० २४-२०) इत्यादीन्"विश्वेषान्देवानाम्पृषतः" ( वा० सं० २४-४० ) इत्यन्तान् त्रयोदश-त्रयोदशसंख्यान् यूपान्तरेषु यूपानामन्तरालेषु आकाशोत्पत्तिक्रमेण आलभते । एकविंशतियूपानां मध्ये विंशतिरन्तरालानि सन्ति तेषु एकैकस्मिन्नन्तराले त्रयोदशत्रयोदश नियुनक्ति । इति देवयाज्ञिकाचार्यः ।

( २ ) अद्भ्यस्त्वौषधीभ्यः० ( वा० सं० ६-९ ) इति प्राकृतेन मन्त्रेण, "वायुष्ट्वा०" ( वा० सं० २३-१३, १४, १५, १६ ) इत्यारभ्य "तत्र त्वा देवः सविता दधातु" इत्यन्तेन कण्डिकाचतुष्टयात्मकेन वैकृतेन आश्वमेधिकेन मन्त्रेण च अश्वप्रोक्षणं करोति ।

( ३ ) अपां पेरुः० ( वा० सं० ६-१० ) इति प्राकृतेन मन्त्रेण "अग्निः पशुः"० ( वा० सं० २३-१७ ) इति वैकृतेन च प्रोक्षणीः अश्वमुखे उपगृह्णाति ।

( ४ ) पूर्वं तृणं, तदुपरि वासः, तदुपरि अधिवासः, तदुपरि हिरण्यम्, तदुपरि अश्वस्य संज्ञपनमित्यर्थः ।

( ५ )-परिपशव्ये—स्वाहा देवेभ्यः, देवेभ्यः स्वाहा इति द्वे आहुती हुत्वा,

आहुतीर्जुहोति ॥११॥

**वाचयति (१)पत्नीर्नयन्नमस्तेऽम्ब इति ॥ १२ ॥**

मन्त्रसमुच्चयः ॥ १२ ॥

**(२)अश्वं त्रिस्त्रिः परियन्ति पितृवन्मध्ये गणानां प्रियाणां निधीनामिति ॥ १३ ॥**

"गणानान्त्वा" इति त्रिः प्रदाक्षिणम्। "प्रियाणाम्" इति त्रिरप्रदक्षिणम्। "निधीनान्त्वा" इति च प्रदक्षिणम्। "वसो मम" इति च सर्वत्रानुषङ्गः, तुल्ययोगात् ॥ १३ ॥

**प्रक्षालितेषु महिष्यश्वमुपसंविशत्याहमजानीति ॥ १४ ॥**

प्रक्षालितेषु पशुषु महिषी अश्वमुपसंविशति "आहमजानि" (३)इत्यनेन मन्त्रेण। "निष्ठितेषु पान्नेजनेषु महिषीमश्वायोपनिपादयन्ति" श० ब्रा० १३-५-२-२) इति वचनात् ॥ १४ ॥

**अधीवासेन प्रच्छादयति स्वर्गे लोकऽइति ॥ १५ ॥**

अश्वमहिष्योरुपरि वासो ददाति "स्वर्गे लोके" (४)इत्यनेन मन्त्रेण ॥ १५ ॥

**अश्वशिश्नमुपस्थे कुरुते वृषा वाजीति(५) ॥ १६ ॥**

---

'प्राणाय स्वाहा०' ( वा० सं० २३-१८ ) इत्याद्यास्तिस्र आहुतीर्जुहोति। एकामश्वसंज्ञपनस्य आदौ चतस्रोऽन्ते इति महीधरः।

( १ ) सर्वाः पत्नीः पशुशोधनाय पान्नेजनीहस्ताः पशून् प्रतिनयन् "नमस्तऽ आता ना०" ( वा० सं० ६-१२ ) इति प्राकृतमन्त्रम्, "अम्बे ऽअम्बिके" ( वा० सं० २३-१८ ) इति आश्वमेधिकं च वाचयतीति।

( २ ) सर्वाः पत्न्यः पान्नेजनहस्ता एव प्राणशोधनात्प्राक् अश्वं त्रिस्त्रिः परियन्ति; मध्ये पितृवत् अप्रदक्षिणं परियन्ति त्रिभिर्मन्त्रैः। "वसो मम" इति त्रिष्वपि अनुषङ्गः। ततश्चैवं प्रथमं "गणानाम्" ( वा० सं० २३-१९ ) इति त्रिः प्रदक्षिणं परियन्ति। तत्र सकृन्मन्त्रेण द्विस्तूष्णीम्। ततः "प्रियाणाम्" इत्यप्रदक्षिणं त्रिः, 'निधीनाम्' इति प्रदक्षिणं त्रिः, एवं नवकृत्व इति।

( ३ ) शोधितेषु पशूनां प्राणेषु "आहमजानि०" (वा०सं० २३-१९ ) इति पत्नी अश्वसमीपे शेते।

( ४ ) स्वर्गे लोके ( वा० सं० २३-२० )

( ५ ) वृषा वाजी० ( वा० सं० २३-२० )

"निरायत्याश्वस्य शिश्नं महिष्युपस्थे निधत्ते" ( श० ब्रा० १३-५-२-२ ) इति वचनात्। 'महिष्युपस्थ' इति वचने न समासोऽयम्। कुत एतत्? षष्ठ्यश्रवणात्।

ननु समासलक्षणेन लुप्ता षष्ठी। नैतदेवम्-अश्रुतां षष्ठीं कल्पयित्वा लोपो व्यावर्णयितव्यः। महिष्या एव पुनः कर्तृत्वे एष दोषो न भवति ॥ १६ ॥

**(१)उत्सक्थ्या इत्यश्वं यजमानोऽभिमन्त्रयते ॥ १७ ॥**

अध्वर्युर्मा भूदिति 'यजमान'ग्रहणम् ॥ १७ ॥

**अध्वर्युब्रह्मोद्गातृहोतृक्षत्तारः कुमारीपत्नीभिः संवदन्ते यकासकाविति दशर्चस्य द्वाभ्यां द्वाभ्यां हये हयेऽसावित्यामन्त्र्यामन्त्र्य ॥ १८ ॥**

अध्वर्य्वादयः कुमारीपत्नीभिर्यथासंख्येन सम्वदन्ते "यकासकौ" (२)इति दशर्चस्य 'द्वाभ्यां द्वाभ्यामृग्भ्यां हये हयेऽसौ' इति पूर्वतरमामन्त्र्यामन्त्र्य ॥ १८ ॥

**सानुचर्यः प्रत्याहुः ॥ १९ ॥**

**अनुचर्य एकेषाम् ॥ २० ॥**

अतश्च विकल्पः ॥ २० ॥

**महिषीमुत्थाप्य पुरुषा दधिक्राव्ण[३] इत्याहुः ॥ २१ ॥**

उत्थापनं च पत्न्या अनुचरीकर्तृकम्। "उत्थापयन्ति महिषीं ततस्ता यथेतं प्रतिपरायन्ति" (श० ब्रा० १३-५-२-९) इति श्रुतेः। "अथेतरे सुरभिमतीमृचमन्ततोऽन्वाहुः"( श० ब्रा० १३-५-२-९ ) इति ॥ २१ ॥

इति विंशेऽध्याये षष्ठी कण्डिका।

**तिस्रः पत्न्यो ऽसिपथान्कल्पयन्त्यश्वस्य सूचीभिर्लौहराजतसौवर्णीभिर्मणिसंख्याभिर्गायत्रीत्रिष्टुबिति द्वाभ्यां द्वाभ्याम् ॥ १ ॥**

---

( १ ) उत्सक्थ्याऽ अवगुदम्० ( वा० सं० २३-२१ )

( २ ) यकासकौ० ( वा० सं० २३-२२, २३, २४, २५, २६, २७, २८, २९, ३०, ३१ )

( ३ ) दधिक्राव्णः० ( वा० सं २३-३२ )

महिष्याद्यास्तिस्रः पत्न्यो ऽसिमार्गान्कल्पयन्ति । अश्वस्य सूचीभिर्मणिसंख्याभिरेकशतेनैकशतेन । ताश्च लौहराजतसौवर्ण्यो भवन्ति । "गायत्रीत्रिष्टुप्" (१)इति द्वाभ्यां द्वाभ्यामृग्भ्याम् ॥ १ ॥

रजतसुवर्णसीसाभिर्वा मन्त्राम्नानात् ॥ २ ॥

'वा' शब्दः पक्षव्यावृत्तौ । न लौहरजतसौवर्ण्यो भवन्ति राजतसुवर्णसीसाख्या भवन्ति । कुत एतत् ? मन्त्राम्नानात् । मन्त्रे हि रजता हरिणीः सीसा (२)इति च दृश्यते । तेन लोहशब्दस्य ताम्रमात्रविषयत्वात् मन्त्रवर्णेन व्यवस्थापनं युक्तमिति सीसादिमय्यो भवन्ति ॥२॥

(३)सौवर्णासिरश्वः ॥ ३ ॥

भवति ॥ ३ ॥

(४)लौहाः पर्यङ्ग्याणाम् ॥ ४ ॥

असयो भवन्ति ॥ ४ ॥

आयसा इतरेषाम् ॥ ५ ॥

इतरेषां पशूनामायसा (५)असयो भवन्ति ॥ ५ ॥

अश्वं विशास्त्यनुवाकेन कस्त्वा च्छ्यतीति(६) ॥ ६ ॥

विशसनमवदानकालीनम् । विशसनशब्दस्य तत्र दृष्टार्थत्वात् । "विशास्ति पशुमन्यः" ( का० श्रौ० ६-७-१ ) इति । वपाकालीनं वा

( १ ) गायत्री त्रिष्टुप्० ( वा० सं० २३-३३, ३४, ३५, ३६, ३७, ३८ ) इति षडृचे द्वाभ्यां द्वाभ्यामृग्भ्यां महिष्याद्यास्तिस्रः पत्न्यः ताम्ररजतसुवर्णमयीभिः प्रत्येकमेकाधिकशतसंख्याभिः सूचीभिः अश्वाङ्गे असिपथान् कल्पयन्ति । शास्त्रस्य सुखप्रवेशाय सूचीभिः वितुद्य वितुद्य अश्वस्य त्वचं जर्जरीकुर्वन्ति ।

( २ ) रजता हरिणीः सीसा० ( वा० सं० २३-३७ )

( ३ ) सुवर्णपरिष्कृतासिरित्यर्थः । न हि केवलसुवर्णमयस्य छेदने सामर्थ्यं भवति, मृदुत्वात् इति देवयाज्ञिकः ।

( ४ ) लौहास्ताम्रपरिष्कृताः । तथैव विशसनसामर्थ्यात् । यदि तु ताम्रहिरण्यगर्भधारा एव स्युः ततो विशसनमेव तैः कर्तुं न शक्यते इति देवयाज्ञिकः ।

( ५ ) अयोविकाराः न तु तत्परिष्कृताः ।

( ६ ) कस्त्वा ऽऽच्छ्यति० ( वा०सं० २३-३९,४०,४१,४२,४३,४४ ) इति षडृचेन अनुवाकेन अध्वर्युः अश्वोदरं पाटयति मेदस उद्धरणाय ।

तत्रापि हि विशसनशब्दो भवति। शसिर्हिंसार्थः। तत्रापि हि हिंसा विद्यत इति। प्राथम्याच्च वपाकालीनमेव ॥ ६ ॥

मेदोऽस्योद्धरन्ति वपार्थे ॥ ७ ॥

अस्याऽश्वस्य वपाकार्ये मेदो गृह्यते। कार्यापत्त्या चात्र धर्मप्रवृत्तिः ॥ ७ ॥

लोहितं चास्य श्रपयन्ति ॥ ८ ॥

'अस्य' इत्यश्वस्य ॥ ८ ॥

प्राजापत्यवपानामुत्तरतः श्रपणꣳ होमो हविषश्च ॥ ९ ॥

आहवनीयस्योत्तरतः श्रपणꣳ होमश्च। तथा हविषः ॥ ९ ॥

प्राग्वपाहोमाद्धोताध्वर्यू च सदसि संवदेते चतसृभिः कः स्विदेकाकीति पूर्ववत् ॥ १० ॥

वपाहोमात्पूर्वं स्वाहाकृत्युत्तरकालं होताऽध्वर्युश्च सदसि सम्वदेते "कः स्विदेकाकी" (१)इति चतसृभिर्ऋग्भिः। 'पूर्ववत्' इति उक्तिप्रत्युक्त्या। "शृतासु वपासु स्वाहाकृतिभिश्चरित्वा प्रत्यञ्चः प्रतिपरेत्य सदसि ब्रह्मोद्यं वदन्ति पूर्वया द्वारा प्रपद्य यथा धिष्ण्यं व्युपविशन्ति" "स होताऽध्वर्युं पृच्छति" ( श० ब्रा० १३–५–२–११, १२ ) इति श्रुतेः। यदत्र सूत्रे नाभिहितं तच्चशब्देन लभ्यते 'प्रत्यञ्चः प्रतिपरेत्य' एवमादि ॥ १० ॥

ब्रह्मोद्गातारौ च पृच्छामि त्वेति ॥ ११ ॥

'च' शब्दा(२)च्चतसृभिर्ऋग्भिरुक्तिप्रत्युक्त्या ॥ ११ ॥

पुनः पूर्वापरेणोत्तरवेदिं का स्विदासीदिति(३)॥ १२ ॥

सम्वदेते। 'पूर्वौ' इति होताध्वर्यू ॥ १२ ॥

उत्तरौ च कत्यस्येति ॥ १३ ॥

'च' शब्दात्संवदेते चतसृभिरेव(४) ॥ १३ ॥

---

( १ ) कः स्विदेकाकी० ( वा० सं० २३–४५, ४६, ४७, ४८ )

( २ ) पृच्छामित्वा० ( वा० सं० २३–४९, ५०, ५१, ५२ )

( ३ ) ततः सदसो निष्क्रम्य हविर्धानस्य पुरतः उत्तरवेदेः पश्चादुपविश्य पूर्वोक्तौ होताध्वर्यू "का स्विदासीत्०" ( वा० सं० २३–५३, ५४, ५५, ५६ ) इत्यादिचतसृभिः ऋग्भिः सम्वदेते इत्यर्थः।

( ४ ) कत्यस्य० ( वा० सं० २३–५७, ५८, ५९, ६० )

यजमानोऽध्वर्युं (१)पृच्छामि त्वेति ॥ १४ ॥

(२)इयं वेदिरित्यध्वर्युः ॥ १५ ॥

प्रत्याह ॥ १५ ॥

सर्वहुतेन महिम्ना चरति (३)यस्ते ऽहन्निति जुहोति ॥१६॥

'महिम्ना' इति ग्रहस्य संज्ञा ॥ १६ ॥

अत्र वा ग्रहणम् ॥ १७ ॥

"उदिते ब्रह्मोद्य" इति प्रकृत्य "अध्वर्युर्हिरण्मयेन पात्रेण प्राजापत्यं महिमानं ग्रहं गृह्णाति" ( श० ब्रा० १३-५-२-२३ ) इति श्रुतेः। ततश्चात्रैव ग्रहणम्। पूर्वं सामान्यश्रुतेरध्यवसितम् ॥ १७ ॥

(४) वपाभिश्चरति ॥ १८ ॥

वपाप्रचारं करोतीत्यर्थः ॥ १८ ॥

अत्र कुलवतूपररोहितादिभिर्गुणशब्दैश्चोदितानां पशूनां द्रव्यं प्रति सन्देहः किं जातीयाः पशव इति। जातिशब्देन चोपलक्षणं प्रकृतौ कृतमिहापि तद्वदेव कर्तव्यमिति। अत इदमुच्यते-अन्वयाच्छागा एत इति। ततश्च तच्छब्देनोपलक्षणमित्येवं प्राप्त आह—

छागोस्रमेषाः पश्वभिधानाद्यथालिङ्गम् ॥ १९ ॥

'छागोस्रमेषा' एते पशवो यथालिङ्गम्। येन येन लिङ्गेन यो यः पशुर्लिङ्ग्यते अवगम्यते स स प्रत्येतव्यो न सर्वे छागा इति। तेन रोहितलिङ्गेन गौर्ग्रहीतव्यः। तूपरत्वेन छागः, कुलवलिङ्गेन मेषः। कुत एतत्? पश्वभिधानात्। एते हि विशिष्टजातिव्यवच्छिन्नद्रव्यगतगुणाभिधायकाः, न द्रव्यमात्रगतगुणाभिधायका इति। ततश्चोस्रादिशब्दैरुपलक्षणं कर्तव्यमिति।

---

( १ ) पृच्छामि त्वा० ( वा० सं० २३-६१ )

( २ ) इयं वेदिः० ( वा० सं० २३-६२ )

( ३ ) यस्तेहन्त्संवत्सरे महिमा० ( वा० सं० २३-२ )

( ४ ) एवं प्रयाजशेषेणाभिघारणान्ते वैकृतं कर्म विधाय अधुना प्राकृतप्रवृत्त्यर्थमाह-महिमग्रहहोमानन्तरमध्वर्युः वपाभिश्चरति। प्रथममेकादशिनीपशूनां वपाभिः, ततः अश्वतूपरगोमृगाणां वपाभिः तन्त्रेण। ततः क्रमेण पृथक्-पृथक् 'कृष्णग्रीव ऽआग्नेयोररराटे' इत्यादीनां 'श्वेताः सौर्या' इत्यन्तानां वपाभिश्चरति। अयमेको वपाचार पक्षः। अन्यानग्रे वक्ष्यति इति देवयाज्ञिकः।

यदि रोहितादयः शब्दाः पश्वभिधायकाः ततस्तैरेवोपलक्षणं युक्तं नोक्षादिभिरिति। एवं च विधिशब्दस्य 'मन्त्रत्वे भावः' इति न्यायानुग्रहो भवति। कोऽसौ न्याय इति चेत्? मन्त्रस्य ह्यभिहितार्थप्रकाशकत्वमुदितम्। अभिधानञ्च रोहितादिभिरिति। एवं प्राप्त उच्यते। न, एतद्युक्तम् ॥ १९ ॥

कस्मात्?

## गुणवचनाच्चोदनाशब्दस्य ॥ २० ॥

यस्माद् गुणवचनाश्चोदनाशब्दाः। न च प्रकृतौ गुणशब्देनोपलक्षणं कृतम्।

नन्विदानीमेवोक्तं यथालिङ्गं पश्वभिधायका रोहितादयः शब्दाः, इदानीं गुणवचना इति विरुद्धमुच्यते। नै तद्विरुद्धं, रोहितादिशब्दा हि स्वार्थमभिधाय तद्वति द्रव्यविशेषे वर्त्तन्ते न शुक्लशब्दादिवद् द्रव्यमात्रे। कुत एतत्? गोद्रव्य एव प्रयोगात् प्रत्ययाच्च। तेन गुणवचनत्वेऽपि सति द्रव्याभिधायकत्वमविरुद्धम्। यथा कलभकिसोरबर्करादयः शब्दा वयोविशेषवचना अपि सन्तो विशिष्टजातिव्यवच्छिन्नद्रव्यगतं वयोऽभिदधाति, एवञ्च सति छागोस्रमेषशब्दैरेवोपलक्षणं युक्तमिति।

ननु च रोहितादिशब्दानां जात्यभिधायकत्वे गोऽव्यजशब्दैरप्युपलक्षणं प्राप्नोति। तेऽपि हि तज्जात्युपलक्षणसामर्थ्ययुक्ता इति। ततः किम्? छागोस्रमेषशब्दानामुपलक्षणसामर्थ्यमुपनीयते। एतैरेवोपलक्षणमिति न नियोगतः प्राप्नोति ॥ २० ॥

अत्रोच्यते—

## प्रकृतौ चावचनात् ॥ २१ ॥

प्रकृतौ 'अग्निषोमीयं पशुमालभेत' इति चोदनायां छागशब्देनोपलक्षणं दृष्टम्। तथा 'गौरनूबन्ध्यः' इति चोदनायामुस्रशब्देन शाखान्तरे। तथा काठके सौत्रामण्यामृषभेण सह विकल्परूपता पठ्यते मेषस्य, तत्र च मेषशब्देनोपलक्षणं दृष्टम्। तेनेह चिन्त्यते—तज्जातीयद्रव्याणि किं तैरेव शब्दैरुपलक्षणं क्रियताम्, उत शब्दान्तरैरिति। तैरेवेति युक्तरूपतरम्। ते ह्यन्यत्र द्रव्याणामुपलक्षणं कुर्वाणा दृष्टाः, इहापि च तज्जातीयान्येव द्रव्याणीति। तस्मात्तैरेवोपलक्षणमिति। अत आचार्येण साधूक्तं 'छागोस्रमेषाः पश्वभिधानात्' इति। अपि चैवं क्रियमाणे वैदिकमेवोपलक्षणं भवति, इतरथा लौकिकं स्यात्। तस्मा-

च्छागोस्नमेषशब्दैरेवोपलक्षणम्। अपि च निगमेष्वेवं द्रव्येषु छागोस्न-मेषशब्दाः प्रयुक्ता दृश्यन्ते। न च निगमकारस्य कश्चित्प्रतारणीयः। अतस्तत्स्मरणमपि समूलत्वादविरोधाच्च प्रमाणमेवेति ॥ २१ ॥

(१)एकविंशतिप्रदानानेकेऽन्वक्चातुर्मास्यदेवताः पितृत्र्यम्बकपुनरुक्तवर्जम् ॥ २२ ॥

( चातुर्मास्यदेवतानां हुत्वा हुत्वा देवतानाम् इति। ) (२)"एकविꣳशतिं चातुर्मास्यदेवता अनुद्रुत्यैकविꣳशतिधा कृत्वा प्रचरेयुः" ( श० ब्रा० १३-५-३-४ ) इति श्रुतेः ॥ २२ ॥

(३)ऐन्द्राग्नवैश्वदेवकायानेके ॥ २३ ॥

क्रमेणैन्द्राग्नस्य वपाꣳहुत्वा इतरासां होमः। एवमपि हि श्रूयते "ऐन्द्राग्नस्य वपायाꣳ हुतायां तदन्वितरा जुहुयुः" इति। तथा "वैश्वदेवस्य वपायाꣳ हुतायां" तथा "कायस्य वपायाꣳहुतायां तदन्वितरा जुहुयुः" ( श० ब्रा० १३-५-३-१,२,३ ) इति ॥ ॥ २३ ॥

देवतातन्त्रेण तु(४) ॥ २४ ॥

---

( १ ) एके अश्वतूपरगोमृगव्यतिरिक्तानां "कृष्णग्रीवऽ आग्नेयो रराटे०" ( वा० सं० २४-१ ) इत्यादीनां "श्वेताः सौर्याः" ( वा० सं० २४-१९ ) इत्यन्तानां सर्वपशूनां वपा एकविंशतिधा कृत्वा तेषां विभागानां क्रमेण पितृत्र्यम्बकपुनरुक्तवर्जं चातुर्मास्यदेवता एकविंशति-संख्या अनुद्रुत्यानुपूर्वमुद्दिश्य तासामन्वक् अन्वञ्चि अनुसारीणि तद्देवतानि एकविंशतिसंख्यानि प्रदानानि कुर्वन्ति। सूत्रे 'प्रदानान्' इति व्यत्ययेन पुलिङ्गनिर्देशः प्रदानानीत्यर्थः।

( २ ) कंसान्तर्गतं नास्ति बर्लिन पुस्तके।

( ३ ) एके अग्निमसर्वपशूनां वपा ऐन्द्राग्नवैश्वदेवकायानन्तु जुह्वति। ऐन्द्राग्नो वारुणप्रघासिकः। वैश्वदेवो वैश्वदेवपर्वसम्बन्धी। कायश्च वारुणप्रघासिकः। अयमभिप्रायः-आदित आरभ्य वारुणप्रघासिकैः ऐन्द्राग्नपर्यन्तं क्रमेण पृथक्पृथक् वपाप्रचारं कृत्वा ऐन्द्राग्नस्य वपायां हुतायामवशिष्टाः सर्वा वपा अनुहोतव्याः। अथवा कायस्य वपामनु-सर्वा वपा होतव्याः। अनयोरपि पक्षयोः प्राचीनवपानां पृथक्पृथक् क्रमेण प्रचारः। एतेपि त्रयः पक्षा वाचनिकाः।

( ४ ) तु शब्दो अस्यपक्षस्य स्वश्रुत्यभिमतत्वेन पक्षान्तरेभ्यो वि-शिष्टत्वसूचनार्थः। देवतानां तन्त्रं सकृदुच्चारणम्। तच्च "विश्वेभ्यो देवेभ्यः" इत्यादिरूपम्। "विश्वे वै सर्वे देवाः" इतिश्रुतेः। तेनायमर्थः-

अत्र सह प्रक्षेपे याः समानदेवतास्तासां तन्त्रेणोच्चारणं, सकृत्प्रयोगादेव कार्यसिद्धेः ॥ २४ ॥

व्यवस्थितास्वपि तन्त्रेण प्राप्त आह—

**(१) न कालभेदात् ॥ २५ ॥**

भिन्नो हि तत्र कालः देवतान्तरव्यवधानात् ॥ २५ ॥

**वपान्ते द्वितीयेन पूर्ववद्यस्ते रात्राविति जुहोति ॥२६॥**

वपाहोमान्ते द्वितीयेन महिम्ना चरति "यस्ते रात्रौ" (२)इति जुहोति । पूर्ववच्छब्देन सर्वहोमो लभ्यते ॥ २६ ॥

**शूलेऽश्वशेषश्रपणम् ॥ २७ ॥**

'कर्तव्यम्' इति शेषः । शूलस्य चापूर्वत्वात्प्रोक्षणं न भवति ॥ २७ ॥

**सर्पणप्रभृत्यापश्वासादनात् कृत्वा ॥ २८ ॥**

इति विंशेऽध्याये सप्तमी कण्डिका ।

---

**लोहितमवद्यति गोमृगकण्ठाश्वशफयोरयस्मये चरौ ॥ १ ॥**

अश्वस्य लोहितमवद्यति गोमृगकण्ठेऽश्वशफे अयस्मये चरौ ॥१॥

**वेतसशाखासु प्राजापत्यानाम् ॥ २ ॥**

'अवद्यति' इत्यनुवर्तते । प्राजापत्यानां वेतसशाखास्ववद्यति, 'वेतसकटे प्राजापत्यान्संश्चिनोति' इति वचनात् ॥ २ ॥

---

देवतातन्त्रेण सर्ववपानां प्रचारो भवति। "विश्वेभ्यो देवेभ्यः" इत्येवं सर्वासां देवतानां तन्त्रेणोच्चारणं कृत्वा सर्ववपानां सकृदेव प्रचारः सहैव कर्तव्यः ।

( १ ) एकादशिन्योः पशूनां 'कृष्णग्रीवा०' आदिभिः सह एकतन्त्रेण प्रचारो न भवति । कुतः ? कालभेदात् । तत्कुतः ? अश्वादिभिर्व्यवधानात् । तेषां च पृथक्प्रचारवचनात् । अतस्तद्वपानां प्रथमं पृथक्पृथक्प्रचारः । तेषामपि मध्ये द्वयोरेकदेवत्ययोः तन्त्रेण प्रचारः । ततोऽश्वादीनां त्रयाणां, कृष्णग्रीवादीनां सर्वेषां तन्त्रेणेति सर्वं निरवद्यम् ।

( २ ) यस्ते रात्रौ० ( वा० सं० २३-४ )

अश्वस्य वा ॥ ३ ॥

वेतसशाखास्ववद्यति, नान्येषां पशूनाम्। एवं हि श्रूयते–"प्लक्षशाखास्वन्येषां पशूनामवद्यन्ति, वेतसशाखास्वश्वस्य" ( श० ब्रा० १३-५-२-८ ) इति। यत्तु शाखान्तरीयं वचनं "वेतसकटे प्राजापत्यान्त्सञ्चिनोति" इति। तदनेन विशेषे स्थाप्यते। अश्वोऽपि हि प्राजापत्य एवेति ॥ ३ ॥

(१)स्विष्टकृद्वनस्पत्यन्तरे शूल्यं हुत्वा देवताऽ-

---

( १ ) स्विष्टकृद्वनस्पत्योरन्तरे वनस्पतियागानन्तरं स्विष्टकृद्यागात्पूर्वं शूले श्रपितं मांसं 'प्राजापत्योऽश्व' इति वचनात्प्रजापतये हुत्वा 'अमुष्मै स्वाहा' इति प्रतिदेवतं शादादित्वगन्तेभ्यो देवताश्वाङ्गेभ्यो देवताभ्योऽश्वाङ्गेभ्यश्च घृतंजुहुयात्। द्रव्यानुक्तौ

"आज्यंद्रव्यमनादेशे जुहोतिषु विधीयते"

इति घृतस्योक्तत्वात्। तत्र "शादन्दद्भिः" ( वा० सं० २५-१ ) इत्यादि "पृथिवीं त्वचा" ( वा० सं० २५-९ ) इत्यन्तः संहिताभागो ब्राह्मणं न मन्त्राः। शादादयो देवाः, दन्ताद्यङ्गानि। ततश्चतुर्गृहीतमाज्यं गृहीत्वा 'शादाय स्वाहा' 'दद्भ्यः स्वाहा' 'अवकाभ्यः स्वाहा' 'दन्तमूलेभ्यः स्वाहा' इत्यादि 'पृथिव्यै स्वाहा' 'त्वचे स्वाहा' इत्यन्तं जुहुयादित्येकः पक्षः शाखान्तरोदितः। स्वपक्षे तु 'शादन्दद्भिः प्रीणामि स्वाहा' इत्यादिहोममन्त्राः। देवता भोक्त्री द्वितीयया निर्दिश्यते। अश्वाङ्गं भोग्यं तृतीयया करणविभक्त्या निर्दिश्यते। क्वचित्केवला देवतैव यथा—'शुक्लाय स्वाहा' 'कृष्णाय स्वाहा' इति। क्वचिदन्यविभक्त्यैव द्रव्यदेवतयोर्निर्देशः, यथा–'अग्नेः पक्षतिर्वायोर्निपक्षतिः' इति। तथाच श्रुतिः "शादन्दद्भिरवकान्दन्तमूलैरित्याज्यमवदाना कृत्वा प्रत्याख्यायं देवताभ्य आहुतीर्जुहोति या एव देवता अपिभागास्ता भागधेयेन समर्धयति" ( श० ब्रा० १३-३-४-१ ) इति। अस्यायमर्थः—शादं नाम देवमश्वस्य दद्भिर्दन्तैः प्रीणामीति शेषः। स्वाहाकारो दानार्थः।

ततश्च "शादं दद्भिः प्रीणामि स्वाहा" इति। एवमन्यान्यपि योज्यानि। आज्यमवदानानि कृत्वा आज्यमेवाश्वाङ्गत्वेन परिकल्प्य प्रत्याख्यायमवदानमवदानं प्रति शादादिदेवता आख्यायाख्यायाज्याहुतीर्जुहोति सङ्कल्पिताश्वाङ्गभावा घृताहुतीः शादादिभ्यो ददाति। एवं कुर्वन्नपिभागाः कल्पितभागास्ता भागेन समर्धयति प्रीणातीति महीधरः।

**स्वाङ्गेभ्यो जुहोत्यमुष्मै स्वाहेति प्रतिदैवतᳫं शादप्रभृतित्वगन्तेभ्यः ॥ ४ ॥**

स्विष्टकृद्वनस्पत्यन्तरे शूल्यᳫं हुत्वा, शूले अर्पितं शूल्यं तद्धुत्वा जुहोतीत्याश्वस्योपविष्टहोमः। "प्राजापत्योऽश्वः" इति च प्रजापतेर्दैवतात्वम्। 'देवताभ्योऽश्वाङ्गेभ्यश्च जुहोति शादप्रभृतित्वगन्तेभ्यः' 'अमुष्मै स्वाहा' इति चतुर्गृहीतमाज्यम्। "आज्यमवदाना कृत्वा प्रत्याख्यायं देवताभ्य आहुतीर्जुहोति" (श० ब्रा० १३-३-४-१) इति वचनात् ॥ ४ ॥

**(१)विमुखाच्च परेभ्यः ॥ ५ ॥**

विमुखोऽध्येतृप्रसिद्धः "उग्रश्च भीमश्च" (वा० सं० ३-९७) इत्ययम्। ततः परं ये देवताविशेषास्तेभ्यश्च जुहोति "अग्निᳫं हृदयेन" (वा०सं० ३९-८) इत्येवमादिभ्यः ॥ ५ ॥

**(२)मानो मित्र इति च प्रत्यृचमनुवाकाभ्याम् ॥ ६ ॥**

जुहोति ॥ ६ ॥

**(३)अन्त्यां द्यावापृथिवीयाम् ॥ ७ ॥**

"द्यावापृथिव्यामुत्तमामाहुतिं जुहोति" (श० ब्रा० १३-३-४-१) इति वचनात् ॥ ७ ॥

**(४)स्विष्टकृदन्तेऽग्निभ्यः स्विष्टकृद्भ्यः स्वाहेति लोहितं जुहोति यथावत्तम् ॥ ८ ॥**

---

(१) उग्रश्चेति मन्त्रो विमुखः। ततः परेभ्यो देवताश्वाङ्गेभ्यः "अग्निᳫं हृदयेन" (वा० सं० ३९-८) इत्यादिभ्यश्चतुर्गृहीतमाज्यं गृहीत्वा जुहोति। तत्रापि पूर्ववत् पक्षद्वयम्-'अग्नये स्वाहा' 'हृदयाय स्वाहा' 'अशनये स्वाहा' 'हृदयाग्राय स्वाहा' इत्यादीति कात्यायनादीनामभिप्रायः। 'अग्निᳫं हृदयेन प्रीणामि स्वाहा' इत्यादि हरिस्वामिमते प्रयोगः। ततः 'अग्निᳫं हृदयेन' इत्यादीन् 'विश्वेभ्यो देवेभ्यः स्वाहा' इत्यन्तान् जुहोति।

(२) मा नो० (वा० सं० २५-२४) इत्यादि षोडशकण्डिकात्मकेनानुवाकद्वयेन पूर्ववच्चतुर्गृहीतमाज्यं गृहीत्वा षोडशाहुती जुहोति।

(३) "द्यावापृथिवीभ्याᳫं स्वाहा" (वा० सं० ३९-१३) इति चरमाहुतिं जुहोति इति सूत्रार्थः।

(४) गोमृगकण्ठेन प्रथमाहुतिम्, अश्वशफेन द्वितीयाम्, अयस्मयेन चरुणा तृतीयाम्। तदाहुतित्रयं स्विष्टकृदनन्तरमेव जुहोतीत्येकः पक्षः।

यस्मिन् यस्मिन्नवत्तन्तेनैव जुहोति, मा भूज्जुह्वा होम इति 'यथावत्त' ग्रहणम् ॥ ८ ॥

अश्वशफेन वाऽनुयाजान्ते ॥ ९ ॥

जुहोति । 'वा' शब्दो विकल्पार्थः(१) ॥ ९ ॥

अयस्मयेन पत्नीसंयाजान्ते ॥ १० ॥

जुहोति ॥ १० ॥

(२)इमानुकमिति च द्विपदाः ॥ ११ ॥

"द्विपदा उत्तमा जुहोति" (श०ब्रा०१३-२-६-५) इति वचनात् ॥११॥

अतिरात्र उत्तमः ॥ १२ ॥

उत्तममहरतिरात्रसंस्थं भवति । ननु चाहीनत्वादतिरात्रः प्राप्त एव । किमर्थं पुनरुच्यते ? गवादीनां नाम्ना स्वसंस्था मा भूवन्निति पुनरुच्यते ॥ १२ ॥

सर्वस्तोमो ज्योतिर्गौरायुरभिजिद्विश्वजिन्महाव्रतमप्तोर्यामो वा ॥ १३ ॥

एते चाहर्विशेषा भवन्ति । अप्तोर्यामो वेति ॥ १३ ॥

अप्तोर्यामे विशेषमाह—

अप्तोर्यामे तिरोऽह्नीयेभ्यो रात्रिपर्याय उत्तमः ॥ १४ ॥

(३)तिरोऽह्नीयेभ्योऽवसितेभ्य उत्तमो रात्रिपर्यायश्चतुःस्तोत्रो भवति ॥ १४ ॥

अग्निष्ठे प्राजापत्यौ च ॥ १५ ॥

प्राजापत्यौ उत्तमाहःसंयोगेन । उत्तममहः प्रकृत्य हि श्रूयते—"चतुर्विंशतिं त्वेवैतान् गव्यानालभेत" (श० ब्रा० १३-५-३-११) इति वचनात् । एवं चान्यत्राप्तोर्यामस्यातिरात्रिका एव क्रतुपशवस्तद्विकारत्वात् ॥ १५ ॥

---

(१) प्रथमाहुतिं स्विष्टकृदनन्तरमेव हुत्वाऽनुयाजान्तेऽश्वशफाहुतिं जुहोति इति विकल्पः ।

(२) इमा नु कम्० (वा० सं० २५-४६, ४७) इति कण्डिकयोः षडर्धानि सन्ति तैः षडाहुतीर्जुहोति इति सूत्रार्थः ।

(३) तिरश्च तदहश्च तिरोऽह्नः, तस्मिन् रात्र्यन्तर्हितेऽहनि भवाः सोमास्तिरोह्नीयाः तेभ्यः ।

अवभृथेऽभ्यन्ते ऽप्सु मग्नस्य पिङ्गलखलतिविक्लिधशुक्लस्य मूर्धनि जुहोति जुम्बकाय स्वाहेति ॥ १६ ॥

अवभृथान्ते ऽप्सु मग्नस्य (१)पिङ्गलस्य खलतेः। खलतिः–खल्वाटः, विक्लिधो—दन्तुरः, शुक्लः–अतिगौरस्तस्य मूर्धनि जुहोति "जुम्बकाय स्वाहा" (२)इति ॥ १६ ॥

उत्क्रान्ते यजमाने पापकृतोऽभ्यवयन्त्यचरित्वा व्रतानि ॥ १७ ॥

(३)अवभृथादुत्तीर्णे यजमाने पापकृतोऽभ्यवयन्ति अचरित्वा व्रतानि। प्रक्रान्तप्रायश्चित्तस्य चैतद्भवति। 'अचरित्वा व्रतानि' इत्युक्तत्वात्। 'पापकृत्'ग्रहणेन च ब्रह्महा उच्यते ॥ १७ ॥

अश्वमेधपूताख्यास्ते ॥ १८ ॥

'अश्वमेधपूता' इत्याख्यास्तेषाम्। पूता भवन्तीत्यर्थः। अपि च 'अश्वमेधावभृथे स्नात्वा पूता भवन्ति' इति स्मृतेः ॥ १८ ॥

नानाऽवभृथानि (४)वा ॥ १९ ॥

भवन्ति। 'प्रत्यहमवभृथेन चरन्ति' इति वचनात् ॥ १९ ॥

(५)कुम्भोपमारणान्तं पूर्वयोः ॥ २० ॥

अह्नोर्भवति ॥ २० ॥

कुत एतत् ?

शेषे दीक्षाव्रताभावात् ॥ २१ ॥

---

( १ ) पिङ्गाक्षस्य।

( २ ) अवभृथयागान्ते एवंविधस्य पुंसो मूर्धनि "जुम्बकाय स्वाहा" ( वा० सं० २५–९ ) इति मन्त्रेणाज्यं सकृद्गृहीतं जुहुयात्।

( ३ ) यजमाने जलमध्यादुत्क्रान्ते उत्तीर्णे सति ब्रह्महत्यादिकर्तारस्तच्छुद्ध्यर्थं तत्राश्वमेधावभृथसम्बन्धिनि जले अभ्यवयन्ति तत्र स्नान्ति। द्वादशाब्दकृच्छ्राचरणादिव्रतान्यकृत्वा।

( ४ ) अथवा अश्वमेधसम्बन्धीनि त्रीण्यपि सौत्यान्यहानि नानाऽवभृथानि भवन्ति। त्रयाणामप्यह्नां समिष्टयजुरन्ते पृथक्पृथक् अवभृथो भवति।

( ५ ) प्रत्यहमवभृथे क्रियमाणे पूर्वयोरह्नोः कुम्भोपमारणान्तं कर्म भवति। "अवभृथ०" ( वा० सं० ८–२७ ) इति मन्त्रेण ऋजीषकुम्भस्य मज्जनान्तमित्यर्थः।

कर्मशेषे दीक्षाव्रतस्याभावात् । 'अवभृथस्नानेन उन्मुक्तदीक्षो भवति' इत्यभिप्रायः(१) ॥ २१ ॥

सर्वं वा श्रुतेः ॥ २२ ॥

सर्वं वा स्नानाद्यपि भवति । 'प्रत्यहमवभृथेन चरन्ति' इति श्रुतेः । यदुक्तं 'स्नानेनोन्मुक्तदीक्ष' इति, तन्न, वचनसामर्थ्यात् । सर्वावभृथान्त उन्मुक्तदीक्षो भवति । साभ्यासो ह्यवभृथोऽवभृथकार्ये वर्तते । यथा—'सप्ताहं दीक्षणीयया चरति' इति साभ्यासा दीक्षणीया दीक्षणीयाकार्ये वर्तते ॥ २२ ॥

एकविंशतिरनूबन्ध्याः ॥ २३ ॥

'भवन्ति' इति शेषः । अभ्यस्तरूपमिदमेकं कर्म प्रकृतावेव, दृष्टत्वात् ॥ २३ ॥

उदवसानीयान्ते भार्या ददाति यथासंवादं सानुचरीः॥२४॥

"उदवसानीयायां सꣳस्थितायां चतस्रश्च जायाः कुमारीं पञ्चमीं चत्वारि च शतान्यनुचरीणां यथा समुदितं दक्षिणां ददाति" ( श० ब्रा० १३-५-४-२७ ) इति श्रुतेः ॥ २४ ॥

(२)कुमारीं पालागलीं चाध्वर्यवे ॥ २५ ॥

कुमारी यजमानदुहिता । एतेऽध्वर्यवे ददाति ॥ २५ ॥

अनुचरीर्वा फलाधिकारादितरासाम् ॥ २६ ॥

'वा' शब्दः पक्षव्यावृत्तौ । न भार्या ददाति अनुचरीरेव दद्यात् । कुत एतत् ? फलाधिकाराद्भार्याणां यजमानतुल्या एवैता इति । मध्यमकं हि यजमानस्य पत्नीनां च द्रव्यं साधारणत्वाद्धोत्सर्गः सहैव भवति नान्यथेति । तत्कथं तर्हि वेदवाक्यं नेयम् ? चतस्रश्च जाया यजमानश्च चत्वारि च शतान्यनुचरीणां कुमारीं पञ्चमीं यथासंवादं दक्षिणां ददाति ॥ २६ ॥

अनारभ्यत्वाच्च ॥ २७ ॥

---

( १ ) यदि च प्रत्यहं स्नानान्तं क्रियेत ततो दीक्षोन्मोकः स्यात् । तथा चादीक्षितेनाऽहर्द्वयं कृतं स्यात् , न हि तदिष्यते । अतः कुम्भोपमारणान्तमेव कर्तव्यं तृतीयेऽह्नि स्नानान्तमिति ।

( २ ) कुमारीं पालागलीं वाऽध्वर्यवे दद्यादेव पुनर्वचनात् इति वासुदेवः । तत्प्रत्याम्नायद्रव्यं देयमिति तु साम्प्रदायिकाः ।

अपि च यथा पत्न्यो यजमानदाने ऽसमर्थाः एवं यजमानोऽपि पत्नीनाम् । तस्मादनारभ्योऽयमर्थः(१) ॥ २७ ॥

**द्वादशाहमाग्नेयः पुरोडाशः ॥ २८ ॥**

गृहेषु कर्तव्यः । 'आग्नेय' इति न्यायसूत्रम् ॥ २८ ॥

**ब्रह्मौदनो वा ॥ २९ ॥**

"द्वादश ब्रह्मौदनानुत्थाय निर्वपति द्वादशभिर्वेष्टिभिर्यजत" ( श० ब्रा० १३-३-६-६ ) इति श्रुतेः । २९ ॥

**प्रत्यृतुपशूनालभते षट् षड्वसन्तायाग्नेयानैन्द्रान्पार्जन्यान्मारुतान्वा मैत्रावरुणानैन्द्रावैष्णवानैन्द्राबार्हस्पत्यान् ॥ ३० ॥**

(२)एवमपि हि श्रूयते ॥ ३० ॥

इति विंशेऽध्यायेऽष्टमी कण्डिका ।

इत्युपाध्यायकर्ककृतौ कात्यायनसूत्रविवरणे
विंशतितमोऽध्यायः समाप्तः ।
अश्वमेधः समाप्तः ।

---

( १ ) न ह्ययमर्थ आरब्धुं शक्यो यद्भार्या ददाति इति ।

( २ ) "अथोत्तरं संवत्सरमृतुपशुभिर्यजते—षड्भिराग्नेयैर्वसन्ते, षड्भिरैन्द्रैर्ग्रीष्मे, षड्भिः पार्जन्यैर्वा मारुतैर्वा वर्षासु, षड्भिर्मैत्रावरुणैः शरदि, षड्भिरैन्द्रावैष्णवैर्हेमन्ते, षड्भिरैन्द्राबार्हस्पत्यैः शिशिरे, षड् ऋतवः संवत्सरः, ऋतुष्वेव संवत्सरे प्रतितिष्ठति, षट्त्रिंशदेते पशवो भवन्ति" ( श० ब्रा० १३-५-४-२८ ) ।

# एकविंशोऽध्यायः ।

**पुरुषमेधस्त्रयोविंशतिदीक्षोऽतिष्ठाकामस्य ॥ १ ॥**

'पुरुषमेध' इति कर्मणो नामधेयम्(१) । स च पञ्चरात्रः स्यात् । "स वाऽ एष पुरुषमेधः पञ्चरात्रो यज्ञक्रतुर्भवति" ( श० ब्रा० १३-६-१-७) इति श्रुतेः । त्रयोविंशतिदीक्षः। "तस्य त्रयोविंशतिर्दीक्षा" (श० ब्रा० १३-६-१-२) इति वचनात् । 'अतिष्ठाकामस्य' इति । सर्वाणि भूतान्यतीत्य तिष्ठते इति 'अतिष्ठ' इत्युच्यते तत्कामस्य ॥ १ ॥

**ब्राह्मणराजन्ययोः ॥ २ ॥**

भवति, न वैश्यस्य ॥ २ ॥

**(२)अग्निष्टोमावन्तरेणातिरात्र उक्थ्यपक्षः ॥ ३ ॥**

पञ्चरात्रस्याद्यन्तयोरग्निष्टोमो मध्ये ऽतिरात्रः तमभित उक्थ्यौ(३) । संस्थामात्रविधानाच्च सर्व एते ऽपूर्वाः । अतश्च द्वादशाहिकौ विध्यन्तः प्रत्येकम् ॥ ३ ॥

**यूपैकादशिनी भवति ॥ ४ ॥**

(४)अत्र ॥ ४ ॥

**तावन्तोऽग्नीषोमीयाः ॥ ५ ॥**

"एकादशाग्नीषोमीयाः पशव उपवसथे" ( श० ब्रा० १३-६-१-४ ) इति श्रुतेः । ते च मध्यमे यूपे नियुज्यन्ते । न ह्यत्राश्वमेधवत्प्रतियूपश्रवणम्(५) ॥ ५ ॥

**पशूनुपाकरिष्यन्नतिरात्रे (६)देवसावितरिति प्रत्यृचं तिस्रो जुहोति ॥ ६ ॥**

"स वै पशूनुपाकरिष्यन्" इति प्रकृत्य "एतास्तिस्रः सावित्रीराहुतीर्जुहोति" ( श० ब्रा० १३-६-२-९ ) इति श्रवणात् ॥ ६ ॥

---

( १ ) अस्य चैत्रशुक्लदशम्यामारम्भो भवतीति महीधरः ।

( २ ) अथ सुत्यादिनान्युच्यन्ते ।

( ३ ) उक्थ्यौ पक्षौ पक्षाविव उभयतो वर्तमानौ यस्येत्यर्थात् ।

( ४ ) प्रत्यहमित्यपि बोध्यम् ।

( ५ ) प्रतियूपं मध्यमे वेति विकल्पः ।

( ६ ) सकृद्गृहीतेन आज्येन "देव सवितः०" (वा० सं० ३०-१,२,३) इति प्रत्यृचं तिस्र आहुतीराहवनीये जुहोति ।

**ऐकादशिनानुपाकृत्य ब्राह्मणादींश्च ॥ ७ ॥**

'च'शब्दादुपाकरोति । "ब्रह्मणे ब्राह्मणम्" (१)इति चैते ब्राह्मणादयः ॥ ७ ॥

**नियोजनकाले(२)ऽष्टाचत्वारिंशतमाद्यानाग्निष्ठे ॥ ८ ॥**

'नियुनक्ति' इति शेषः ॥ ८ ॥

**इतरेष्वेकादशैकादश ॥ ९ ॥**

इतरेषु(३) एकादशैकादश नियुनक्ति ॥ ९ ॥

**द्वितीयोच्छ्रिते शेषान् ॥ १० ॥**

(४)अन्ते मा भूदिति 'द्वितीयोच्छ्रित'ग्रहणम् ॥ १० ॥

**नियुक्तान् ब्रह्माऽभिष्टौति होतृवदनुवाकेन**

---

(१) ब्रह्मणे ब्राह्मणम्० (वा० सं० ३०-५) एते ब्राह्मणादयः अध्यायसमाप्तिपर्यन्ताः ।

(२) 'ब्रह्मणे ब्राह्मणम्०' इत्यादीन् "प्रकामोद्यायोपसदम्" (वा० सं० ३०-९) इत्यन्तान् अष्टाचत्वारिंशतं पशूनग्निष्ठे यूपे आलभते। तत्र "ब्रह्मणे जुष्टं नियुनज्मि" इति अग्निष्ठे यूपे प्रथमं ब्राह्मणं नियुनक्ति इति सर्वेषां नियोजनप्रकारो बोध्यः ।

(३) अन्येषु दशसु यूपेषु एकादश एकादश पुरुषान् नियुनक्ति । तद् यथा—द्वितीये यूपे "वर्णायानुरुधम्" इत्यादीनेकादश, तृतीये "मर्यादायै प्रश्नविवाकम्" इत्यादीनेकादश, चतुर्थे "भार्यै दार्वाहारम्" इत्यादीनेकादश, पञ्चमे "वैरहत्याय पिशुनम्" इत्यादीनेकादश, षष्ठे "योगाय योक्तारम्" इत्यादीनेकादश, सप्तमे "परिवत्सराय अविजाताम्" इत्यादीनेकादश, अष्टमे "पाराय मार्गारम्" इत्यादीनेकादश, नवमे "पश्चादोषाय ग्लाविनम्" इत्यादीनेकादश, दशमे "आस्कन्दाय सभास्थाणुम्" इत्यादीनेकादश, एकादशे "महसे वीणावादम्" इत्यादीनेकादश पुरुषान् आलभते ।

(४) प्रतियूपमेकादशस्वेकादशसु नियुक्तेषु येऽधिका अवशिष्टास्तान् "वीणावादम्" इत्यादींश्चतुर्दश "अतिदीर्घम्" इत्यादीनष्टौ "मागधः" इत्यादींश्च चतुर एवं षड्विंशतिं पूर्वोक्ते द्वितीये एव यूपे नियुञ्ज्यात् । एवञ्च तत्र पूर्वनियुक्तैकादशपुरुषः सह सप्तत्रिंशत्पुरुषा नियुक्ता भवन्तीति दिक् ।

(१)सहस्रशीर्षेति ॥ ११ ॥

'होतृवत्' इति शस्त्रवदभिष्टवः ॥ ११ ॥

कपिञ्जलादिवदुत्सृजन्ति ब्राह्मणादीन् ॥ १२ ॥

पर्यग्निकृतानुत्सृजन्तीत्यर्थः ॥ १२ ॥

स्विष्टकृद्वनस्पत्यन्तरे पुरुषदेवताभ्यो(२) जुहोति ॥१३॥

आज्येन ॥ १३ ॥

सपुरुषमश्वमेधवद्दक्षिणा ॥ १४ ॥

(३)राज्ञः ॥ १४ ॥

सर्वस्वं ब्राह्मणस्य ॥ ॥ १५ ॥

"अथ यदि ब्राह्मणो यजेत सर्ववेदसं दद्यात्" ( श० ब्रा० १३-६-२-१९ ) इति श्रुतेः ॥ १५ ॥

प्रतिदेवतं तिस्रस्तिस्रोनूबन्ध्याःपञ्चोत्तमायाम् ॥ १६ ॥

तिस्रो मैत्रावरुण्यः, तिस्रो वैश्वदेव्यः, पञ्च बार्हस्पत्यः ॥ १६ ॥

त्रैधातव्यन्ते समारोह्यात्मन्नग्नी सूर्यमुपस्थायाद्भ्यः सम्भृत इत्यनुवाकेनानपेक्षमाणोऽरण्यं गत्वा न प्रत्येयात् ॥ १७ ॥

(४)त्रैधातव्यन्ते आत्मन्नग्नी समारोह्य "अद्भ्यः सम्भृतः०"(५) इत्यनुवाकेन सूर्यमुपस्थायारण्यमियात्, अपुनर्गृहाय। ततश्चाश्रमान्तरप्राप्तिरियमिति।

---

( १ ) नियुक्तान्ब्राह्मणमित्यादिपशून् "सहस्रशीर्षा०" ( वा. सं. ३१-१, १६ ) इत्यनुवाकेन षोडशर्चेन ब्रह्मा स्तौति 'होतृवत्' इति त्रिः प्रथमां त्रिरुत्तमाम् ऋगन्ते प्रणव इत्यादिशस्त्रशंसनधर्मेणेत्यर्थः।

( २ ) ब्राह्मणादिपुरुषाणां या देवता ब्रह्मादयस्ताभ्यः 'ब्रह्मणे स्वाहा' 'क्षत्राय स्वाहा' इत्यादि जुहोतीत्यर्थः।

( ३ ) "विजयमध्याद्धोतुः" ( का० श्रौ० २०-४-२७ ) इत्युक्तपुरुषवर्जिताऽप्यत्र पुरुषसहिता दक्षिणा भवतीत्यर्थः।

( ४ ) त्रैधातवीष्ट्यनन्तरं गार्हपत्याहवनीयावग्नी "अयं ते योनिर्ऋत्वियः०" ( वा० सं० १५-५६ ) इत्यनेन मन्त्रेण आत्मनि स्वशरीरे ( आस्ये कोष्ठे वा ) समारोहोत्यर्थ इति देवयाज्ञिकभाष्ये स्पष्टम्।

( ५ ) अद्भ्यः सम्भृतः० ( वा० सं० ३१-१७, २२ )।

यच्च स्मृतिषूच्यते—

प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम्।
आत्मन्यग्नी(१) समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्॥ (म० स्मृ० ६-३८) इति।

साचेयं पुरुषमेधाख्या सर्वस्वदक्षिणा प्राजापत्येष्टिस्तां निरूप्य पारिव्रज्यं ब्राह्मणस्य। एवं च "यावज्जीवमग्निहोत्रं जुहुयात्" इति श्रुतिरनया श्रुत्या विकल्पते। अथ स्मार्त्तेष्टिः प्राजापत्या स्यात्तदानीं स्मृत्या श्रुतिर्बाधिता स्यात्। न चैतदिष्यते। पुरुषमेधः कथं प्राजापत्येष्टिरिति चेत्? सन्ति ह्यत्र प्राजापत्याः पशवस्तदुपलक्षिता प्राजापत्येत्युक्ता॥१७॥

ग्रामे वा विवत्सन्नरण्योः॥ १८॥

"यद्यु ग्रामे विवत्सेदरण्योरग्नी समारोह्योत्तरनारायणेनैवादित्यमुपस्थाय गृहेषु प्रत्यवस्येत्" (श० ब्रा० १३-६-२-२०) इति॥१८॥

इत्येकविंशेऽध्याये प्रथमा कण्डिका।

सर्वमेधः सर्वकामस्य॥ १॥

'सर्वमेध' इति कर्मनामधेयम्, विध्यर्थवादमन्त्रत्वासम्भवात्। स सर्वकामस्य भवति॥ १॥

दशरात्रः॥ २॥

उपक्रमात्तत्सिद्धेर्दशरात्रग्रहणं न कर्तव्यम्। क्रियते च। तत्किमर्थम्? "अग्निष्टुत्त्रय उक्थ्याः" (का०श्रौ० २१-२-४) इति वक्ष्यति। तत्रेन्द्रस्तुदादिभ्योऽधिका उक्थ्या मा भूवन्निति(२)। इन्द्रस्तुदादय एवोक्थ्याः॥२॥

अग्निरुत्तमः॥ ३॥

एकशतविधोऽग्निरत्र(३)॥ ३॥

(४)अग्निष्टुत्त्रय उक्थ्या इन्द्रस्तुत्सूर्यस्तुद्वैश्वदेवस्तुद्व्रतं वाजपेयोऽप्तोर्यामः सर्वमस्मिन्नालभते॥ ४॥

अस्मिन्नप्तोर्यामे सर्वमालभ्यते। "तस्मिन्त्सर्वान्मेध्यानालभते" (श० ब्रा० १३-७-१-९) इति श्रुतेः। अशक्यार्थोपदेश इति चेत्? न हि नि

(१) 'आत्मन्यग्नीन्' इति पाठो मनुस्मृतौ।

(२) सर्वमेधस्य दश सुत्याहानि भवन्तीति यावत्।

(३) 'एकशतविधोऽत्रभवतीति शेषः' इ० पा०।

(४) दशरात्रे प्रथमानि सप्त अहानि प्रदर्श्यन्ते अग्निष्टुत्, त्रय उक्थ्याः, व्रतम्, वाजपेयः, अप्तोर्यामश्चेति।

त्वग्रहः सर्वालम्भः शक्यते कर्तुम् । एवं चेदेषामेवोपलम्भो दृष्टस्तेषां सर्वतोच्यते । ते च "पुरुषोऽश्वो गौरविरजः" इति । अपि चान्ते सर्व-शब्दो दृश्यते—"पुरुषोऽश्वो गौरविरजः" इति प्रकृत्य "एतावन्तो वै सर्वे पशवः" ( श० ब्रा० ६-२-१-१५ ) इति । तस्मात् सर्वशब्देन पञ्चपश्वालम्भ उच्यते । अतिरात्रविकारत्वाच्चाप्तोर्यामस्य तस्स्तो-मायनदेवताभ्य (१)आलभ्यन्त एकैकस्यै देवतायै पञ्च पञ्च पशव आलभ्यन्ते, विभागाभावात् । लिङ्गाच्च-'अवपाकानां त्वचो जुहोति' ( का० श्रौ० २१-२-५ ) इति । यदि पञ्चैते पशव एते स्युः, ततः 'अवपाकानां त्वचो जुहोति' इति बहुवचनमुपपन्नम् । त-स्मात्प्रतिदेवतं पञ्च पञ्च पशवः । सर्वे चैते यूपे नियुज्यन्ते । स्तोमायनं ह्येतदिति सर्वत्र चात्र स्तोमायनम् । न ह्येकादशिनी विहिता सम्भवति । न चैन्द्राग्नः क्वचित्प्रत्यक्षाविधानात् ॥ ४ ॥

## (२)अवपाकानां त्वचो जुहोति ॥ ५ ॥

अवपाकानां वपावर्जितानां त्वचो जुहोति । पुरुषाश्वावपाकाः ॥५॥
अप्तोर्याम एवायमपरो विशेषः—

## ओषधिवनस्पतीनाᳫं संव्रश्चम् ॥ ६ ॥

'प्रकिरति' इति शेषः । संव्रश्चः-कूट उच्यते(३) ॥ ६ ॥

## अन्नमन्नं(४) जुहोति वपान्ते ॥ ७ ॥

## तृतीयसवने च हुतेषु हविःषु ॥ ८ ॥

अयं च सर्वान्नैर्विहोमः पूर्वतरमोषधिवनस्पतिसंव्रश्चं प्रकीर्य क-र्तव्यः(५) । एवमपि हि श्रूयते—"संव्रश्चमोषधिवनस्पतीनां प्राकिरन्ति

---

( १ ) 'आलम्भः' इ० पा० ।

( २ ) वपारहितानामश्वादीनां त्वच उत्कृत्य जुहोति वपासहि-तानामजादीनां तु वपा एव जुहोतीत्यर्थसिद्धमिति स्पष्टं देवयाज्ञिके ।

( ३ ) संव्रश्चमिति णमुलन्तमेतत् । छित्वा छित्वा खण्डानि ओष-धिवनस्पतीनामाहवनीये प्रकिरतीत्यर्थः ।

( ४ ) सर्वविधमन्नमित्यर्थः । अयं होमो दर्व्या क्रियते ।

( ५ ) सर्वान्नहोमः प्रातःसवने अप्तोर्यामसम्बन्धिनामातिरात्रि-काणां चतुर्णामाग्नेयादिपशूनां वपामार्जनान्ते कृते, तथा तृतीयसवने एतेषामेव पशूनां हविःषु हुतेषु भवति । उभयसवने प्रतिद्रव्यं होमम-न्त्राश्च "तदेवाग्निः०" (वा० सं० ३२-१) इत्यारभ्य "देवेभ्यो हि" (वा० सं० ३३-९४ ) इत्यन्ताः, देवता तु सर्वात्मा प्रधानपुरुषो हिरण्यगर्भः ।

शुष्काणां चार्द्राणां चान्नमन्नं जुहोति" ( श० ब्रा०१३-७-१-९ ) ॥८॥

आश्वमेधिकं मध्यमं (१)व्रतस्थाने ॥ ९ ॥

(२)इदमपरं विकल्परूपतयोच्यते । व्रतस्थाने आश्वमेधिकं मध्यममहर्भवति(३) ॥ ९ ॥

(४)पौरुषमेधिकं वाजपेयस्य ॥ १० ॥

मध्यममहर्भवति । अत्र चाश्वमेधिकार्थे यूपानामेकविंशतिर्भवति । मध्यमस्य तज्जात्यनुग्रहे तु बहूनामह्नां विरोधस्तस्माद्द्वादशो भवति । प्रमाणं त्वविरोधाद्भवत्येव वाजपेयिकपक्षे सप्तदशारत्निता(५) ॥ १० ॥

(६)त्रिणवत्रयस्त्रिंशा उक्थ्यौ ॥ ११ ॥

त्रिणवत्रयस्त्रिंशौ(७) क्रतू उक्थ्यसंस्थौ भवतः । तौ च पूर्वस्तोमसम्बन्धिनौ, तत्र दृष्टत्वात् ॥ ११ ॥

अतिरात्रो विश्वजित् ॥ १२ ॥

भवति । "विश्वजित् सर्वपृष्ठोऽतिरात्रो दशममहर्भवति" ( श० ब्रा० १३-७-१-१२ ) इति श्रुतेः ॥ १२ ॥

(८)पुरुषमेधवद्दक्षिणा सभूमि ॥ १३ ॥

इत्येकविंशोऽध्याये द्वितीया कण्डिका ।

सर्वमेध उक्तः । इदानीमवसरप्राप्तः पितृमेधोऽनुविधीयते—

पितृमेधः संवत्सराऽस्मृतौ ॥ १ ॥

'पितृमेध' इति कर्मणो नामधेयम् । स च(९) संवत्सराऽस्मृतौ भ

( १ ) एतच्च स्वशाखीयम् । व्रतं तु शाखान्तरीयम् ।

( २ ) 'मध्यमपदं विकल्प' इ० पा० ।

( ३ ) पूर्वोक्तस्य पञ्चमस्याह्नो महाव्रतस्य स्थाने अश्वमेधसम्बन्धि मध्यममहरुक्थ्यसंस्थं भवति । ( ४ ) एतदपि स्वशाखीयम् ।

( ५ ) प्रागुक्तस्य षष्ठस्याह्नो वाजपेयस्य स्थाने पौरुषमेधिकं मध्यममतिरात्रसंस्थं भवति ।

( ६ ) दशरात्रे सप्ताहान्युक्त्वाऽष्टमनवमे अहनी आह ।

( ७ ) एतत्स्तोमकौ अष्टमनवमौ इति शेषः ।

( ८ ) पुरुषमेधे यथा पुरुषसहिता दक्षिणा तथैवात्र भूमेरन्यत्र निषेधेऽपि तत्सहिता दक्षिणा भवति ।

( ९ ) मृतस्य मरणसंवत्सरास्मृतावित्यर्थः ।

वति। यदा न स्मर्यन्ते संवत्सराः मृतस्य। "यत्र समा नानु चन स्मरेयुः" (श० ब्रा० १३-८-१-२) इति श्रुतेः॥ १॥

## अयुग्मेषु(१) वा॥ २॥

"अयुग्मेषु संवत्सरेषु कुर्यात्" (श० ब्रा १३-८-१-३) इति श्रुतेः। अतश्च विकल्पोयम्॥ २॥

## एकनक्षत्रे॥ ३॥

"एकनक्षत्रं हि पितॄणाम्" (श० ब्रा० १३-८-१-३) इति। एकनक्षत्रं च-यत्रैका तारका(२) चित्रास्वातिरेवतीत्यादि यथा॥ ३॥

## अमावास्यायाम्॥ ४॥

'वा' इति सामर्थ्याद्द्रष्टव्यम्। समुच्चयः कस्मान्न भवति एकनक्षत्रेऽमावास्यायां च? नैतदेवम्। अमावास्यायामेकनक्षत्रसंस्तवश्रवणात्। "अमावास्यायाममावास्या वाऽ एकनक्षत्रम्" (श० ब्रा० १३-८-१-३) इति। तच्च समुच्चये न घटते॥ ४॥

## निदाघशरन्माघेषु॥ ५॥

निदाघः-ग्रीष्मः। शरद्-शरदेव। माघोऽपि माघ एव। एवं हि श्रूयते-"निदाघे वा नि नोऽघं धीयाता" इति, "शरदि कुर्यात्स्वधा वै शरत्स्वधो वै पितॄणामन्नं" "माघे वा मा नोऽघं भूत्" (श. ब्रा. १३-८-१-४) इति च॥ ५॥

## (३)यावन्तो धुविष्यन्तः स्युस्तावतः कुम्भानादाय छत्राणि चापरिमितानि(४)॥ ६॥

धुविष्यन्तः पुत्रपौत्राः। वक्ष्यति हि-'अमात्या(५)धून्वतस्त्रिस्त्रिः परिक्रामन्ति' (का० श्रौ० २१-३-७)॥ ६॥

---

(१) बहुकालव्यवधानेनापि मृतमरणसंवत्सरविस्मृत्यभावे पितृमेधानुष्ठानाभावप्रसङ्ग इति अयुग्मेषु संवत्सरेषु वा कुर्यादिति व्यवस्थितो विकल्पः।

(२) यत्रैकैव तारका आकाशे दृश्यते इत्यर्थः। यत्तु द्विवचनबहुवचनान्तशब्देन क्वचित्प्रसिद्धं पुनर्वसू विशाखे कृत्तिकाः भरण्योऽनुराधा इत्यादि, तदनेकनक्षत्रमिति।

(३) पितृमेधस्य कालमुपदिश्य विधिमुपदिशति यावन्त इति।

(४) कुम्भसंख्यातोऽमात्यसंख्यातश्चाधिकानि।

(५) 'धून्वतः' नास्ति सूत्रे।

**शरीराणि ग्रामसमीपमाहृत्य कुम्भेन तल्पे कृत्वाऽहतपक्षेण परितत्याघ्नसेषु वाद्यमानेषु वीणायां चोद्धतायाममात्यास्त्रिस्त्रिः परिक्रामन्त्युत्तरीयैरुपवाजनैर्वोपवाजयन्तः ॥ ७ ॥**

कुम्भेन शरीराणि ग्रामसमीपमाहृत्याहतस्य वाससः पक्षेण परितत्य(१) आघसेषु वादित्रेषु वाद्यमानेषु उद्धतायां वीणायां च वाद्यमानायाम् अमात्या(२) उत्तरीयैः उपवाजनैर्वोपवाजयन्तः त्रिस्त्रिः परिक्रामन्ति ॥ ७ ॥

**स्त्रियो वा ॥ ८ ॥**

परिक्रामन्ति । 'वा'(३) इति विकल्पः ॥ ८ ॥

**(४)पूर्वरात्रमध्यापररात्रेषु च ॥ ९ ॥**

'च'शब्दात्परिक्रामन्ति(५) ॥ ९ ॥

**विफल्फान्नमहरेतत्(६) ॥ १० ॥**

फल्फ वृद्धौ । बह्वन्नमेतदहर्भवति ॥ १० ॥

**(७)नृत्यगीतवादित्रवच्च ॥ ११ ॥**

भवति ॥ ११ ॥

**अन्नमस्मा उप(८)संहरन्त्येके ॥ १२ ॥**

---

(१) कुम्भे एवास्थिसंचयनं "श्मशानं चिकीर्षतः कुम्भे सञ्चयनम्" (का०श्रौ० २५–८–७) इत्युक्तेः कृत्वाऽरण्ये भूमिमध्येऽस्थीनि पितृमेधं चिकीर्षता पुत्रेण स्थाप्यन्ते । तेनैव कुम्भेन शरीराणि तान्यस्थीनि ग्रामसमीपमाहृत्य पूर्वमेव तत्र स्थापितायाः खट्वाया उपरि निधाय अहतस्य वस्त्रस्य एकदेशे नास्थिकुम्भं सर्वतो वेष्टयित्वेत्यर्थः ।

(२) मृतस्य पुत्रपौत्राद्याः उत्तरीयैः प्रावरणवस्त्रैः उपवाजनैः व्यजनैर्वा तमस्थिकुम्भं वाजयन्तस्त्रिस्त्रिरप्रदक्षिणं परियन्ति ।

(३) स्त्रीणां परिक्रमणविकल्पेन पुत्रादीनां तन्नियतमिति गम्यते ।

(४) परिक्रमणकालमाह ।

(५) रात्रेः पूर्वभागे मध्यभागे पाश्चात्यभागे च परिक्रामन्ति ।

(६) एतत्पितृमेधारम्भसम्बन्धि दिनं विफल्फान्नम् अस्मिन्दिने बह्वन्नदानं कर्तव्यमित्यर्थः ।

(७) अनवरतं नृत्यगीतवादित्राणि अस्मिन्नहनिकारयितव्यानीति ।

(८) 'सं' अत्र पुस्तके अधिकः पा० ।

अस्मा अस्थिकुम्भाय एकेऽन्नोपहारं कुर्वन्ति(१) ॥ १२ ॥

उपव्युषसं सशरीरा दक्षिणा गच्छन्ति ॥ १३ ॥

उषसि वि(२)गच्छन्त्यां सह (३)शरीरेण (४)दक्षिणा गच्छन्ति ॥१३॥

यथाकुर्वतो ऽभ्युदियात्सूर्यः ॥ १४ ॥

तथा यत्न आस्थेयः(५) ॥ १४ ॥

कक्षेऽवतापिनि ॥ १५ ॥

श्मशानं कर्तव्यम्। कक्षः—गहनप्रदेशः(६)। अवतापी यस्मिन्नुपरि स्थितः सूर्यस्तपति, न पार्श्वस्थः(७)॥ १५ ॥

(८)ऊषर उदक्प्रवणे समे वा ॥ १६ ॥

दक्षिणाप्रवण एके ॥ १७ ॥

अदर्शनाद् ग्रामात्(९) ॥ १८ ॥

आरात्पथः ॥ १९ ॥

दूरात्पथ इति(१०) ॥ १९ ॥

न्यग्रोधाश्वत्थ(११)तिल्वकहारिद्रुस्फूर्जक(१२)बिभीदक-

---

(१) प्रथमपरिगमनानन्तरमिति सम्प्रदायः।

(२) 'विगच्छन्ति' इ० पा०।

(३) 'शरीरैः' इ० पा०।

(४) अस्थिकुम्भसहिताः यजमानाध्वर्वमात्या दक्षिणदिशि गच्छेयुः।

(५) यथास्थिनिवापं कुर्वतः सूर्योऽभ्युदियात् तथा कर्तव्यम्। सूर्योदयात्प्रागेव वक्ष्यमाणमस्थिनिवापं कर्म प्रारभेतेतियावत्।

(६) गह्वरो वृक्षलतादिसंवृतः प्रदेशः।

(७) अधस्तापीत्यर्थः। यो गह्वरप्रदेश उपरिष्टात् स्थितेनैव सूर्येण मध्याह्नेऽधस्तात्ताप्यते पार्श्वतो वृक्षगुल्मादिभिरावृतत्वात्तादृश इति यावत्।

(८) ऊषाः क्षारमृत्तिकाः सन्ति यस्मिन् उदीच्यां दिशि प्रवणं निम्नं यत्र वा।

(९) सप्तम्यर्थे पञ्चमी ग्रामाददर्शने। यत्रस्थितैर्ग्रामो न दृश्यते।

(१०) मार्गाद्दूरे कर्तव्यम्।

(११) तिल्वकः तिणिसः।

(१२) बिभीदको बहेदकः।

(१)पापनामभ्यश्च ॥ २० ॥

दूरात्करोति ॥ २० ॥

(२)चितिवच्च ॥ २१ ॥

देशो भवति । तद्गुणयुक्त इत्यर्थः ॥ २१ ॥

शंवति कंवति वा ॥ २२ ॥

'शम्' इति सुखनीयः प्रदेशः, 'कम्' इति रमणीयः, तत्र करोति(३)। 'वा'शब्दो विकल्पार्थः ॥ २२ ॥

चित्रं पश्चात् ॥ २३ ॥

चित्रमनेकप्रकारं वनं यस्य प्रदेशस्य सो(४)ऽङ्गीकर्तव्यः ॥ २३ ॥

तदभाव उदकमुत्तरतो(५) वा ॥ २४ ॥

प्रदेशस्य, भवति ॥ २४ ॥

कर्षूवीरिणवति ॥ २५ ॥

'कर्षू' शब्देन कुहसार उच्यते । वीरिणानि-तृणानि, तद्वति प्रदेशे करोति ॥ २५ ॥

(६)ग्रामतस्तेजनीमुच्छ्रित्य न न्यस्येद्गृहेषू-च्छ्रयेत् ॥ २६ ॥

---

(१) पापनामानः श्लेष्मातककोविदारादयः।

(२) चितिवत् मृतस्य दाहार्थं यादृशे देशे काष्ठैश्चितिर्विहिता तादृशे देशे। ततश्च "उद्धृत्य क्षीरिणीः पुरुषाद्धतोः" "विशाखशरा-श्मगन्धापृश्निपर्ण्यध्याण्डाश्च" (का० श्रौ० २५-७-३०, ३१) इत्येत-ल्लभ्यते।

(३) केचित्तु शंवति शमीवने कंवति करीषवति करीरवने वेति व्याचक्षते।

(४) तस्य श्मशानस्य पश्चात् चित्रं दर्शनीयं वनगिरिदेवगृहादिकं पश्चाद् भवति।

(५) वाशब्देन पश्चाद्वा।

(६) यदा एतत्कर्मार्थं ग्राममध्यात् बहिरागम्यते तदा कश्चिद्यजमान-पुरुषो ग्रामतो ग्राममध्यात् तेजनीं तृणपूलकमुच्छ्रित्य वंशादिबद्धामूर्ध्वी-कृत्य तत्रागच्छेत् न न्यस्येत् तां तेजनीं नीचैर्भूमौ न निदध्यात्। किन्तु यावत्कालं कर्म भवति तावत्कालमुत्तरस्यां दिशि धारयेत् कर्मान्ते धृतामेव गृहं प्रति नीत्वा गृहेषूच्छ्रयेत्।

"तां न न्यस्येद् धृत्वा वैनामुद्वा वा गृहेषूच्छ्रयेत्" (श०ब्रा० १३-८-३-१२) इति श्रुतेः ॥ २६ ॥

दिक्स्रक्ति पुरुषमात्रं मिमीते ॥ २७ ॥

तच्छ्मशानं(१) दिक्स्रक्ति पुरुषमात्रं मेयम् ॥ २७ ॥

उत्तरतः पृथु पश्चाच्च(२) ॥ २८ ॥

कर्तव्यम् ॥ २८ ॥

विहृत्य स्रक्तिषु शङ्कूनाहन्ति ॥ २९ ॥

(३)'विहृत्य' इति मित्वा कोणेषु शङ्कूनाहन्ति ॥ २९ ॥

पालाशं पुरस्ताच्छामीलवारणदेहशङ्कूनन्यासु ॥ ३० ॥

स्रक्तिषु अप्रदक्षिणम्(४) ॥ ३० ॥

देहशङ्कुर्वृत्रशङ्कुः(५) ॥ ३१ ॥

वृत्रः पाषाणः। "वृत्रशङ्कुं दक्षिणतः" (श०ब्रा० १३-८-४-१) इति श्रुतेः ॥ ३१ ॥

अपसलविसृष्टया रज्ज्वा परितत्यापेतो यन्त्विति पलाशशाखया व्युदूहति ॥ ३२ ॥

अपसलविसृष्टा—अप्रदक्षिणवलिता, तया परितत्य "अपेतो यन्तु" (६)इत्यनेन मन्त्रेण पलाशशाखया व्युदूहति मितप्रदेशम् ॥ ३२ ॥

---

(१) दिक्कोणमित्यर्थः। "पैतृक्यां द्विपुरुषं समचतुरस्रं कृत्वा करणीमध्येशङ्कवः स समाधिः" (शु० सू० २-६) इत्युक्तविधिना श्मशानार्थं क्षेत्रं प्रमेयम्।

(२) उत्तरस्यामीशानपार्श्वे विस्तीर्णं विपुलं भवति। एवमपरस्यां दिशि वायव्यपार्श्वे च। (३) तत्क्षेत्रमिति शेषः।

(४) उत्तरतः पश्चादुदक्षिणेति क्रमेण। उत्तरस्यां स्रक्तौ वृत्रशङ्कुः "वृत्रो वै सोम आसीत्तस्यैतच्छरीरं यद्गिरयो यदश्मानः" (श० ब्रा० ४-२-५-१५) इति वचनाद्वृत्रोऽश्मा, ततश्चाश्ममयः शङ्कुः, पश्चिमायां वारणशङ्कुः, दक्षिणस्यां शमीशङ्कुः, पूर्वस्यां पालाशशङ्कुरिति दिक्।

(५) इदं सूत्रं नास्ति बर्लिनमुद्रितपुस्तके मूलपुस्तके च।

(६) अपसलविसृष्टया अप्रादक्षिण्येन निष्पादितया रज्ज्वा तत्क्षेत्रं समन्तादप्रदक्षिणं संवेष्ट्य "अपेतो यन्तु" (वा० सं० ३५-१) इति मन्त्रेण क्षेत्रमध्यपतितं तृणपर्णादिकं पलाशशाखया कृत्वा क्षेत्राद्बहिर्निष्कासयतीति।

**दक्षिणा शाखां निरस्य परिश्रिद्भिः परिश्रयति (१)पूर्ववदपरिमिताभिः ॥ ३३ ॥**

गार्हपत्य( चिति ) परिश्रिदपेक्षया इहापरिमितत्वम् । एवं हि श्रूयते—"यजुषा ताः परिश्रयति तूष्णीमिमाः" ( श० ब्रा० १३-८-२-२ ) इति । यजुषा च परिश्रयणं गार्हपत्यपरिश्रिताम् ॥ ३३ ॥

**औदुम्बरसीर उत्तरतो वा षड्गवे युज्यमाने युङ्क्तेति सम्प्रेष्य सविता त (२)इति जपति ॥ ३४ ॥**

'प्रेषितेन योजनमौदुम्बर(३)सीरेऽस्यः षड्भिर्बलीवर्दैर्युज्यमाने 'सविता ते' इति जपति । सम्प्रेषणजपौ याजमानौ ॥ ३४ ॥

इत्येकविंशेऽध्याये तृतीया कण्डिका ।

**अनुरज्जु चतस्रः सीताः कृषति वायुः पुनात्विति प्रतिमन्त्रम् ॥ १ ॥**

**उत्तरतः प्रतीचीं प्रथमाम् ॥ २ ॥**

"अग्नेर्भ्राजसा सूर्यस्य वर्चसा"(४) इति चात्र(५) 'कृषामि' इत्यध्याहारः साकाङ्क्षत्वात् ॥ २ ॥

---

( १ ) 'पूर्ववत्' इति "ऊर्ध्वाः शर्कराः खाते" (का० श्रौ० १६-८-२६) "रज्ज्वा सहितं बहीरज्ज" ( का० श्रौ० १६-८-२३ ) इति पूर्वोक्तरीत्येत्यर्थः । अपरिमिताभिः एकविंशतिसंख्यातोऽधिकाभिरित्यर्थः ।

( २ ) ततोऽध्वर्युस्तां पलाशशाखां दक्षिणस्यां निरस्य परिश्रिद्भिर्वेष्टयित्वा तत्क्षेत्रस्य दक्षिणत उत्तरतो वा षड्भिरनडुद्भिः सीरं युनक्ति तस्मिन् युज्यमाने यजमानो 'युङ्क्त' इति संप्रेष्य "सविता ते" ( वा० सं० ३५-२ ) इति मन्त्रं जपति ।

( ३ ) हलेन रेखायाः पादं प्रतिकृषात ।

( ४ ) अध्वर्युः परितो वेष्टितां रज्जुमनुलक्षीकृत्य "वायुः पुनातु" ( वा० सं० ३५-३ ) इति प्रतिमन्त्रं पादेन पादेन चतस्रः सीताः अप्रदक्षिणं कृषति । तत्र प्रथमां सीतामुत्तरपार्श्वे प्रतीचीं कृषति । दक्षिणतः सीरयोजनपक्षेऽपि तत्सीरमप्रदक्षिणमुत्तरत आनीय प्रथममुत्तरत एव कृषति । "तदपसलवि पर्याहृत्योत्तरतः प्रतीचीं प्रथमाᳬ सीतां कृषति वायुः पुनात्विति, सविता पुनात्विति, जघनार्धेन दक्षिणाऽग्नेर्भ्राजसेति दक्षिणार्धेन प्राचीᳬ, सूर्यस्य वर्चसेत्यग्रेणोदीचीम्" ( श० ब्रा० १३-८-२-६ ) इति श्रुतेः । ( ५ ) इत्यत्र चेत्यर्थः ।

अपरिमिता मध्ये तूष्णीम् ॥ ३ ॥

सीताः कृषति(१) ॥ ३ ॥

अनडुहो विमुच्य (२)विमुच्यन्तामिति दक्षिणा सीरं निरस्याश्वत्थे व (३)इति सर्वौषधं वपति ॥ ४ ॥

कृष्टे ॥ ४ ॥

सविता त इति शरीराणि निवपति मध्ये ॥ ५ ॥

(४)"सविता ते" इत्यनेन मन्त्रेण कृष्टमध्ये शरीराणि निवपति ॥५॥

तूष्णीमन्यः कुम्भमाक्ष्णोति दक्षिणाऽनवानन्त्सृत्वा॥६॥

अन्यः-अध्वर्युव्यतिरिक्तः (५)तूष्णीमनवानं(६) दक्षिणा गत्वा कुम्भमाक्ष्णोति क्षिपतीत्यर्थः । भिनत्ति इत्यपरे ॥ ६ ॥

प्रत्यागते परं मृत्यविति जपति ॥ ७ ॥

प्रत्यागते क्षेप्तरि "परं मृत्यो" (७)इति जपति ॥ ७ ॥

(८)शं वात इति यथाङ्गं कल्पयित्वेष्टकां निदधाति मध्ये तूष्णीम् ॥ ८ ॥

"अथैनं यथाङ्गं कल्पयति" ( श० ब्रा० १३-८-३-५ ) इति श्रुतेः । 'तूष्णीम्' इति लौकिकवागुच्चारणप्रतिषेधः ॥ ८ ॥

---

( १ ) एवं चतुर्षु पार्श्वेषु मन्त्रेण कर्षणं कृत्वा अथ तस्यैव क्षेत्रस्य मध्येऽप्रादक्षिण्येन तूष्णीमेव कर्षणमपरिमितं कार्यमित्यर्थः ।

( २ ) विमुच्यन्ताम्० ( वा० सं० ३५-३ )

( ३ ) अश्वत्थे वः० ( वा० सं ३५-४ )

( ४ ) सविता ते० ( वा० सं० ३५-५ ) इत्यनेन मन्त्रेण तस्य पुरुषमात्रस्य क्षेत्रस्य मध्ये शरीराणि मृतस्य अस्थीनि अस्थिनिधानकुम्भाद्बहिर्निष्कास्य राशीकरोति । एतच्च सूर्योदयकालं कर्तव्यम् । "यथा कुर्वतोऽभ्युदियात्" ( श० ब्रा० १३-८-३-२ ) इति श्रुतेः ।

( ५ ) अवृतो ब्राह्मणः ।

( ६ ) श्वासोच्छ्वासरहितं यथा स्यात्तथा ।

( ७ ) परं मृत्यो० ( वा० सं० ३५-७ )

( ८ ) "शं वातः०" ( वा० सं० ३५-८ ) इति मन्त्रद्वयेन तानि मध्ये न्युप्तान्यस्थीनि यथाङ्गं कल्पयित्वा यदस्थि यस्याङ्गस्य तेनास्थ्ना तदङ्गकल्पनया प्राक्शिरसं पुरुषाकृतिं कृत्वा तन्मध्ये पादमात्रामिष्टकां तूष्णीं निदधाति ।

प्रतिदिशमन्तेषु (१)पराचीस्तिस्रस्तिस्रो ऽलक्ष-
णाः पादमात्रीः ॥ ९ ॥

'पराचीः' इति नाभ्यात्मम् ॥ ९ ॥

(२)प्रदरात्पुरीषमाहृत्य परिकृष्य वा सर्वतो
ऽपुरस्तात् ॥ १० ॥

पुरीषं प्रक्षिपति श्मशाने ॥ १० ॥

शर्करा अनग्निचितः(३) ॥ ११ ॥

शर्करा इष्टका भवन्ति ॥ ११ ॥

ऊर्द्ध्वप्रमाणमास्यं ब्राह्मणस्य ॥ १२ ॥

(४)श्मशानं भवति। ततश्च परिश्रितस्तावत्प्रमाणा भवन्ति ॥१२॥

(५)उरः क्षत्रियस्य ॥ १३ ॥

प्रमाणम् ॥ १३ ॥

ऊर्द्ध्वबाहु वा ॥ १४ ॥

'वा' इति विकल्पः ॥ १४ ॥

ऊरू वैश्यस्य ॥ १५ ॥

उपस्थः स्त्रियाः १६ ॥

(६)जानु शूद्रस्य ॥ १७ ॥

---

( १ ) पराचीः पूर्वापराः नाभ्यात्मम्। लक्षणं लेखाः तद्रहिताः।

( २ ) प्रकर्षेण स्वयमेव दीर्णो भूप्रदेशः प्रदरः तस्मात्पुरीषमाहृत्य श्मशाने निवपति। अथवा सर्वतः सर्वाभ्यो दिग्भ्यः परिकृष्य परिकर्षणं कृत्वा पुरीषमाहृत्य श्मशाने निवपति। अपुरस्तात् प्राच्या दिशः पुरीषाहरणं न कर्तव्यम्।

( ३ ) अनग्निचितः संस्कार्यस्य इष्टकास्थाने त्रयोदश शर्कराः पाषाणा उपधेयाः तेष्वेव स्थानेषु तद्वदेव।

( ४ ) संस्कार्यो ब्राह्मणश्चेत्तन्मुखस्थानं पुरीषावापेन श्मशाने उच्चं तावत्प्रमाणं कर्तव्यम्। एवमग्रेऽपि।

( ५ ) उरो हृदयम् तत्प्रमाणमित्यर्थः।

( ६ ) शूद्रस्य शूद्रदौहित्रस्य रथकारस्य जानु जङ्घा प्रमाणम्। अत्र हरिस्वामिनः—यद्यपि शूद्रोऽग्निचिन्नास्ति अग्निचितश्चायमधिकारः तथापि परिमाणप्रसङ्गादाचारतः प्राप्तस्यामन्त्रकस्य परिमाणमाहेति।

प्रमाणम् ॥ १७ ॥

**सर्वेषां वाऽधोजानु ॥ १८ ॥**

प्रमाणम्। 'वा'शब्दो विकल्पार्थः ॥ १८ ॥

**अवकाभिः कुशैश्च प्रच्छाद्य ॥ १९ ॥**

**परिकृष्टं चेद्यवान्वपेत् ॥ २० ॥**

यदि परिकृष्टं-पुरीषं ततश्च(१) तत्र यवानां वापः श्रुति(२) क्रमेण॥२०॥

**(३)दक्षिणतः कुटिले कर्षू खात्वा क्षीरोदकाभ्यां पूरयन्ति सप्तोत्तरतः प्राचीरुदकस्य ॥ २१ ॥**

कर्षून्पूरयन्ति ॥ २१ ॥

**त्रींस्त्रीनावपन्त्यश्मनः ॥ २२ ॥**

अमात्याः कर्षुषु ॥ २२ ॥

**अध्यधिगच्छन्त्यश्मन्वतीरिति ॥ २३ ॥**

अनेन मन्त्रेण (४)कर्षुषु ॥ २३ ॥

**अपाघमित्यपामार्गैरपमृजते ॥ २४ ॥**

"अपाघम्" (५)इत्यनेन मन्त्रेण (६)अपामार्गैरात्मानममात्या अपमृजन्ति ॥ २४ ॥

**सुमित्रिया न इति स्नात्वा ऽहतवाससो ऽनडुत्पुच्छमन्वारभ्यानड्वाहमित्युद्वयमित्यागच्छन्ति ॥ २५ ॥**

---

(१) परिकृष्टात्पुरीषाहरणपक्षे न तु प्रदरात्पुरीषाहरणे।

(२) "कृत्वा यवान्वपति" ( श० ब्रा० १३-८-३-१३ ) इत्यादि।

(३) श्मशानस्य दक्षिणतः ईषद्वक्रे कर्षू गर्तौ खात्वा पूर्वदिनोपक्लृप्तैः घटैः दुग्धेन उदकेन च पूरयन्ति। 'पूरयन्ति' इति बहुवचनात्प्रकृता अध्वर्युयजमानामात्याः। तथा श्मशानस्योत्तरतः सप्त कर्षून् प्राचीः प्रागायतान् दक्षिणोत्तरान् दक्षिणसंस्थान् खनन्ति। तांश्च प्रागुपक्लृप्तैः घटैः केवलेनोदकेन पूरयन्ति।

(४) अध्वर्युयजमानामात्यास्त्रीन्पाषाणान्प्रक्षिप्य "अश्मन्वती०" (वा०सं० ३५-१०) इति मन्त्रेण तद्गर्तोपरि गच्छन्ति। अश्मसु पादान् निदधत उदकं गच्छन्तीति वासुदेवः।

(५) ते अमात्या यज्ञोपवीतिनो भूत्वाऽप उपस्पृश्य हस्तगृहीतरपामार्गैः अपामार्गबीजैर्वा "अपाघमप०"(वा०सं० ३५-११) इत्यनेन मन्त्रेण स्वशरीरं शोधयन्ते। (६) 'अपामार्गोद्वर्तनेनामात्या' इ० पा०।

"सुमित्रिया न"(१) इति स्नात्वा अहतानि वासांसि परिधाय "अनड्वाहम्" इत्यनेन मन्त्रेणानडुत्पुच्छमन्वारभ्य "उद्वयम्" इत्याग· च्छन्ति ॥ २५ ॥

**ग्रामश्मशानान्तरे मर्यादालोष्टं निदधातीमं जीवेभ्य इत्यनेन मन्त्रेण ॥ २६ ॥**

अनेन (२)मन्त्रेण "मर्यादाया एव लोष्टमाहृत्य" ( श० ब्रा० १३-८-४-१२ ) इति वचनात् ॥ २६ ॥

**अञ्जनाभ्यञ्जने कृत्वौपासनं परिस्तीर्य वारणान्प· रिधीन्परिधाय वारणेन स्रुवेणैकामाहुतिं जुहोत्यग्न आयूꣳष्यायुष्मानग्न इति ॥ २७ ॥**

(३) अञ्जनमक्ष्णोः, अभ्यञ्जनं(४) च पादयोः कृत्वा औपासनं परि· स्तीर्य वारणान्परिधीन्परिधाय परिधानोपदेशाच्चत्वारः परिधयः । वा· रणेन स्रुवेणैकामाहुतिं जुहोति "अग्नऽ आयूꣳषि" "आयुष्मानग्न"(५) इति द्वाभ्यामृग्भ्याम् । औपासनश्चात्र कर्तृसम्बन्धी न प्रेतसम्बन्धी । तेन ह्यसौ विहितकर्मानुष्ठानसाधनभावायाहित इति(६) तत्परिधीनां च संस्कारो न भवति, अपूर्वत्वात् ॥ २७ ॥

**अथैषां परिदां वदति(७)परीमे गामनेषतेति ॥ २८ ॥**

---

( १ ) सुमित्रिया न० ( वा०सं० ३५-१२ ) इति मन्त्रेण स्नात्वा नू· तनवस्त्राणि परिहितवन्तः "अनड्वाहम्०" (वा०सं० ३५-१३) इति म· न्त्रेण वृषपुच्छमन्वारभ्य "उद्वयं तम०" ( वा० सं० ३५-१४ ) इति म· न्त्रेण यजमानामात्या ग्राममागच्छन्ति । यद्यपि अत्र 'सुमित्रिया न०' इति मन्त्रेण स्नानमुक्तम् तथापि "सुमित्रिया न इत्यपोऽञ्जलिनादाय दुर्मि· त्रिया इति द्वेष्यं परिषिञ्चति" ( का० श्रौ० १९-५-१५ ) इति द्वयं वि· धेयम् , "दुर्मित्रिया...द्विष्म इति यामस्य दिशं द्वेष्यः स्यात्तां दिशं परा सिञ्चेत् तेनैव तं पराभावयति" ( श० ब्रा० १३-८-४-५ ) इति श्रुतेः ।

( २ ) स्वनिवासग्रामस्य श्मशानस्य च मध्ये मर्यादालोष्टं महत्तरं मृत्खण्डमध्वर्युर्निदधाति "इमं जीवेभ्यः" ( वा० सं० ३५-१५ ) इति मन्त्रेण । ( ३ ) कज्जलादिना । ( ४ ) तैलेन ।

( ५ ) अग्नऽ आयूꣳषि० ( वा० सं० ३५-१६, १७ )

( ६ ) अग्निस्तस्यैव प्रेतस्यौपासनः स हि एवमर्थमेव धारणीयः 'अद्वारेण च निरसनीयः' इति श्रुत्यन्तरादिति हरिस्वामिनः ।

( ७ ) परीमे गामनेषत० ( वा० सं० ३५-१८ )

'अथ' शब्दो मङ्गलार्थः। पित्र्यं कर्म निवृत्तमिति। आनन्तर्यार्थमित्यपरे। ततश्चानन्तरमर्थलक्षणमपि न कर्तव्यम्। पदिदावादश्च यजमानविषयोऽमात्यविषयश्च। तेन 'एषाम्' इत्युक्तम्॥ २८॥

**अद्वारेणौपासनं निरस्यति क्रव्यादमिति॥ २९॥**

(१)अनेन मन्त्रेण। औपासनश्च यस्मिन्नाहुतिर्हुता स एव ग्रहीतव्यो न प्रेतौपासनः। तस्यैकदेशं निरस्यति। स एव ह्यानन्तर्यात्सम्बध्यते। (२)तदेकदेशं निरस्यति। तथा च मन्त्रवर्णः—"इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन्" इति। जपमन्त्र एतदभिधीयते—एकदेशो निरस्तः। एकदेशे इतरशब्दो वर्तत इति॥ २९॥

**(३)इहैवायमिति जपति॥ ३०॥**

**आसन्दी सोपधाना दक्षिणानड्वान्यवाँश्च सर्वं पुराणं भूयसीश्चेच्छन्॥ ३१॥**

(४)भूयसीश्च इच्छन्॥ ३१॥

इत्येकविंशेऽध्याये चतुर्थी कण्डिका।

इत्युपाध्यायकर्कविरचिते कात्यायनसूत्रभाष्ये एकविंशतितमोऽध्यायः समाप्तः।

# द्वाविंशोऽध्यायः।

**अथैकाहाः॥ १॥**

उक्तान्याधानादीन्यध्वर्युवेदविहितानि पितृमेधान्तानि कर्माणि। इदानीं छान्दोग्यवेदविहितान्येकाहादीनि सत्राणि व्याचिख्यासुरा-

( १ ) आहुतिहोमानन्तरं यस्मिन्नाहुतिर्हुता तस्यौपासनस्यैकदेशं "क्रव्यादमग्निम्०" ( वा० सं० ३५-१९ ) इति मन्त्रेण निरस्यति। प्रेतस्यैवौपासन इति पक्षे सकलो निरसनीय इति हरिस्वामिनः। औपासनः प्रेतस्यैव, मन्त्रवर्णाद्विभागानुपदेशाच्च इति वासुदेवः।

( २ ) 'तदेकदेशो निरस्यते' इ० पा०।

( ३ ) इहैवायमितरो० ( वा० सं० ३५-१९ ) इति जपति यजमानः।

( ४ ) उपधानम् उच्छीर्षकं तत्सहिता आसन्दी पुराणा दक्षिणा, एवं पुराणो वृद्धोऽनड्वान् वृषभो दक्षिणा, पुराणा जीर्णा यवाश्च दक्षिणाऽस्य यागस्य भवति। इतोऽप्यधिकं दातुमिच्छन् यजमानो हिरण्यादिकं भूयसीत्वेन दद्यादित्यर्थः।

चार्य इदमाह-अथैकाहा इति। तत्रायम् 'अथ'शब्दोऽधिकारान्तरप्रस्ता-त्यर्थः। वेदान्तरविहितानि कर्माणि व्याख्यातुमधिक्रियन्ते। अधि-कारान्तरप्रस्तुतेः किं प्रयोजनमिति चेत्? इह चोदकपरिप्राप्ताङ्गपदार्थ-व्यतिरेकेणोद्गातुः कर्तृत्वं यथा स्यादिति। कुत एतदिति चेत्? उद्गातृवेदसमधीतत्वात्समाख्ययोद्गातुरेव कर्तृत्वमिति।

ननु च सर्व एवैते उद्भिदादय उद्गातृवेदसमधीताः? सत्यमेवं, प्रधानेषु न समाख्यया कर्तृत्वम्, 'उद्भिदा यजेत पशुकामः' इति सर्व-प्रत्युपदेशात्। अङ्गेषु त्वपूर्वेषु समाख्यया कर्तृत्वमिष्यते। यानि पुन-श्चोदकप्राप्तानि तान्यपि गृहीतकर्तृकाण्येवेति। (१)एकाहाः 'व्याख्या-स्यन्त' इति सूत्रशेषः। एकाहैश्चोपलक्षणमहीनसत्त्राणामपि ॥ १ ॥

अवचने ऽग्निष्टोमः ॥ २ ॥

संस्थान्तरस्यावचनेऽग्निष्टोमो भवति। न्यायसूत्रमेतत्। प्राथम्या-दविरोधान्नित्यत्वाच्चाग्निष्टोम एव भवति ॥ २ ॥

भूर्धेनुदक्षिणः ॥ ३ ॥

भूर्नामा एकाहस्स धेनुदक्षिणो भवति। तद्दक्षिणासंयोगेन धेनुवि-धानात्सकलस्य दाक्षिण्यस्य निवर्तिका धेनुः। अत्र च दक्षिणाभिमन्त्र-णमन्त्रो विपरिणस्यते ॥ ३ ॥

ज्योतिः ॥ ४ ॥

ज्योतिर्नाम एकाहः,(२) नात्र कश्चिद्विशेषः ॥ ४ ॥

गोआयुषी उक्थ्यौ ॥ ५ ॥

एको गौः अपर आयुः। तावुक्थ्यसंस्थौ भवतः ॥ ५ ॥

अभिजिद्विश्वजितौ ॥ ६ ॥

(३)अपरावेकाहौ ॥ ६ ॥

(४)सहस्रमभिजितो दक्षिणा ॥ ७ ॥

ततश्च यत्सहस्रसंख्यासंयोगेन श्रूयते, तदत्र भवति। यथाश्वदा-स्यग्रहणम् (५)तिस्रोऽनूबन्ध्यास्त्रैधातवी'(६) इति ॥ ७ ॥

---

(१) एकसुत्याः क्रतव इत्यर्थः। (२) अग्निष्टोमसंस्थः।

(३) अग्निष्टोमसंस्थौ। (४) सहस्रं गवाम्।

(५) "सत्रसहस्रसर्ववेदसवाजपेयराजसूयविश्वजित्सर्वपृष्ठेषु ग्रह-णमवकाशश्चेत्" (का० श्रौ० १२-५-११) इत्युक्तेः। ग्रहणम् अश्व-दास्यग्रहणम्।

(६) "संवत्सरावरेषु सत्रेष्वसारस्वतेषु सहस्रदक्षिणावरेषु च" (का० श्रौ० १३-४-५) क्रतुषु तिस्रोऽनूबन्ध्या भवन्ति इत्यर्थः। 'त्रैधा-तव्युदवसानीया सर्वत्र' (का० श्रौ० १३-४-८) इत्युक्तेः।

शताश्वं वा ॥ ८ ॥

शतमश्वानां यस्मिन्सहस्रे तच्छताश्वं सहस्रम् । तद्वाऽभिजिद्दक्षिणेति विकल्पः ॥ ८ ॥

सहस्रं सर्ववेदसं विश्वजितः ॥ ९ ॥

सहस्रसर्ववेदसयोर्विश्वजिति विकल्पः । सर्ववेदसपक्षे इदमुच्यते॥९॥

ज्येष्ठं पुत्रमपभज्य भूमिशूद्रवर्जं योगाविशेषात्सर्वेषाम् ॥ १० ॥

ज्येष्ठपुत्रस्य विभागं दत्त्वा भूमिशूद्रवर्जं ददाति । कुत एतत् ? सर्वमनुष्याणां हि भूम्या योगोऽविशिष्टः धारणं(१) चङ्क्रमणद्वारेण । शूद्रस्य च शुश्रूषोपनतत्वेनेति ॥ १० ॥

शूद्रदानं (२)वा दर्शनाविरोधाभ्याम् ॥ ११ ॥

'वा' शब्दः पक्षव्यावृत्तौ । शूद्रस्य दानं भवति । दृश्यते हि शूद्रस्य दानं पुरुषमेधे "सपुरुषं प्राची दिग्घोतुः" (श०ब्रा० १३-६-२-१८) इति । न च विरोधो गर्भदासस्य । तस्माच्छूद्रो दीयत एव । अनेन च न्यायेन भूमेरप्येकदेशदाने नैव विरोधः । क्वचिच्च दृश्यते "सभूमि सपुरुषम्" (श० ब्रा० १३-७-१-१३ ) इति ॥ ११ ॥

द्रव्याभावात्तदन्तः ॥ १२ ॥

दक्षिणादानान्तो विश्वजिद्भवति । कुत एतत् ? द्रव्याभावात् । सर्वस्वदाने सति द्रव्यमेव नास्ति इति तदन्तो विश्वजित् ॥ १२ ॥

समाप्तिर्वा चोदितावभृथश्रुतेः ॥ १३ ॥

'वा' शब्दः पक्षव्यावृत्तौ । समाप्येत वा विश्वजित् । चोदितो ह्यसौ "विश्वजिता यजेत" इत्यपवर्गपर्यन्त आख्यातार्थः । अपि चावभृथश्रुतिर्भवति । "अवभृथादुदेत्य वत्सछविं परिदधाति" (ला०सू० ८-२-१) इति वत्सछविपरिधानविधिपरे वाक्ये अवभृथं दर्शयति ॥ १३ ॥

(३)दीक्षासु चापदेशात् ॥ १४ ॥

दीक्षासु च क्रत्वभिनिर्वृत्त्यर्थं द्रव्यमपदिष्टम्(४) । अतस्तद्व्यतिरिक्तं

(१) भूमेस्तावद्धारणशयनासनचङ्क्रमणादिसम्बन्धः सर्वेषामविशिष्टः । यः शूद्रो धर्मार्थं सेवां कुरुते सोपि सर्वेषामविशिष्ट एव ।

(२) 'वा' अवधारणे । भृत्या स्वीकृतस्य शूद्रस्य दानं भवति ।

(३) दीक्षास्वेव क्रत्वर्थस्य द्रव्यस्य अन्यस्मै अपदेशात् ।

(४) "क्रत्वर्थमपदिश्यान्यस्मा०" (का०श्रौ०७-२-७) इति सूत्रेण ।

सर्वस्वमिति ॥ १४ ॥

न समत्वात् ॥ १५ ॥

नैतदेवं युक्तं 'विश्वजित्समाप्येत' इति। समं ह्येतदुभयं 'विश्वजिता यजेत' इति समाप्तिश्चोदिता, 'सर्वस्वञ्च ददाति' इति च सर्वस्वदानम्। अतो विरोधाद्विकल्प एव युक्तरूपः। एवं स्थिते पुनः आधीतेन व्याख्यायते। सममेतदिति चेत्? नैतत्समम्। विश्वजिता यजेत' इति पूर्वचोदना प्रधानचोदना च। 'सर्वस्वं ददाति' इति गुणचोदना पश्चात्कालवाचिनी च। तेन विरोधे सति अयमेवार्थो ग्रहीतुं न्याय्य इति। विकल्पश्च तुल्यत्वे भवति, न चेह तुल्यत्वमित्युक्तम् ॥१५॥

विश्वजिति सहस्रसर्ववेदसयोर्विकल्प उक्तः। तत्र सन्देहः किं प्रागपि सहस्रात्सर्ववेदसं भवति, उतोर्ध्वं सहस्रादिति। किं तावत्प्राप्तम्? सूत्रेणैवोपक्रमः—

परिमाणे सर्वमविशेषात् ॥ १६ ॥

(१)सर्वस्वपरिमाणे मृग्ये यस्य यावत्स्वं तत्सर्वं गृह्यते। 'सर्वं वेदः सर्ववेदसम्' इति। तेन प्रागपि सहस्रात्सर्ववेदसं भवति ॥ १६ ॥

एवं प्राप्त आह—

अधिकं वा प्रकृत्यनुग्रहात् ॥ १७ ॥

अधिकं वा सहस्रात्सर्ववेदसं ग्रहीतव्यम्। प्रकृत्य हि सर्ववेदसं सहस्रेणानुग्रहं दर्शयति—"कोऽर्हति मनुष्यः सर्ववेदसं दातुं, तस्मात्सहस्रं देयम्" इति। एतच्च सहस्रादधिके उपपद्यते नेतरथा ॥ १७ ॥

एवं तावदत्र सहस्राधिकं सर्ववेदसमित्युक्तम्। अन्यत्रापि प्रतिहर्त्रपच्छेदादौ सहस्राधिके प्राप्ते आह—

नानित्यत्वात् ॥ १८ ॥

नैतदेवम्—सहस्रादधिकं सर्ववेदसमिति। न हि नित्ये कस्मिंश्चित्परिमाणविशेषे सर्ववेदसशब्दः प्रसिद्धः। यच्चास्य वेदः सर्वं तत्सर्वस्वमिति ॥ १८ ॥

कर्मशब्दाच्च ॥ १९ ॥

अस्ति चायं लोके (२)व्यापारशब्दः सर्वमनेन दत्तमिति। तस्मा-

(१) सर्वस्वपरिमाणे अपेक्षिते सर्वस्वं यस्य यावद्धनं गृहे सुवर्णादि तत्सर्वं देयम्। कुतः? अविशेषात्। न च 'सर्वं ' ददाति' इति वाक्यशेषः श्रुतः, येन सहस्रान्न्यूनमतिरिक्तं वेति विशेष आश्रीयते।

(२) कर्मशब्दस्य पर्यायः।

त्प्रागपि सहस्रात्सर्वस्वमिति । विश्वजिति तु लिङ्गेन व्यवस्था ॥१९॥

अवभृथादुदेत्य रौहिण्यौ वत्सछव्यौ सकर्णपुच्छा- ऽवछाते परिदधाते ॥ २० ॥

अवभृथादुत्थाय रौहिण्यौ वत्सछव्यौ सकर्णपुच्छावच्छिन्ने (१)परिदधाते(२) ॥ २० ॥

द्वादशरात्रं परिवसत्युखावदग्निं बिभ्रत ॥ २१ ॥

(३)उखावदिति वैणवीम् ॥ २१ ॥

औदुम्बरीं वा ॥ २२ ॥

(४)उष्णीषं च ॥ २३ ॥

(५)तिस्रस्तिस्रः ॥ २४ ॥

द्वादशरात्रस्य विभागः ॥ २४ ॥

औदुम्बरे मूलफलभक्षः ॥ २५ ॥

औदुम्बरबहुले देशे मूलफलभक्षस्तिस्रो रात्रीर्वसति ॥ २५ ॥

निषादे ॥ २६ ॥

(६)निषादानां मध्ये अपरास्तिस्रो वसति ॥ २६ ॥

जने ॥ २७ ॥

तिस्रो रात्रीर्वसति ॥ २७ ॥

समाने जने ॥ २८ ॥

अपरास्तिस्रः ॥ २८ ॥

अप्रसिद्धत्वात्स्वयमेवाह—

वैश्यो जनो राजन्यः समानजनः श्रुतेः ॥ २९ ॥

---

( १ ) परिदधीयाताम् ।

( २ ) रक्तवर्णे वत्सस्य चर्मणी सकर्णपुच्छे अवच्छाते अवच्छिन्ने परिदधाते ।

( ३ ) 'उखावत्' इति वैणवी सुषिरा कल्माषी ( का० श्रौ० १६-२-५ ) अतिदिश्यते एवंविधामौदुम्बरीं वाऽग्निं बिभ्रत् द्वादशरात्रं वक्ष्यमाणेषु स्थानेषु वसति ।

( ४ ) शिरोवेष्टनमित्यर्थः ।

( ५ ) एकैकस्मिन्स्थाने यजमानस्तिस्रस्तिस्रो रात्रीर्वसति ।

( ६ ) अरण्ये तिस्रो रात्रीर्निषादानां समीपे वसति ।

**ग्राम्याभोजनं निषादानां मृन्मयापानं च ॥ ३० ॥**

(१)निषादानां मध्येऽवस्थितस्यैष नियमः ॥ ३० ॥

**संवत्सरं न याचेत् ॥ ३१ ॥**

किञ्चिदपि ॥ ३१ ॥

**दीयमानं न प्रत्याचक्षीत ॥ ३२ ॥**

संवत्सरमेव ॥ ३२ ॥

**यमाभ्यां (२)वा यजेत पूर्वापराभ्याम् ॥ ३३ ॥**

यमाभ्यां वा-अभिजिद्विश्वजिद्भ्यां यजते। तत्र पूर्वं कृत्वाऽपरः क्रियते। पौर्वापर्ये हि 'यम'शब्दो लोके दृष्टः ॥ ३३ ॥

एवं प्राप्त आह—

**युगपद्वा ॥ ३४ ॥**

'वा' शब्दः पक्षव्यावृत्तौ। न पौर्वापर्येण, किं तर्हि? युगपदेव। न हि कर्मणोः पौर्वापर्ये 'यम'शब्दो वर्तते। तस्मात्सहैव क्रिया। यत्तु लोके पौर्वापर्येऽपि 'यम'शब्दो दृश्यते, तत्रान्यथोपपद्यत इति ॥ ३४ ॥

यमयागपक्षे कर्म निरूप्यते—

**दक्षिणोत्तरे(३) देवयजने ॥ ३५ ॥**

भवतः ॥ ३५ ॥

तत्र च—

**दक्षिणमभिजितः ॥ ३६ ॥**

भवति ॥ ३६ ॥

**पत्नीशालमुत्तरे ॥ ३७ ॥**

---

(१) तत्र वसता यजमानेन निषादानां सम्बन्धि यद्ग्राम्यं व्रीहि-यवादि तस्याभोजनम्। मृन्मयापानं च तत्र वसता मृन्मयपात्रेणोदक-पानं न कर्तव्यमित्यर्थः।

(२) अथवा विश्वजिदभिजिद्भ्यां यमाभ्यां दर्शपूर्णमासवत्संह-ताभ्यां यजेत। पूर्वमभिजितेष्ट्वाऽनन्तरमवश्यं विश्वजिता यजेतेत्यर्थः।

(३) तत्र—आद्यैर्दक्षिणतः कार्यमाद्यकार्यं द्वितीयकैः।
उत्तरे दक्षिणे कार्यं द्वितीयानां तृतीयकैः॥
स्वीयं चोत्तरतः कार्यं द्वितीयानाञ्चतुर्थकैः।
कथंचिद्यत्र नो यौगपद्यं युज्येत तत्र तु॥
मुख्यैरेवोभयत्रापि कार्यं दक्षिणतः पुरा॥

देवयजने भवति ॥ ३७ ॥

नानर्त्विजः ॥ ३८ ॥

नाना पृथक्पृथगृत्विजो भवन्ति, देशभेदात् ॥ ३८ ॥

त एव वा प्रभूत्वात् ॥ ३९ ॥

त एव वा ऋत्विजो भवन्ति, न पृथक्त्वेन। प्रभवन्ति हि ते उभयोरपि देवयजनयोः। दक्षिणेऽध्वर्युराध्वर्यवं करोति। विरोधादुत्तरे प्रतिप्रस्थाता। उक्तमाचार्येण-"वचनविरोधाभ्यामन्यः" (का० श्रौ० १-८-३०) इति। इह च युगपत्प्रवृत्तौ षोडशसंख्यैव ऋत्विग्विषया भवति। क्रतुद्वयाभिनिर्वृत्त्यर्थतया ब्रह्मा व्रियते, तथोद्गात्रादयः। तस्मात्तैरेव क्रतुद्वयमपि निर्वोढव्यमिति(१) ॥ ३९ ॥

बाहिर्वे(२)दिकानि समानानि ॥ ४० ॥

बाहिर्वेदिकानि यान्यङ्गानि दीक्षणीयादीनि तानि समानानि भवन्ति, अगृह्यमाणविशेषत्वात् ॥ ४० ॥

नानेतराणि ॥ ४१ ॥

यानि पुनरान्तर्वेदिकानि तानि पृथग्भवन्ति। यथा—अग्नीषोमीयादीनि। गृह्यते एव हि विशेषस्तत्र ॥ ४१ ॥

कर्मसन्निपाते पूर्वं (३)पूर्वमभिजितः ॥ ४२ ॥

कर्म भवति। यथा-"सयजमाना धिष्ण्यानुतिष्ठन्ते" (का० श्रौ० ९-८-१२) इति ॥ ४२ ॥

(४)पृथक्सहस्रे दक्षिणा ॥ ४३ ॥

दक्षिणेऽपि 'देवयजने सहस्रमुत्तरेऽपि' इति सहस्रयुक्तं चोभयोर्भवति। 'त्रैधातवी तु बाहिर्वेदिकी' इति तन्त्रेण ॥ ४३ ॥

सर्वजित्समहाव्रतः संवत्सरदीक्षः सप्ताहाभिषवस्तिस्र उपसदः षड् वा ॥ ४४ ॥

सर्वजिन्नामैकाहः स समहाव्रतो भवति। संवत्सरं दीक्षा भवन्ति।

---

(१) कुतः? ब्रह्मादयो यत उभयत्र कर्म कर्तुं प्रभवन्ति।

(२) वेदिरत्र महावेदिः।

चात्वालोत्करशामित्रो वध्यश्वश्च समानकम्। इति।

(३) अभिषवधिष्ण्योपस्थानादौ सर्वर्त्विक्साध्ये पूर्वमभिजितः कर्म भवति।

(४) पृथक् गवां द्वे सहस्रे दक्षिणा।

संवत्सरादूर्ध्वं सप्ताहेऽतीते (१)सुत्या भवति। तत्र च तिस्र उपसदो भवन्ति चतस्रो दीक्षाः। षड् वा उपसदो भवन्ति एका दीक्षा ॥ ४४ ॥

**(२) अग्निवद्वा दीक्षाः ॥ ४५ ॥**

भवन्ति। उपसदां तु विकल्पः स्थित एव ॥ ४५ ॥

इति द्वाविंशेऽध्याये प्रथमा कण्डिका।

---

**शताश्वरथमध्वर्यवे ददात्यग्नौ चीयमाने ॥ १ ॥**

(३)शतं गवामश्वरथं चैकमग्नौ चीयमाने अध्वर्यवे ददाति। तच्च प्राग्धिष्ण्यचयनात्, 'चीयमान' इति श्रवणात्। तत्र च अध्वर्यवाहुतेः अपकर्षः क्रियते ॥ १ ॥

**उद्गात्रे (४)व्रतकाले ॥ २ ॥**

शताश्वरथं ददाति ॥ २ ॥

**होत्रे शस्त्रकाले ॥ ३ ॥**

व्रतसमनन्तरं यच्छस्त्रं तत्काले होत्रे ददाति ॥ ३ ॥

**ततो ब्रह्मणे ॥ ४ ॥**

तत्समनन्तरमेव च ब्रह्मणे ददाति। 'शताश्वरथम्' इत्यनुवर्तते ॥४॥

**दक्षिणाकाले सर्वेभ्यः सहस्रम् ॥ ५ ॥**

(५)ददाति। प्रकृतेभ्य एव मा भूदिति 'सर्व'ग्रहणम् ॥ ५ ॥

**साहस्राश्चत्वारः सहस्रदक्षिणाः ॥ ६ ॥**

'साहस्रा' इति चतुर्णामपि सामान्यसंज्ञा। सहस्रदक्षिणास्ते भवन्ति ॥ ६ ॥

तेषां च—

**तृतीय उक्थ्यः ॥ ७ ॥**

संस्थो भवति। ब्राह्मणे हि सर्वज्योतिस्तृतीय उक्थसंस्थः पठ्यते ॥७॥

---

(१) संवत्सरादूर्ध्वं सप्ताहान्यतिक्रम्य सद्यः सुत्या।

(२) अग्निवद्वा चयनवदेव संवत्सरं दीक्षा।

(३) सर्वजिद्यज्ञे अग्नौ चीयमाने गवां शतमश्वयुक्तं रथं च अध्वर्यवे ददातीत्यर्थः।

(४) महाव्रतस्तोत्रकाले।

(५) माध्यन्दिने सवने मरुत्वतीययागात्प्राक्।

संज्ञाविशेषमाह—

(१) ज्योतिर्विश्वज्योतिः सर्वज्योतिस्त्रिरात्रसम्मितः ॥८॥

इति ॥ ८ ॥

षट्साद्यःक्राः ॥ ९ ॥

साद्यःक्रसंज्ञकाः षट् क्रतवो भवन्ति ॥ ९ ॥

स्वर्गकामपशुकामभ्रातृव्यवतां प्रथमः ॥ १० ॥

साद्यःक्राख्यः क्रतुर्भवति ॥ १० ॥

(२)रुक्मललाटोऽश्वः श्वेतो दक्षिणा ॥ ११ ॥

अश्वाभावे गौः ॥ १२ ॥

दक्षिणा भवति ॥ १२ ॥

तमुद्गात्रे ददाति ॥ १३ ॥

तमश्वं गां वा उद्गात्रे ददाति ॥ १३ ॥

प्राकृतस्यानिवृत्तिरुद्गातृयोगात् ॥ १४ ॥

प्राकृतस्य दक्षिणाजातस्य च न निवृत्तिः। कुत एतत्? उद्गातृयोगादश्वस्य ॥ १४ ॥

एवं प्राप्त आह—

निवृत्तिः क्रतुयोगात् ॥ १५ ॥

निवृत्तिः प्राकृतस्य भवति। कुत एतत्? क्रतुना हि युज्यते च तस्य 'अश्वः श्वेतो दक्षिणा' इति। तेन यद्दक्षिणायुक्तं तन्निवर्तत इति ॥ १५ ॥

वचनादेकस्य ॥ १६ ॥

यदुक्तम् 'उद्गात्रे ददाति' इति तत्क्रतुयोगेऽपि वचनादित्यदोषः ॥१६॥

दीर्घव्याधिप्रतिष्ठाकामान्नाद्यकामानां द्वितीयः ॥ १७ ॥

साद्यःक्रो भवति। एषामन्नाधिकार इत्यर्थः ॥ १७ ॥

(३)अश्वैकविंशा दक्षिणाऽश्वो वा ॥ १८ ॥

---

(१) प्रथमो ज्योतिः, द्वितीयो विश्वज्योतिः, तृतीयः सर्वज्योतिः, उक्थ्यसंस्थः चतुर्थस्त्रिरात्रसंमितसंज्ञः।

(२) रुक्मः सौवर्णः अश्वस्याभूषणविशेषो ललाटेऽलङ्कारतया धारणीयः। तादृशश्च श्वेतोऽश्वो दक्षिणा भवति।

(३) अश्व एकविंशो यासां ता विंशतिर्गाव एकोऽश्वश्च दक्षिणेत्यर्थः।

ततश्च विकल्पः ॥ १८ ॥

हीनस्यानुक्रीः ॥ १९ ॥

अनुक्रीर्नाम साद्यःक्रः, स (१)हीनस्य भवति । यः कर्मणा हीन इव तस्यासौ भवति ॥ १९ ॥

साद्यश्वं शतं दक्षिणाऽश्वो वा ॥ २० ॥

'वा' इति विकल्पः ॥ २० ॥

विश्वजिच्छिल्पः ॥ २१ ॥

विश्वजिच्छिल्पो नाम साद्यःक्रः ॥ २१ ॥

तत्र विशेषः—

(२)यथाद्रव्ये जनपदे यजेत तेषां यथोत्साहं दद्यात् ॥ २२ ॥

दक्षिणाः । यद्यद्द्रव्यं यस्मिन्यस्मिन् जनपदे प्रायोवृत्त्या तेषां यथोत्साहं दानम् ॥ २२ ॥

(३)तान्याचष्टे—

आ(४)जानेयानपरजने ॥ २३ ॥

आजानेयानश्वानपरजने ददाति ॥ २३ ॥

(५)प्राच्येषु हस्तिनः ॥ २४ ॥

ददाति ॥ २४ ॥

अश्वतरीरथानुदीच्येषु ॥ २५ ॥

वेसरीयुक्तान्रथानुदीच्येषु ददाति ॥ २५ ॥

सर्वस्वप्रतिनिधिर्वा ॥ २६ ॥

दीयते ॥ २६ ॥

---

(१) अनुजादप्यधमो भवति स हीनः तस्य ।

(२) यानि यानि उत्कृष्टानि द्रव्याणि यस्मिन् जनपदे स यथाद्रव्यः तस्मिन्देशे यथोत्साहं यथाशक्ति इत्यर्थः ।

(३) 'यथाद्रव्यमाचष्टे' इ० पा० ।

(४) अपरजने प्रत्यक्प्रदेशे यागे क्रियमाणे आजानेयानश्वान्दद्यात् ।
आजानेयाः कुलीनाः स्युर्विनीताः साधुवाजिनः ।
(अमर० २-८-४४) इत्यभिधानादाजानेयानश्वान् प्रत्यक्प्रदेशे यागे क्रियमाणे दक्षिणात्वेन दद्यादित्यर्थः ।

(५) प्राच्यां दिशि हस्तिनो दद्यात् ।

अप्रसिद्धत्वादुच्यते—

(१)धेन्वनडुत्सीरधान्यपल्यदासमिथुनमहानसारोहणविमितशयनानि ॥ २७ ॥

धेन्वादीनि दासमिथुनान्तानि प्रसिद्धानि । महानसोपयोगिकं द्रव्यं ताम्रचर्वादि महानसशब्देनोच्यते । आरोहणं च युग्यम्, विमितशयने प्रसिद्धे एव, विमितं गृहम् ॥ २७ ॥

इति द्वाविंशेऽध्याये द्वितीया कण्डिका ।

श्येनोऽभिचरतः ॥ १ ॥

श्येनो नाम साद्यस्कः पञ्चमः । सोऽभिचरतो भवति ॥ १ ॥

यत्रौषधयो न जायेरंस्तद्देवयजनम् ॥ २ ॥

भवति ॥ २ ॥

विदाहि वा ॥ ३ ॥

यत्र जाता ओषधयो दह्यन्ते (२)अग्न्यादिना ॥ ३ ॥

(३)वृक्षस्तम्बच्छिन्नम् ॥ ४ ॥

यत्र वृक्षाः, स्तम्बाश्च छिन्नास्तद् वृक्षस्तम्बच्छिन्नम् ॥ ४ ॥

वा निर्व्रस्कम् ॥ ५ ॥

वा निर्वृकणमूला वृक्षा भवन्ति वा अनिर्वृकणमूलाः । अपरे तु सूत्रद्वयमन्यथा वर्णयन्ति—वृक्षस्तम्बच्छिन्नं वा अच्छिन्नं वा' यदा छेदनं तदा निर्वृकणमूला वृक्षा भवन्ति ॥ ५ ॥

दक्षिणाप्रवणम् ॥ ६ ॥

देवयजनं भवति ॥ ६ ॥

अचषालो यूपः स्फ्याग्रः ॥ ७ ॥

---

(१) धेनुः प्रसिद्धा, अनडुद् बलीवर्दः, सीरं हलम्, धान्यं गोधूमादि, 'पल्यं' पलादिमानार्हम् । पल्यः पलायनशीलः स चासौ दासश्च तयो मिथुनम् दासीदासौ, महानसं ताम्रचर्वादि गृहोपकरणम्, आरोहणं हस्त्यश्वादि, विमितं गृहम्, शयनं खट्वादि, एतानि दद्यादित्यर्थः ।

(२) दावाग्निना ।

(३) वृक्षाः पलाशादयः स्तम्बा वीरिणकाशाद्याः । स्तम्बानां छेदनं स्यादेव ।

स्फ्यस्येवाग्रं भवति ॥ ७ ॥

तैल्वको बाधको वा ॥ ८ ॥

यूपो भवति । (१)तिल्वकः प्रसिद्धः । बाधको यो गिरिमालक इति प्रसिद्धः ॥ ८ ॥

इध्मो (२)वैभीदकः ॥ ९ ॥

भवति ॥ ९ ॥

(३)शरमयं बर्हिः ॥ १० ॥

शरमयं च बर्हिर्भवति ॥ १० ॥

अधिषवणे (४)शवनभ्ये ॥ ११ ॥

शवं येनाऽनसा ऊढं तन्नाभिसम्बन्धिनी अधिषवणे फलके ॥ ११ ॥

रथौ हविर्धाने ॥ १२ ॥

नानसी ॥ १२ ॥

लोहितः सवनीयोऽग्नये रुद्रवते ॥ १३ ॥

भवति ॥ १३ ॥

लोहितवाससो लोहितोष्णीषाः प्रचरन्त्यृत्विजः ॥ १४ ॥

लोहिते वाससी येषां ते लोहितवाससः लोहितोष्णीषाश्च प्रचरन्त्यृत्विजः(५) ॥ १४ ॥

निवीताः ॥ १५ ॥

कण्ठावसक्त(६)यज्ञोपवीताः ॥ १५ ॥

उज्ज्यधन्वानः ॥ १६ ॥

उद्गता ज्या धनुषो येषां ते उज्ज्यधन्वानः(७) । आरोपितधन्वान इत्यर्थः ॥ १६ ॥

कलापिनः ॥ १७ ॥

कलापशब्देन (८)भस्त्रोच्यते । तद्वन्त इत्यर्थः ॥ १७ ॥

---

(१) तिल्वकः—तिणिसः ।

(२) बहेडकः ।

(३) शरकाण्डस्येति श्रीअनन्तः । मौञ्जं वासुदेवः ।

(४) शवं मृतं येनानसा शकटेनोढं भवति तच्चक्रस्य यन्नभ्यं फलकं ततो घटिते अधिषवणफलके भवत इत्यर्थः ।

(५) 'दीक्षणीयादिषु' इति शेषः ।

(६) उत्तरीया इति वासुदेवानन्ता ।

(७) ऋत्विजः कर्म कुर्वन्ति ।

(८) शरपूर्णा चर्ममयी भस्त्रा ।

(१)काणखोरकूटबण्डाहुतमिश्रा नव-नव दक्षिणा ददाति लिङ्गानाम् ॥ १८ ॥

काणाः-प्रसिद्धाः। खोरा-लङ्गाः(२)। कूटाः-भग्नशृङ्गाः। बण्डाः-छिन्नपुच्छाः। हुतमिश्राः-ज्वरगृहीतमिश्रा इत्यर्थः। 'नव काणा(३)न्नयति' 'नव खोरान्नयति' एवमादि श्रवणात् ॥ १८ ॥

(४)पुरुषाणां वा दानाधिकारात् ॥ १९ ॥

पुरुषाणां वा नवसङ्ख्यासम्बन्धः। प्रतिपुरुषं नव नव ददातीत्यर्थः ॥ १९ ॥

प्राकृतस्य (५)वा नयनं भेदेन ॥ २० ॥

प्राकृतस्य वा दक्षिणाजातस्य एतानि लिङ्गानि भवन्ति, तेषां च नयनं भेदेन। एवं प्रकृतिरनुगृहीता भवति। 'नव नव नयति' इति च यथाश्रुतम् ॥ २० ॥

दक्षिणाकाले (६)कण्टकैरेना विरुजेयुः ॥ २१ ॥

समाख्ययोद्गातारः ॥ २१ ॥

(७)उपतप्तास्वनुपतप्तानामाज्यम् ॥ २२ ॥

उपतप्तासु या अनुपतप्ताः तदीयमाज्यं भवति ॥ २२ ॥

(८)साद्यस्क्रधर्मा हिरण्यस्रग्वत् ॥ २३ ॥

---

(१) काणादिचिह्नयुक्तानां गवां नवसङ्ख्या नवसङ्ख्या दक्षिणा ददातीत्यर्थः। (२) पादेन खञ्जाः। (३) नयतिर्दानार्थः।

(४) प्रतिपुरुषं प्रत्यृत्विजं नव-नव काणादिका नयति ददाति। कुतः? दानाधिकारात् दानस्य प्रस्तुतत्वात् दानं च पुरुषेभ्य एव।

(५) 'वा' शब्दः पूर्वपक्षनिरासार्थः। न प्रतिपुरुषं नव-नव किन्तु प्राकृतस्यैव गवां शतस्यैतानि काणादीनि भवन्ति। तस्य च दक्षिणादानं भेदेन भवति नवभिर्नयनं भवतीत्यर्थः।

(६) कण्टकैर्बिल्वादिवृक्षोद्भवैरेनाः काणादिकाः विरुजेयुः वित्रुट्येयुरित्यर्थः।

(७) उपतप्तासु ज्वरितासु गोषु मध्ये या अनुपतप्ताः रोगरहिताः तासामाज्यम्।

(८) साद्यस्क्रधर्मा लोहितवस्त्रादयः, यथा वाजपेये हिरण्यस्रजो यथोपयुक्तं दीयन्ते, एवमत्रापि येन येन यद्वस्त्रादि परिहितं तत्तत्तस्मै देयमिति भावः।

'साद्यस्क'शब्देनात्र श्येनोऽभिधीयते। तस्य धर्मा लोहितोष्णीषाध्वयः हिरण्यस्रग्वद्यद्यस्योपयुक्तं तत्तस्य भवति ॥ २३ ॥

**एकत्रिके दक्षिणा षष्टिशतं षट्च ॥ २४ ॥**

एकत्रिकः षष्ठः साद्यस्कः (१)तत्र षट्षष्टिशतं दक्षिणा ॥ २४ ॥

**साद्यस्कधर्माः ॥ २५ ॥**

'व्याख्यास्यन्ते' इति सूत्रशेषः ॥ २५ ॥

**दीक्षादि सद्यः सर्वं क्रियते ॥ २६ ॥**

ऋजुः ॥ २६ ॥

**सह पशूनालभते ॥ २७ ॥**

अग्नीषोमीयसवनीयानूबन्ध्यान्। सद्यस्त्वे च सति सौत्येऽहनि सर्वं कर्तव्यम्। तत्र च स्थानित्वात्(२)सवनीयकाल एव पशूनामालम्भः तदीय एव स्थाने युक्त इति स्वस्थानं सवनीयो न जहाति अग्नीषोमीयस्तु स्वस्थानादुत्कालितः परतो गच्छति ॥ २७ ॥

**पुरोडाशो वाऽग्नीषोमीयस्थाने ॥ २८ ॥**

"अग्नीषोमीयोऽतः पशुः" ( का० श्रौ० ८-७-२३ ) इत्यत्राऽग्नीषोमीयः पुरोडाशो वा भवति वा न वेति ॥ २८ ॥

**वपान्ते सुब्रह्मण्यानिवृत्तिः ॥ २९ ॥**

वपान्ते या सुब्रह्मण्या सा न भवति ॥ २९ ॥

**प्रतिदिशं वसन्त्यृत्विजः ॥ ३० ॥**

अतश्च पूर्वस्मिन्नहनि ऋत्विग्वरणं कर्तव्यम्(३) ॥ ३० ॥

**पुरस्ताद्योजने होता ॥ ३१ ॥**

'वसति' इतिशेषः ॥ ३१ ॥

**इतरे क्रोशप्रत्यवायेन क्रोशप्रत्यवायेन ॥ ३२ ॥**

इतर उद्गात्रादयः पूर्वपूर्वपरिमाणापेक्षया क्रोशप्रत्यवायेन (४)॥३२॥

---

( १ ) 'तस्य' इ० पा० ।

(२) सवनीयं नियुज्य ततोऽनूबन्ध्या पुनरग्नीषोमीय इति घोषणा। सवनीयानन्तरमग्नीषोमीय इति सम्प्रदायः।

( ३ ) तदेव विवृणोति ।

( ४ ) क्रोशप्रत्यवायेनापचयेन परिमितेऽध्वनि वसन्ति ।

उद्गातोत्तरतः ॥ ३३ ॥

वसति त्रिभिः क्रोशैः ॥ ३३ ॥

अध्वर्युः पश्चाद् ब्रह्मा दाक्षिणतः ॥ ३४ ॥

वसति ॥ ३४ ॥

चतुर्भिरश्वरथैः सक्षीरदृतिभिरावहन्त्येनान् ॥ ३५ ॥

होत्रादीन्(१) ॥ ३५ ॥

(२)यथाक्रोशमश्वाः ॥ ३६ ॥

यस्य यावन्तः क्रोशास्तस्य तावन्तोऽश्वा भवन्ति रथे ॥ ३६ ॥

ततो नवनीतमाज्यम् ॥ ३७ ॥

ततो दृतेर्यज्जातं नवनीतं तदाज्यं भवति ॥ ३७ ॥

सोमक्रयणस्त्रिवत्सः (३)साण्डः ॥ ३८ ॥

त्रिवत्सः त्रिवर्षः ॥ ३८ ॥

(४)वेदिरुर्वरा ॥ ३९ ॥

(५)सस्यमालिनी भवति ॥ ३९ ॥

व्रीहीन्यवान्वा पक्वानध्यवस्यति(६) ॥ ४० ॥

(७)खल उत्तरवेदिः ॥ ४१ ॥

भवति ॥ ४१ ॥

(८)धान्यखलः प्रत्ययात् ४२ ॥

---

(१) सद्योदुग्धेन क्षीरेण पूर्णाः सक्षीरा दृतयश्चर्ममयो भस्त्रा येषु रथेषु तैश्चतुर्भिरश्वयुक्तरथैः एनान्यजमानपुरुषा आवहन्ति आनयन्ति ।

(२) रथेषु क्रोशसंख्यानतिक्रमेणाश्वा युज्यन्ते होतुश्चत्वारः, उद्गातुस्त्रयः, अध्वर्योर्द्वौ, ब्रह्मण एक इत्यर्थः ।

(३) आण्डसंयुक्त ऋषभः ।

(४) सस्याढ्या भूमिर्वेदिर्भवति ।

(५) अतएव वसन्तस्य नियमेनेति लिङ्ग्यते । तद्विशेषमाह-व्रीहीनिति ।

(६) अत्र व्रीहीन्यवान् वेदित्वेनाध्यवस्यति । व्रीहियवसस्येनाढ्या भूमिर्वेदिर्भवतीत्यर्थः ।

(७) अत्र सन्देहः किं धान्यखलः पांसुखलो वा ?

(८) खल इत्युक्ते धान्यखलः प्रतीयते, ज्ञायते यतः ।

प्रयोगप्रत्ययौ तत्रैव भवतः ॥ ४२ ॥

**ये वेदिमभितस्ताननुत्तरवेदिदेशे मृद्नन्ति ॥ ४३ ॥**

धान्यखले सति सन्निधानात् वेदिमभितो ये सस्यविशेषास्ताननुत्तरवेदिदेशे मृद्नन्ति(१) ॥ ४३ ॥

**पांसुखलो(२)वा प्रत्ययाविशेषात् (३)प्रकृत्यनुग्रहाच्च ॥ ४४ ॥**

'वा' शब्दः पक्षान्तरपरिग्रहे । पांसु खले वोत्तरवेदिर्भवति । तत्रापि हि 'खल' शब्दप्रयोगप्रत्ययौ स्त एवेति । अपि चैवं प्रकृतिरनुगृहीता भवति ॥ ४४ ॥

**(४)खलेवाली यूपो लाङ्गलेषा ॥ ४५ ॥**

खले धारणं यया क्रियते सा खलेवाली यूपकार्ये भवति । सा च पूर्वमेव निहिता द्रष्टव्या ॥ ४५ ॥

**कलापी चषालार्थे ॥ ४६ ॥**

कलापी च तृणपूलकः चषालार्थे भवति ॥ ४६ ॥

**निर्वृत्तग्रहणात् प्राकृतनिवृत्तिः ॥ ४७ ॥**

'निर्वृत्ता हि खलेवाली यूपकार्ये विधीयते' ।

अतश्च प्राकृतानां यूपधर्माणां निवृत्तिर्भवति(५) । यूपशब्दो हि संस्कारनिमित्तः । छेदनादयश्च स्वर्वञ्जूहनपर्यन्ताः यूपस्वरूपप्रयुक्ताः, न कार्यप्रयुक्ताः । तस्मात्साधूक्तं निर्वृत्तग्रहणात्प्राकृतनिवृत्तिः' इति॥४७॥

**आवेशादनिवृत्तिः ॥ ४८ ॥**

---

(१) मर्दयन्ति स्तम्बेभ्यो विमोकार्थमनडुद्भिः परितो गच्छद्भिराक्रमयन्तीत्यर्थः ।

(२) 'वा' सिद्धान्ते । पांसुखलो धूलिराशिः प्रत्येतव्यः । कुतः ? प्रत्ययाविशेषात् । 'खल' इत्युक्ते धान्यखलोऽपि प्रतीयते पांसुखलोऽपि प्रतीयते ।

(३) "प्रकृत्यनुग्रहाच्च" इति पृथक्सूत्रं बर्लिन पुस्तके ।

(४) श्रौताभिधानं पर्यायेण व्याचष्टे । खलमध्ये निखाता मेथी खलेवाली सैव यूपो भवति । लाङ्गलेषा हलस्येषा हलसम्बन्धी ईषादण्डो यूपः कार्यः ।

(५) निर्वृत्ताया निष्पन्नाया लोकसिद्धायाः खलेवाल्या ग्रहणात् प्राकृतस्य यूपव्रश्चनादेर्धर्मजातस्य निवृत्तिर्भवतीत्यर्थः ।

स्यादेतदेवं यदि कार्यविशिष्टा धर्मा भवेयुः । न चैते कार्यविशिष्टाः। स्वरूपप्रयुक्ता एवैत इति। न हि यूपशब्द आकृतिवचनः। अलौकिकत्वात्संस्कारनिमित्तः। सत्सु संस्कारेषु प्रयोगात्(१) ॥ ४८ ॥

(२)उर्वरादि वा द्वितीयस्य सन्निधेः ॥ ४९ ॥

उर्वरादिधर्मजातं द्वितीयस्य भवति। तत्सन्निधौ हि तत्पठ्यत इति। वा सर्वेषां भवति(३) साद्यस्कान् प्रकृत्य श्रवणात्। यत्तु 'सन्निधानाद् द्वितीयस्य' इति, तत्रोच्यते 'अवश्यमेव पठ्यमानं कस्यचिदेव सन्निहितं भवति' इति ॥ ४९ ॥

इति द्वाविंशेऽध्याये तृतीया कण्डिका।

व्रात्यस्तोमाश्चत्वारः ॥ १ ॥

व्रात्यस्तोमसंज्ञकाश्चत्वारः क्रतवो भवन्ति। व्रात्याः प्रसिद्धा एव त्रिपुरुषं पतितसावित्रीकाः। प्रायश्चित्तार्थत्वाच्च लौकिकेऽग्नौ भवन्ति। न ह्येतेराधानं प्रयुज्यते, अतदङ्गत्वात्। तदुक्तमाचार्येण 'स्थपतीष्टिं' प्रकृत्य 'लौकिक' ( का०श्रौ० १-१-१२,१४ ) इति ॥ १ ॥

द्वितीय उक्थ्यः ॥ २ ॥

भवति ॥ २ ॥

व्रात्यगणस्य ये सम्पादयेयुस्ते(४)प्रथमेन यजेरन् ॥ ३ ॥

सम्पादनं च गायननर्तकादीनाम्। तेषां प्रथमेऽधिकारः ॥ ३ ॥

द्वितीयेन निन्दिता (५)नृशंसाः ॥ ४ ॥

नृशंसत्वेन ये निन्दितास्तेषां द्वितीये ऽधिकारः ॥ ४ ॥

---

( १ ) पर्युक्षणप्रोक्षणादेरनिवृत्तिः निवृत्तिः न भवति। कुतः? 'आवेशात्'। ते हि खलेवाल्यामप्यावेश्यन्ते विधीयन्ते ।

(२) वेदिरुर्वरादिकं धर्मजातं द्वितीयस्य साद्यस्कस्य भवति। कुतः? सन्निधेः ताण्ड्ये ( १६-१३ ) द्वितीयस्य संनिधौ पाठात्।

( ३ ) प्रकरणात्।

( ४ ) ये व्रात्या नृत्यगीतवाद्यशस्त्रधारणादौ स्वयं प्रवीणाः सन्तः उपदेष्टारो भूत्वा स्वां विद्यां व्रात्यसमूहस्य सम्पादयेयुः शिक्षेयुः पाठयेयुः ते प्रथमेन यजेरन्।

( ५ ) ये नृशंसा निन्दिता नृभिर्मनुष्यैरभिशंसनेन पापाध्यारोपणेन निन्दिताः गर्हिताः ज्ञातिभिर्बहिष्कृताः ते द्वितीयेन यजेरन्।

तृतीयेन कनिष्ठाः ॥ ५ ॥

कनिष्ठा लघवः ॥ ५ ॥

ज्येष्ठाश्चतुर्थेन ॥ ६ ॥

अधिक्रियन्ते ॥ ६ ॥

ज्येष्ठशब्दार्थमाह—

(१)अपेतप्रजनना (२)स्थविरास्तदाख्याः ॥७॥

तेषां यो(३)नृशंसत्तमः स्याद् द्रव्यवत्तमो वाऽनूचानतमो वा तस्य गार्हपते दीक्षेरन् ॥ ८ ॥

स गृहपतिः कर्तव्य इत्यर्थः ॥ ८ ॥

तस्य भक्षमनुभक्षयन्त आसीरन् ॥ ९ ॥

तस्य गृहपतेर्भक्ष(४)मनु इतरे (५)भक्षयन्ति। अतश्च गम्यते उभयसंस्कारोऽयं द्रव्यस्य पुरुषस्य च ॥ ९ ॥

व्रात्यधनानि भवन्ति ॥ १० ॥

वक्ष्यमाणानि ॥ १० ॥

(६)तिर्यङ्नद्धमुष्णीषंप्रतोदः(७) ॥ ११ ॥

प्रतोदः प्राजनः ॥ ११ ॥

ज्याह्रोडोऽयोग्यं धनुस्तदाख्यम्(८) ॥ १२ ॥

ज्याह्रासेन यदयोग्यं धनुः तज्ज्याह्रोडाख्यम् ॥ १२ ॥

वासः कृष्णशं कद्रु ॥ १३ ॥

कृष्णमशितं येन (९)तत्करणेन(१०)कृष्णशमित्युच्यते। कृष्णसूत्रोत-

---

(१) अपगतप्रजननेन्द्रियसामर्थ्या यौवनापगमेन निर्वार्यप्रजननाः।

(२) स्थविरा वृद्धास्तदाख्याः।

(३) नृशंसत्तमः अत्यन्तं क्रूरकर्मा।

(४) 'अन्वितरेषां भक्ष' इ० पा०।

(५) इतरे यजमानाः।

(६) तिर्यङ्नद्धं ति ग्बद्धमुष्णीषम्।

(७) प्रतोदः प्राजनः तीक्ष्णाग्रो वंशादिदण्डः।

(८) ह्रोडतिर्गत्यर्थः। ज्यारहितः केवलो धनुर्दण्डो ज्याह्रोड उच्यते।

(९) 'तदकारलोपेन कृष्णशमिति' इ० पा०।

(१०) कृष्णशमितिप्रादो। कद्रु कर्बुरं वासः कृष्णशम्। कृष्णमशितं येन कृष्णाशमिति प्राप्ते अकारलोपश्छान्दसः।

मित्यर्थः । तत्कद्रूवाख्यम् ॥ १३ ॥

**अकृष्णं कृष्णदशं वा तदाख्यम् ॥ १४ ॥**

वा अकृष्णं कृष्णाभिर्दशाभिस्तद्वत् कद्रूवाख्यम् । उभयत्र हि कद्रुशब्दः प्रसिद्धः ॥ १४ ॥

**फलकास्तीर्णो विपथः ॥ १५ ॥**

(१)फलकैरास्तीर्णो विपथः । यो वर्त्मना न गच्छति ॥ १५ ॥

**अश्वा(२)श्वतराभ्यां (३)कम्प्राभ्यां युक्तः स्यादित्येके ॥ १६ ॥**

एके आचार्याः कम्प्राश्वाश्वतरयुक्तं रथमिच्छन्ति । एकग्रहणं विकल्पार्थम् ॥ १६ ॥

**निष्को राजतः ॥ १७ ॥**

(४)निष्क आभरणविशेषः । स राजतो भवति ॥ १७ ॥

**अजिने (५) पार्श्वसहिते कृष्ण(६)वलक्षे आविके ॥ १८ ॥**

आविके चर्मणी पार्श्वसंलग्ने । कृष्णसितवती ॥ १८ ॥

**तद्गृहपतेः ॥ १९ ॥**

धनम् ॥ १९ ॥

**एवमेवाजिनानीतरेषाम् ॥ २० ॥**

इतरेषां व्रात्यानामेवमेवाजिनानि भवन्ति ॥ २० ॥

**(७)दामतूषाणि बल्कान्तानि द्विचूडान्याविकानि वासांसि लोहितान्तानि कृष्णान्तानि वा तदाख्यानि ॥ २१ ॥**

दामतूषाणि द्विचूडानि लोहितान्तानि कृष्णान्तानि वा बल्कान्ता·

---

( १ ) फलकैरास्तीर्णो विस्तारितो रथः । स च विपथः विविधं कुटिलं पथो गच्छतीति विपथः यो मार्गेण न चलतीति ।

( २ ) अश्वतरो वेसरः । ( ३ ) कम्पवातयुक्ताभ्याम् ।

( ४ ) रजतनिर्मितं कण्ठाभरणम् ।

( ५ ) पार्श्वतस्तन्तुभिः स्यूते । ( ६ ) वलक्षः शुभ्रवर्णः ।

( ७ ) तूषशब्देन वस्त्रदशोच्यते । दामानीव दामाकारा रज्जुरूपा दशा येषां तानि । बल्कः कृष्णो लोहितो वा वर्णः, सोऽन्ते येषां तानि । द्वे चूडे येषां तानीत्यादिः ।

नीत्याख्यानि ॥ २१ ॥

दामनी द्वे द्वे ॥ २२ ॥

उपानहौ च कर्णिन्यौ कृष्णे स्यातामित्येके ॥ २३ ॥

एके अकृष्णे इति(१) ॥ २३ ॥

मागधदेशीयाय (२)ब्रह्मबन्धवे दक्षिणाकाले व्रात्यधनानि दद्युः ॥ २४ ॥

सर्व एव व्रात्याः मगधदेशनिवासी यः स ब्रह्मबन्धुभिर्जायते स मागधदेशीयब्रह्मबन्धुः तस्मै दद्युः । अपरे तु मागधं गेयमाहुः । तत्र यो देशीयः ईषदसमासौ देशीय इत्युच्यते तस्मै दद्युः ॥ २४ ॥

अविरतेभ्यो वा व्रात्यचरणात् ॥ २५ ॥

अथवा—ये व्रात्यचरणादविरतास्तेभ्यो दद्युः ॥ २५ ॥

एवं हि श्रूयते—

तेष्वेव मृजाना यन्तीति श्रुतेः(३) ॥ २६ ॥

तेष्वेव व्रात्येषु मृजाना आत्मानं शोधयन्ति इति ॥ २६ ॥

त्रयस्त्रिंशतं त्रयस्त्रिंशतं दक्षिणा दद्युः ॥ २७ ॥

एकैकाः(४) ॥ २७ ॥

द्विगुणा गृहपतिरित्येके ॥ २८ ॥

एके आचार्या गृहपतिः 'द्विगुणा ददाति' इतीच्छन्ति ॥ २८ ॥

व्रात्यस्तोमेनेष्ट्वा व्रात्यभावाद्विरमेयुः ॥ २९ ॥

'विरमतिः' उपरम उच्यते ॥ २९ ॥

व्यवहार्या भवन्ति ॥ ३० ॥

अतः परम्(५) ॥ ३० ॥

अग्निष्टुत् ब्रह्मवर्चसवीर्यान्नाद्यप्रतिष्ठाकामानां यश्चापूत इव मन्येत ॥ ३१ ॥

'अग्निष्टुत्' नामैकाहः । स वीर्यान्नाद्यब्रह्मवर्चसप्रतिष्ठाकामानां

---

(१) एकैकस्य वस्त्रस्य द्वे द्वे दामनी द्वे द्वे दशे स्याताम् । उपानहौ च कर्णिन्यौ कर्णौ कर्णाकारौ चर्मावयवौ स्तो ययोः ।

(२) जातिमात्रोपेतब्राह्मणाय ।

(३) "यस्मा एतद्ददति तस्मिन्नेव मृजाना यन्ति" (ताण्ड्य १७-१) ।

(४) त्रयस्त्रिंशतं गा दक्षिणाः सर्वे व्रात्या दद्युः ।

(५) विवाहयाजनभोजनादियोग्याः भवन्ति ।

भवति । (१)'यश्चापूत इव मन्येत' । यश्चात्मानं कर्मदोषादपूतमिव मन्यते ॥ ३१ ॥

(२)यज्ञाविभ्रष्टस्य च ॥ ३२ ॥

'अग्निष्टुद्' भवति ॥ ३२ ॥

(३)यस्माद्वा विभ्रंशेरन् ॥ ३३ ॥

'स वा भवति' इति विकल्पः । प्रतिष्ठाकामानामग्निष्टुतां भेद इत्युक्तमेव ॥ ३३ ॥

इति द्वाविंशेऽध्याये चतुर्थी काण्डिका ।



छान्दोग्ये विशेषो (४)यथाकामम् ॥ १ ॥

भवति ॥ १ ॥

सुब्रह्मण्याग्नेयी ॥ २ ॥

अत्राग्निष्टुत्सु सुब्रह्मण्याग्नेयी भवति ॥ २ ॥

एवं (५)यथास्तुत् ॥ ३ ॥

इन्द्रस्तुतिः 'ऐन्द्री' सुब्रह्मण्या, सूर्यस्तुतिः 'सौरी' । इन्द्रस्तुदादयस्तु सार्वमेधिकाः ॥ ३ ॥

सर्वमेके ॥ ४ ॥

अपरे सर्वम् अग्निष्टुत्याग्नेयमिच्छन्ति । प्रकृतौ यत्रेन्द्रपदं तत्राग्निपदप्रयोग इति । एके तन्नेच्छन्ति, उक्तविशेषविधित्वात् । उक्तो हि विशेषविधिरत्र । "तस्याग्नेय्या ग्रहा भवन्त्याग्नेय्यः पुरोरुचः" ( श० ब्रा० १३-७-१-३ ) इत्येवं ग्रहदेवतास्थाने अग्निष्टुत्यग्निपदमूह्यते । पुरोरुचस्तु अस्याजराः संबन्धिन्यः। एवमिन्द्रस्तुदादिष्वपि(६) उत्तरानुवाक्पुरोरुचो भवन्ति ॥ ४ ॥

---

( १ ) यो ब्रह्महत्यादिपापादपूतमपवित्रमात्मानमिव मन्येत तस्य पापस्य निवृत्त्यर्थमग्निष्टुद्भवति । ( २ ) यज्ञो विभ्रष्टो यस्य सः तस्य ।

( ३ ) प्रारब्धे सोमयागे प्रधानयागानां मध्ये विस्मृतं यदा तदा प्रधानविस्मरणाद्विभ्रंशेरन् विभ्रष्टा भवेयुः । तेषामपि अग्निष्टुद्भवति ।

( ४ ) कामं कामं प्रति अग्निष्टुति छान्दोग्ये विशेषोऽस्ति नाध्वर्यवे ।

( ५ ) इन्द्रस्तुत्सूर्यस्तुद्वैश्वदेवस्तुतः एते पृथगेकाहा भवन्ति । 'यथास्तुत्' यो यद्देवत्यः स्तुत् तत्र तद्देवत्या सुब्रह्मण्या भवति ।

( ६ ) "आपश्चित्" ( वा० सं० ३३-१८ ) इत्यादि ।

**यथोत्साहं दद्यात् ॥ ५ ॥**

अग्निष्टुति ॥ ५ ॥

**आग्नेयानामनडुद्धिरण्याश्वाजानाम्(१) ॥ ६ ॥**

**(२)त्रिवृतश्चत्वारः ॥ ७ ॥**

क्रतवो भवन्ति ॥ ७ ॥

**(३)अनिरुक्तप्रातःसवनः प्रथम (४)ईप्सुयज्ञः ॥ ८ ॥**

तस्य 'ईप्सुयज्ञ' इति विशेषसंज्ञा ॥ ८ ॥

**ग्रामकामस्य वा ॥ ९ ॥**

भवति ॥ ९ ॥

**(५)दक्षिणाश्वरथश्चतुर्युक् श्यावोऽन्यतमः ॥ १० ॥**

श्यावः–श्यामवर्णः ॥ १० ॥

**(६)तेजोब्रह्मवर्चसपुरोधाकामस्य बृहस्पतिसवः ॥११॥**

भवति । 'बृहस्पतिसव' इति विशेषसंज्ञाऽस्य ॥ ११ ॥

**देवसूहवींꣳषि निर्वपति ॥ १२ ॥**

अत्र ॥ १२ ॥

**आतिग्राह्यवद् ग्रहं गृह्णाति (७)बृहस्पते अति यद-र्य इति ॥ १३ ॥**

'अतिग्राह्यवत्' इति ग्रहणहोमकालौ(८) लभ्येते ॥ १३ ॥

---

(१) अग्निदेवत्यानामनडुहां हिरण्यस्याश्वानामजानां च यथोत्साहं त्रिसंख्याप्रभृतीनां दानं कुर्यात् ।

(२) त्रिवृत्स्तोमका अग्निष्टोमसंस्थाश्चत्वारः क्रतवो भवन्ति ।

(३) अनिरुक्तं प्रातःसवनं यस्यासौ प्रथमः ।

(४) आप्तुमिच्छुरीप्सुः तस्येप्सोर्यज्ञः । हिरण्यादीनामीप्सुः ।

(५) अस्य प्रथमस्य त्रिवृतश्चतुर्भिरश्वैर्युक्तोऽश्वरथो दक्षिणा। तेषां चतुर्णां मध्ये अन्यतमः श्यावो भवति कपिशः ।

(६) एतत्त्रितयकामिनो बृहस्पतिसवसंज्ञो द्वितीयस्त्रिवृदग्निष्टोम-संस्थो भवति ।

(७) बृहस्पतेऽअति यदर्यः० ( वा० सं० २६-३ ) इत्यनेन मन्त्रेण बृहस्पतिदेवतं ग्रहं गृह्णाति ।

(८) "तत्रातिग्राह्यग्रहणं त्र्यहे पूर्वे" "माहेन्द्रमनुहोमः" इति ( का० श्रौ० १२-३-२, ५ ) सूत्राभ्यां विहिता इति शेषः ।

उपालम्भ्यो (१)बार्हस्पत्यः ॥ १४ ॥

द्वितीयः सवनीयो भवति ॥ १४ ॥

निहितेषु नाराशंसेषु प्रातःसवनेऽनपाकुर्वन्नेकादश दक्षिणा व्यादिशति ॥ १५ ॥

नाराशंसचमसेषु प्रातःसवने स्थापितेषु अपृथक् कुर्वन्नेवैकादश दक्षिणा व्यादिशति ऋत्विग्भ्यः ॥ १५ ॥

(२) अश्वद्वादशा माध्यन्दिने ॥ १६ ॥

एतस्मिन्नेव काले व्यादिशति ॥ १६ ॥

अपाकरोत्युभयीः ॥ १७ ॥

(३)गोमण्डलात्। अत्र च 'अश्वाहुतेः' अपकर्षः 'दास्यन्' इत्युक्तत्वात् ॥ १७ ॥

एकादश तृतीयसवने ॥ १८ ॥

व्यादिशति। एतस्मिन्नेव काले तृतीयसवने व्यादिष्टानाम् ॥ १८ ॥

अनूबन्ध्यवपाहोमान्तेऽपाकरणम् ॥ १९ ॥

कर्तव्यम् ॥ १९ ॥

अतिक्रमणं च सर्वासाम् ॥ २० ॥

दक्षिणापथेन। 'च' शब्दात्तस्मिन्नेव काले ॥ २० ॥

एकादशैकादश वा शतानि स्युः ॥ २१ ॥

सहस्राणि वा ॥ २२ ॥

'वा' इति विकल्पः ॥ २२ ॥

अश्वस्त्वेव माध्यन्दिनेऽधिकः ॥ २३ ॥

भवति ॥ २३ ॥

वाजपेयवदाज्येनाभिषिच्यते कृष्णाजिने ॥ २४ ॥

'वाजपेयवत्' इति माहेन्द्रात्पूर्वम् ॥ २४ ॥

शुक्रामन्थिसंस्रवेण वा ॥ २५ ॥

अभिषिच्यते ॥ २५ ॥

---

(१) बृहस्पतिदैवतः पशुरुपालभ्यः।

(२) अश्वो द्वादशो यासां गवां ताः।

(३) व्यादेशानन्तरं द्विविधा अपि गा गोयूथात्पृथक्करोति।

(१)अन्यतस्त्वभिवाद्यः ॥ २६ ॥

अन्यत एवाभिवाद्यो भवति ॥ २६ ॥

(२)अप्रत्यवरोही स्यात् ॥ २७ ॥

अनभ्युत्थायीत्यर्थः, अभ्युत्थेयस्यापि ॥ २७ ॥

स्थपतिरित्येनं ब्रूयुः ॥ २८ ॥

जनाः ॥ २८ ॥

(३)सराजानो ब्राह्मणा यं पुरस्कुर्वीरन्त्स एतेन यजेत ॥२९॥

बृहस्पतिसवेन ॥ २९ ॥

(४)इषुः श्येनवदसद्यः ॥ ३० ॥

'समानमितरच्छ्येनेन' इति वचनात्। इयांस्तु विशेषः। सद्यो न भवति ॥ ३० ॥

इति द्वाविंशेऽध्याये पञ्चमी कण्डिका।

---

मरणकामस्य ॥ १ ॥

सर्वस्वारः कृतान्नदाक्षिणः ॥ २ ॥

क्रतुर्भवति। तस्य च कृतान्नं दक्षिणा ॥ २ ॥

दीक्षाद्यवाजिघ्रत्येव भक्षान् ॥ ३ ॥

न (५)भक्षयति ॥ ३ ॥

(६)अप्स्ववहरणमसोमानाम् ॥ ४ ॥

सोमवर्जितानामप्स्ववहरणम् ॥ ४ ॥

आर्भवे स्तूयमाने दक्षिणेनौदुम्बरीं कृष्णाजिने संविशति दक्षिणाशिराः प्रावृतः ॥ ५ ॥

---

(१) अयमन्येषामभिवादनार्हो भवति। अयं तु नान्यमभिवादयति।

(२) प्रत्यवरोहो यानशयनासनादेः सकाशात्पूज्यान्प्रति अभ्युत्थानम् सोऽस्यास्तीति प्रत्यवरोही। सोऽप्रत्यवरोही स्यात् गुर्वादेरभ्युत्थेयस्याभ्युत्थानं न कुर्यात्।

(३) राज्ञा सहिता ब्राह्मणा यं ब्राह्मणं धर्मस्थापकत्वेन चाङ्गीकुर्वीरन् स एतेन यजेत। (४) इषुर्नाम एकाहः।

(५) दीक्षणीयात आरभ्य भक्षान् यजमानभागेडाभागसोमादीन् अवजिघ्रति।

(६) अवघ्राणानन्तरं सोमवर्जितानामप्स्ववहरणं कर्तव्यम्।

'आर्भवम्' इति तृतीयसवनपवमानमुच्यते। तस्मिंस्तूयमाने दक्षिणेनौदुम्बरीं दक्षिणाशिराः (१)प्रावृतः संविशति ॥ ५ ॥

**तदेवं म्रियते ॥ ६ ॥**

**जीवेच्चेद्दैर्घश्रवसꣳ स्वासु यज्ञायज्ञियस्थाने कुर्युः ॥ ७ ॥**

जीवति चेत् दैर्घश्रवसं साम स्वासु स्तोत्रियासु यज्ञायज्ञियस्य स्थाने कार्यम् ॥ ७ ॥

**मृते तदन्तम(२)र्थाभावात् ॥ ८ ॥**

मृते यजमाने तदन्तमेव कर्म भवति। कुत एतत्? अर्थाभावात्, कार्याभावादित्यर्थः ॥ ८ ॥

**यजमानपात्रर्जीषहवीꣳष्याहवनीये प्रास्य यथार्थं गच्छेयुः ॥ ९ ॥**

अन्यत्रैवमेव हि दृष्टत्वात् "आसादनाद्याहवनीये" (का० श्रौ० २५-७-८) इति ॥ ९ ॥

**(३)समाप्तिर्वोभयचोदनात् ॥ १० ॥**

'वा' शब्दः पक्षव्यावृत्तौ। समाप्तिः कर्त्तव्या न यजमानपात्रर्जीषादीनां प्रतिपत्तिः। उभयं हि चोदितम्। 'सर्वस्वारेण यजेत' इति प्रारम्भः समाप्तिश्च। उपक्रमप्रभृत्यपवर्गपर्यन्तो व्याख्यातार्थः ॥ १० ॥

**समिष्टयजुरन्ते सं त्वा हिन्वन्तीति (४)दार्वाहरणम् ॥ ११ ॥**

समिष्टयजुःषु हुतेषु "सं त्वा हिन्वन्ति" इत्यनेन मन्त्रेण आलम्भार्थं दार्वाहरणम् ॥ ११ ॥

**(५)सं त्वा ततक्षुरिति तक्षणम् ॥ १२ ॥**

तस्यैव दारुणः ॥ १२ ॥

---

(१) अहतेन वाससा वेष्टितसर्वदेहः शेते।

(२) प्रयोजनाभावात् मरणकामः तच्च स जातम्।

(३) कुतः समाप्तिर्कर्तव्या 'उभयचोदनात्' उभयं विहितम् यागो, मरणं च। अतः समाप्तिरेव कर्तव्या।

(४) "सं त्वा हिन्वन्ति" इत्यनेन मन्त्रेण आलम्भार्थं काष्ठानामानयनं कर्तव्यमित्यर्थः।

(५) तेषा मालम्भकाष्ठानां "सं त्वा ततक्षुः" इत्यनेन मन्त्रेण तक्षणं कर्तव्यम्।

सं त्वा रिणन्तीति प्रक्षालनम् ॥ १३ ॥

आसन्द्याः ॥ १३ ॥

सं त्वा शिशन्तीत्यासन्दीविधानम् ॥ १४ ॥

कर्तव्यम् ॥ १४ ॥

आसन्द्यैनमवभृथं हृत्वाऽभ्युक्ष्य सोमोपनहनेन प्रच्छाद्यानूबन्ध्यवपाहोमान्ते दक्षिणस्यां वेदिश्रोणौ सर्वकेशश्मश्रुलोमवपनम् ॥ १५ ॥

अभ्युक्षणं च स्नानकार्यं ॥ १५ ॥

मृताहिताग्न्यावृच्च ॥ १६ ॥

इति (१)कर्तव्यता॥ १६ ॥

अनूबन्ध्यान्तेऽग्नीनाहृत्य वेदिमध्यमाग्नीध्राद्दक्षिणं दक्षिणाशिरसं चितावाहितमुद्गाता त्रियामेन परिगायान्नाके सुपर्णमित्येतस्याम् ॥ १७ ॥

अनूबन्ध्यान्ते वेदिमध्यमग्नीनाहृत्य आग्नीध्राद्दक्षिणतो दक्षिणाशिरसं चितावाहितमुद्गाता त्रियामेन साम्ना त्रिःपरिगायात्, 'नाकेसुपर्णम्' इत्येतस्यामृचि। प्रस्तोतुः परिसामस्त्वधिकार इत्युद्गातृग्रहणम् ॥ १७ ॥

धूमप्राप्तं त्वेषस्ते धूम ऋण्वतीति ॥ १८ ॥

परिगायात् ॥ १८ ॥

अग्निप्राप्तमग्ने मृड महाँ३ असीत्यन्यतरेण ॥ १९ ॥

(२)परिगायात् ॥ १९ ॥

उदवसानीयान्ते वा सर्वस्य समाप्तेः ॥ २० ॥

उदवसानीयान्ते वा वेदिमध्ये अग्न्याहरणादिकं कर्म कर्तव्यम्। कुत एतत्? सर्वं ह्यत्र समाप्तं भवतीति। यत् पूर्वमुक्तं 'अनूबन्ध्यान्त' इति। तद्वपामार्जनान्ते केशश्मश्रुलोमवपनं विहितम्। तत श्चोच्यते–'अन्त्ये वेदिमध्यमग्नीनाहृत्य' इति। प्रकृतत्वात 'अनूबन्ध्यान्त' एवेति गम्यते। अस्तु तथेति चेत। नान्तग्रहणस्य निरुपचरितवृत्त्या सर्वान्तप्रतिपत्तेः। तस्मात् 'उदवसानीयान्त' एव ॥ २० ॥

---

(१) मृतस्य आहिताग्नेर्या आवृत् इतिकर्तव्यता सा सर्वा भवति।

(२) द्वयोर्मध्ये एकेन साम्ना परिगायेत्।

जीवेच्चेदेतेनैवारम्भेण मुमूर्षेत् (१) ॥ २१ ॥

आरब्धत्वात् ॥ २१ ॥

जिजीविषेद्वा ॥ २२ ॥

जीवितुमपि चेदिच्छेदिति ॥ २२ ॥

(२)ऋत्विगपोह्नीयास्त्रयः ॥ २३ ॥

'ऋत्विगपोह्नीया' इति सामान्यसंज्ञा ॥ २३ ॥

तत्रैकः—

सर्वस्तोमः ॥ २४ ॥

अहनी चोत्तमे छान्दोमिके पृथक् कृत्वा(३) ॥ २५ ॥

क्रियेते । तन्त्रेण दृष्टत्वात्तयोः पृथग्ग्रहणम् ॥ २५ ॥

वाचस्तोमाश्चत्वारः ॥ २६ ॥

'वाचस्तोम'संज्ञकाश्चत्वारः क्रतवो भवन्ति ॥ २६ ॥

तत्र—

छान्दोग्ये विशेषः(४) ॥ २७ ॥

पृष्ठयस्तोमास्त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिण-

वत्रयस्त्रिंशाः ॥ २८ ॥

'पृष्ठयस्तोम' संज्ञकाः षट्क्रतवो भवन्ति त्रिवृदादयः ॥ २८ ॥

इति द्वाविंशेऽध्याये षष्ठी कण्डिका ।

चातुर्मास्याः सोमास्त्रिषु पर्वस्थानेषु पार्ष्ठिकानि

(५)पृष्ठ्यो विहृत इति श्रुतेः ॥ १ ॥

चातुर्मास्याः सोमाः तत्र च त्रिषु पर्वस्थानेषु पार्ष्ठिकान्यहानि च भवन्ति 'पृष्ठ्यो विहृतो भवति' इति श्रुतेः ॥ १ ॥

वैश्वदेवस्थाने प्रथमम् ॥ २ ॥

---

(१) एतेन सर्वस्वारारम्भेण मर्तुमिच्छेत् ।

(२) ऋत्विगपोह्नीयसंज्ञास्त्रयः क्रतवो भवन्ति ।

(३) द्वादशाहिकच्छन्दोमत्रयमध्ये उत्तमे अहनी उक्थ्यसंस्थे पृथक्कृत्वा द्वितीयतृतीयौ ऋत्विगपोह्नीयौ कार्यौ ।

(४) छन्दोगानां कर्मणि विशेषोऽस्ति ।

(५) पृष्ठ्यः षडहः तत्सम्बन्धीनि षडप्यहानि भवन्ति । कुतः ? 'पृष्ठ्यो विहृतो भवति' इति श्रुतेः । विहृतो विभक्तः शाखान्तरे श्रवणात्

(१)पार्ष्ठिकमहर्भवति ॥ २ ॥

तत्र—

अयूपम् ॥ ३ ॥

भवति ॥ ३ ॥

उत्तरवेद्यकरणं च ॥ ४ ॥

तत्र च—

परिधौ पशुनियोजनम् ॥ ५ ॥

द्वितीये (२)द्विदिवाख्यो द्व्यहः ॥ ६ ॥

द्वितीये पर्वस्थाने द्व्यहो भवति । 'द्विदिव' इत्याख्या तस्य ॥ ६ ॥

अग्निष्टोमं प्रथममेके ॥ ७ ॥

यत्प्रथममहरुक्थ्यसंस्थं तदग्निष्टोमसंस्थमेके (३)इच्छन्ति । एके उक्थ्यसंस्थम्। उक्थ्यस्य च संस्थामात्रान्यत्वं च धर्मास्तु तदीया एव॥७॥

(४)तृतीये त्र्यहोऽतिरात्र उत्तमः ॥ ८ ॥

तृतीये पर्वस्थाने पार्ष्ठिकस्त्र्यहो भवति । तत्र चातिरात्र उत्तमो भवति ॥ ८ ॥

अग्निष्टोमं प्रथममेके ॥ ९ ॥

एके षोडशिनमिच्छन्ति ॥ ९ ॥

ज्योतिष्टोमः शुनासीरीयस्थाने ॥ १० ॥

भवति । पार्ष्ठिकान्यहानि द्वादशदीक्षोपसत्कानि भवन्त्यतिग्राह्यव-न्ति । किं बहुना पृष्ठ्ये यद् दृष्टं तत्सर्वमत्र भवति ॥ १० ॥

पञ्चसु सवनीया वैश्वदेववारुणमारुताग्नेयैन्द्राग्नाः ॥११॥

(५)पञ्चस्वहःसु वैश्वदेवादयो यथासंख्येन सवनीयाः ॥ ११ ॥

(६)षष्ठे चैकादशिनाः ॥ १२ ॥

---

( १ ) पार्ष्ठिकम् अग्निष्टोमसंस्थम् ।

( २ ) वरुणप्रघासे द्विदिवसंज्ञको द्विरात्रः ।

( ३ ) वारुणप्रघासिकयोर्द्वयोरह्नोर्मध्ये प्रथममग्निष्टोमः । अतश्चा-त्वालाभावः । पैतुदावादेस्त्वग्न्यर्थत्वात्प्रवृत्तिः ।

( ४ ) तृतीये साकमेधे पार्ष्ठिकश्चतुर्थाहप्रभृति त्र्यहो भवति । अ-स्मिन् त्र्यहे उत्तमोऽतिरात्रो भवति ।

( ५ ) आदित आरभ्य क्रमेण ।

( ६ ) 'षष्ठे वा' इति पाठः । साकमेधानां तृतीयेऽतिरात्रसंस्थे एकादशिना वा प्राजापत्याः शाखान्तरात्। अतिरात्रस्तृतीयः प्राजापत्यः पशुरैकादशिनाश्चेति । चेति पाठे वाऽर्थो वाच्यः, त्वर्थे वा चः ।

भवन्ति ॥ १२ ॥

वायव्यः सप्तमे ॥ १३ ॥

(१)सप्तमेऽहनि वायव्यः सवनीयः ॥ १३ ॥

पञ्चाशतं पञ्चाशतं प्रत्यहं दद्यात्युत्तमे(२) द्वादशं शतम् ॥ १४ ॥

भवति । हिरण्यादेश्च निवृत्तिरत्र ॥ १४ ॥

वत्सा वा पञ्चाशतो (३)यथर्तुजाः ॥ १५ ॥

'यथर्तुजा' इति यो यो यस्मिन् यस्मिन् ऋतौ जातः स तत्र तत्र दीयते ॥ १५ ॥

प्रतिपर्वावभृथाः ॥ १६ ॥

भवन्ति । पार्ष्ठिकानामेकोऽवभृथो दृष्टः, स मा भूदिति 'प्रतिपर्व' ग्रहणम् । न्यायसूत्रमेतत् ॥ १६ ॥

पर्वान्तरेष्वहतं वस्ते(४) ॥ १७ ॥

वासः ॥ १७ ॥

अस्त्र्युपायी ॥ १८ ॥

स्त्रियं नोपगच्छेत् ॥ १८ ॥

अमांसाशी ॥ १९ ॥

मांसं नाश्नीयात् ॥ १९ ॥

अनूबन्ध्या बार्हस्पत्यामैत्रावरुणीसौर्याश्विन्यो यथाऽवभृथम् ॥ २० ॥

भवति ॥ २० ॥

प्रतिकर्म सोमाः ॥ २१ ॥

'व्याख्यास्यन्ते' इति सूत्रशेषः ॥ २१ ॥

अग्न्याधेयपुनराधेयाग्निहोत्रदर्शपूर्णमासदाक्षायणाग्रयणाः ॥ २२ ॥

एता एव संज्ञा एतेषाम् ॥ २२ ॥

उक्थ्यं पशुबन्धमेके ॥ २३ ॥

---

(१) शुनासीरीये । (२) उत्तमे सप्तमे शुनासीरीये ।

(३) यस्मिन्नृतौ वैश्वदेवादिसोमयागाः तस्मिन्नृतौ जाताः तदृतुजाः ।

(४) चतुर्णां पर्वणां त्रीण्यन्तरालानि । तेषु अहतं वस्त्रं परिधत्ते ।

पशुबन्धसोममेके उक्थ्यसंस्थमिच्छन्ति, एकेऽग्निष्टोमम् ॥ २३ ॥

इति द्वाविंशेऽध्याये सप्तमी कण्डिका ।

---

**प्रातः सवनीयाननु हवींꣳषि निर्वपति ॥ १ ॥**

प्रतिकर्म सोमेषु विशेष उच्यते । प्रातःसवने सवनीयाननु (१)हवींषि निर्वपति ॥ १ ॥

तत्र च—

**पयसी अग्निहोत्रयोः ॥ २ ॥**

अग्निहोत्रसोमयोः 'पयसी' अनुनिरूप्येते ॥ २ ॥

**(२)अन्त्यदेवताऽनूबन्ध्याऽद्या सवनीया ॥ ३ ॥**

तेषु कर्मसु याऽन्त्या देवता साऽनूबन्ध्यायां भवति, आद्या च सवनीया ॥ ३ ॥

**(३)एकदेवतेषूभयम् ॥ ४ ॥**

यत्र पुनः कर्मण्येकैव देवता यथा अग्निहोत्रे पुनराधेये च तत्रोभयन्तद्दैवत्यं भवति ॥ ४ ॥

**चातुर्मास्येषु (४)चैके(५) ॥ ५ ॥**

---

( १ ) सवनीयपुरोडाशनिर्वापाऽनन्तरं हविर्यज्ञरूपाग्न्याधेयादिसम्बन्धीनि हवींषि निर्वपति ।

( २ ) अन्ते भवा अन्त्या । आद्ये भवा आद्या । आद्या देवता सवनीयपशोर्भवति ।

( ३ ) एकदेवतेषु पुनराधेयसोमादिषु उभयमेकदैवत्यं भवति । यथा—

एकैका देवता मुख्या पयसी अग्निहोत्रयोः ।
इत्युक्तेः सायमाग्नेयी सौरी प्रातरिति श्रुतेः ॥
सा या पूर्वाहुतिः साग्निहोत्रस्य देवतेति च ।
योत्तरा स्विष्टकृच्छ्रुत्यैकैकाग्निहोत्रदेवता ॥
सवनीये ऽनूबन्ध्यायामेकैवातो ऽग्निहोत्रयोः ।
यच्छाङ्खायनके प्राजापत्या ऽनूबन्ध्यकोदिता ॥
द्वे सायमाहुती प्रातर्द्वे आहुती इति श्रुतेः ।
वस्तुतः समुदायानुवादोऽतस्तन्न युज्यते ॥
परन्तु वचनादत्र प्राजापत्या ऽनुबन्ध्यका ।

( ४ ) चात्पशौ सौम्याग्रयणे च ।

( ५ ) एके चातुर्मास्यसोमेषु अपि प्रातः सवनीयाननु चातुर्मास्यहवींषि आग्नेयादीनि निर्वपन्ति ।

चातुर्मास्यसोमेषु चैके निर्वापमिच्छन्ति। एके न। तत्र च मारुत्या न देशभेदः, सोमाङ्गाभावात्। अतिप्रणीत एव यागः। पितृयज्ञे चैवमेव॥५॥

सप्तदशाः पञ्च ॥ ६ ॥

'सप्तदश' संज्ञकाः (१)पञ्च क्रतवो भवन्ति ॥ ६ ॥

तद्विशेषानाह—

उपहव्योऽनिरुक्तो ग्रामकामस्य ॥ ७ ॥

'उपहव्य' इति विशेषसंज्ञा। स ग्रामकामस्य भवति अनिरुक्तश्च ॥७॥

अनृतं (२)वाऽभिशस्यमानस्य ॥ ८ ॥

अलीकं योऽभिशस्यते तस्याप्युपहव्यो भवति ॥ ८ ॥

(३)श्यावोऽश्वो दक्षिणा तं ब्रह्मणे ददाति ॥९॥

स्वर्गकामस्यर्तपेयः ॥ १० ॥

'ऋतपेय' इति विशेषसंज्ञा सप्तदशस्यैव। स स्वर्गकामस्य भवति ॥ १० ॥

दीक्षोपसदो द्वादश ॥ ११ ॥

"द्वादशदीक्षोपसदो भवन्ति" (ताण्ड्य० १८-२) इति वचनात् ॥११॥

तिस्र उपसदः ॥ १२ ॥

भवन्ति। "एकाहस्त्र्युपसत्कः" (का०श्रौ०८-२-३४) इति। शेषा नवदीक्षाः। एवं दीक्षोपसदां द्वादशसंख्या भवति ॥ १२ ॥

षड् वा ॥ १३ ॥

'वा' शब्दः पक्षव्यावृत्तौ। षडुपसदो भवन्ति षड्वा दीक्षाः। दीक्षोपसदां द्वादशसंख्या श्रूयते समविभागेनेति न्याय्यं 'समं स्यादश्रुतत्वात्' इति ॥ १३ ॥

उभयत्र वा द्वादशता गुणत्वात् ॥ १४ ॥

'वा' शब्दः पक्षान्तरपरिग्रहे। न दीक्षोपसदः संख्यां प्रति श्रूयन्ते किं तर्हि? दीक्षोपसदः प्रति संख्या श्रूयते। कुत एतत्? गुणत्वात् संख्यायाः। 'दीक्षोपसदो द्वादश भवन्ति' इत्यत्र संख्या दीक्षोपसदः प्रति

(१) वक्ष्यमाणाः पञ्च क्रतवः सप्तदशस्तोमका भवन्ति।

(२) अथवाऽनृतमसत्यमभिशस्यमानस्य मिथ्यादोषेण निन्द्यमानस्य।

(३) श्यावः कपिशवर्णः।

विधीयते। गुणो हि संख्या। गुणस्य च प्रतिप्रधानमावृत्तिर्न्याय्या। तस्माद्दीक्षासूपसत्सु च द्वादशसंख्येति ॥ १४ ॥

घृतं व्रतयति ॥ १५ ॥

यद् व्रतयति तद्घृतम्। ततश्च पयसो निवृत्तिः ॥ १५ ॥

तत्परिमाणमाह—

चमसं पूर्णमङ्गुलिपर्वणा (१)मौल्येन सर्वतः प्रमितमाद्यायामुपसदि ॥ १६ ॥

अङ्गुलिपर्वणा मौल्येन सर्वतः प्रमितं चमसं घृतस्य पूर्णं व्रतयति प्रथमायामुपसदि ॥ १६ ॥

(२)द्वितीयेन द्वितीयायाम् ॥ १७ ॥

द्वितीयेन पर्वणा प्रमितं द्वितीयायामुपसदि ॥ १७ ॥

तृतीयेन तृतीयायाम् ॥ १८ ॥

प्रमितम् ॥ १८ ॥

भक्षयिष्यन्तः सत्यं ब्रूयुः(३) ॥ १९ ॥

सोमान्भक्षयिष्यन्तः सत्यं वदेयुः। 'उष्णोऽग्निः' शीतमुदकम्' इत्येवमादि ॥ १९ ॥

(४)सदो वा प्रपत्स्यन्तः ॥ २० ॥

सत्यं ब्रूयुः। 'वा'शब्दो विकल्पार्थः ॥ २० ॥

सोमचमसो दक्षिणौदुम्बरः सगोत्राय ब्रह्मणे देयः ॥२१॥

औदुम्बरः सोमचमसो दक्षिणा। स सगोत्राय ब्रह्मणे देयः ॥ २१ ॥

(५)पूतभृतः सर्वार्थत्वात् ॥ २२ ॥

'पूतभृतः' सोमो गृह्यते। कुत एतत्? सर्वार्थत्वात्। "अतो हि देवेभ्य उन्नयन्त्यतो मनुष्येभ्योऽतः पितृभ्यः" ( श० ब्रा० ४-४-१-१२) इति। मनुष्यार्थमिदमेवोन्नयनमित्यभिप्रायः ॥ २२ ॥

---

( १ ) मौल्येन मूलभवेन अङ्गुलिपर्वणाङ्गुल्या मूल्यकाण्डेन सर्वतस्तिर्यगायामत ऊर्ध्वं च प्रमितं चमसं पूर्णं यजमानो व्रतयति।

( २ ) द्वितीयेनाङ्गुलिपर्वणा मध्यमेनाङ्गुलिपर्वणा मितं चमसं व्रतयति।

( ३ ) ऋत्विजः।

( ४ ) सदोमध्ये प्रवेशं करिष्यन्तः।

( ५ ) पूतभृतः सकाशात्सोमेन पूरयित्वा चमसो देयः।

(१)अꣳशुचमसमेके तेन स यजेतेति श्रुतेः ॥ २३ ॥

सोमाꣳशुचमसमेके इच्छन्ति। यत एवं श्रूयते—'तेन स यजेत' इति। एवं केश्चिद्विकल्प इष्यते। तत्पुनर्नातीव युक्तरूपम्। अन्यार्थे यागे अन्यस्यान्ययागान्तरं विधीयत इत्यसमञ्जसम्। तस्मात्प्रथम एव पक्षः 'पूतभृतः सर्वार्थत्वात्' इति।

ननु च 'तेन स यजेत' इति श्रुतिः कथं नेया। 'तेन स यजेत' तेन स जुहुयादित्यर्थः। 'यजति'शब्देन लक्षणया होमो विधीयते ॥ २३ ॥

अश्ववत् ॥ २४ ॥

अधिकरणातिदेशोऽयं 'तमुद्गात्रे ददाति' इत्यस्य। यद्येवं तेनैव गतार्थत्वादवाच्यमेतत्। लिङ्गोपन्यासार्थं पुनर्वचनम् ॥ २४ ॥

तदुच्यते—

(२)पशूपवादाच्च ॥ २५ ॥

इतरस्य सकलदाक्षिण्यस्य निवृत्तिः। येन पशूपवादो भवति। 'सत्यं वाऽऋतपेयोऽनृतं पशवोऽनृतं कुर्याद्य ऋतपेये पशून् दद्यात्' इति ॥ २५ ॥

(३)द्विनामोत्तरो बहुहिरण्यो दूणाशश्च ॥ २६ ॥

उत्तरः क्रतुः 'द्विनामा' बहुहिरण्यो 'दूणाश' इति च ॥ २६ ॥

इति द्वाविंशेऽध्यायेऽष्टमी कण्डिका ॥

---

दीक्षणीयायाꣳ हिरण्यं द्वादशमानं ददाति ॥ १ ॥

मानं च कृष्णलम्। लोके 'रक्तिका' इति यत्प्रसिद्धम्। इयं च दक्षिणा न क्रतुदक्षिणा, न चेष्टिदक्षिणाप्रतिप्रसवः। किं तर्हि ? अपूर्वत्वाद्दक्षिणान्तरमेव। ततश्च दक्षिणाधर्मो नात्र भवति। अन्ते च दानम् आगन्तुदक्षिणेति ॥ १ ॥

(४)उत्तरेषु च द्विगुणं पूर्वं पूर्वम् ॥ २ ॥

---

( १ ) अंशुचमसमनभिषुतसोमखण्डपूर्णं चमसं दक्षिणामिच्छन्ति।

( २ ) पशूपवादः पशुदाननिन्दा। पशूपवादाद्धेतोः सोमचमसः प्राकृतस्य दक्षिणादानादेर्निवर्तको भवति।

( ३ ) उत्तरस्तृतीयः सप्तदशः द्विनामा भवति बहुहिरण्य इत्येकम् दूणाशश्चेति द्वितीयम्।

( ४ ) वक्ष्यमाणेषु पूर्वोक्तं द्विगुणं देयम्।

दीयते ॥ २ ॥

प्रायणीयातिथ्योपसत्सु पशुवपान्ते प्रतिसवनं निहितेषु (१)सवनमुखीयेषूदयनीयायामनूबन्ध्यायामुदवसानीयायाᳫं स्रजं (२)चोद्गात्रे ॥ ३ ॥

हिरण्मयीं स्रजम् ॥ ३ ॥

रुक्मᳫं होत्रे ॥ ४ ॥

अनडुच्छतं (३)काले सर्वेभ्यः ॥ ५ ॥

इयं च क्रतुदक्षिणा ततश्च तद्धर्मो भवति 'सर्व'ग्रहणाच्च । इतरेषु हिरण्यादिदानेषु तत्कर्मयुक्ताः प्रतिपत्तव्याः ॥ ५ ॥

(४)वैश्यपशुकामयोर्वैश्यस्तोमः ॥ ६ ॥

वैश्यस्यापशुकामस्यापि पशुकामस्य वा वैश्यस्य ॥ ६ ॥

सवनान्या(५)शीर्वन्ति ॥ ७ ॥

भवन्ति ॥ ७ ॥

(६)प्रातःसवने (७)प्रतिदुहा श्रयणम् ॥ ८ ॥

दुग्धमात्रेण ॥ ८ ॥

शृतेन माध्यन्दिने ॥ ९ ॥

श्रयणम् ॥ ९ ॥

(८)तृतीयसवने दध्ना, दक्षिणा वत्सतराः पञ्चवर्षाः पृश्नयः ॥ १० ॥

---

( १ ) सवनमुखीयेषु चमसेषु हविर्धानमध्ये निहितेषु ।

( २ ) 'च' शब्दात्स्रग्रुक्मयोरुदवसानीयान्ते एव दानम् । तथा च सम्प्रदाये उदवसानीयान्ते स्रजो दानमुद्गात्रे, रुक्मस्य होत्रे ।

( ३ ) बलीवर्दानां शतं दक्षिणाकाले सर्वेभ्य ऋत्विग्भ्यः ।

( ४ ) वैश्यस्तोमसंज्ञक एकाहः वैश्यस्य पशुकामस्य च त्रैवर्णिकस्य भवति ।

( ५ ) आशीःशब्देन श्रयणं पयोद्रव्यं दधि वोच्यते ।

( ६ ) अभिषवोत्तरकालमाहवनीये प्रक्षिप्यते इति सम्प्रदायः ।

( ७ ) प्रतिदुहा—धारोष्णेन ।

( ८ ) तृतीये वैकृतं कार्यं पूर्वमाहवनीयके ।
पूतभृत्याशिरं पश्चात् प्राकृतं धर्ममात्रतः ॥

पृश्नयो विचित्राः ॥ १० ॥

वत्सतर्यश्च त्रिहायण्योऽप्रवीताः पञ्चवर्षा राजीवपृश्नयो नवनीतपृश्नयोऽरुणाः पिशङ्ग्यः सारङ्ग्य इति ॥ ११ ॥

अप्रवीताः—अकामिताः(१)। राजीवपृश्नयः—पद्मपृश्नयः। नवनीतपृश्नयो—नवनीतसदृशैश्चित्रैः। अरुणाः—कपिलाः। पिशङ्ग्यो—मांसवर्णाः। सारङ्ग्यो—वर्णान्तरोपध्वस्ताः(२) ॥ ११ ॥

(३)उभयस्य सहस्रं (४)द्वादशं वा शतम् ॥ १२ ॥

सहस्रपक्षे तदुक्तं भवति ॥ १२ ॥

सोमातिपूतस्य तीव्रसुदुक्थ्यः ॥ १३ ॥

'सोमातिपूतः' तद्विरेचनः ॥ १३ ॥

(५)अपरुद्धराजन्यस्य ॥ १४ ॥

भवति तीव्रसुत् ॥ १४ ॥

दीर्घव्याधिग्रामकामप्रजाकामपशुकामानां वा ॥ १५ ॥

एषां च 'तीव्रसुद्' भवति ॥ १५ ॥

(६)पूर्ववत्सोमाः १६ ॥

श्रयणवन्तो भवन्तीत्यर्थः ॥ १६ ॥

इति द्वाविंशेऽध्याये नवमी कण्डिका।

धेनुशतमाशिरे दुहन्ति ॥ १ ॥

अत्र विशेषः ॥ १ ॥

तदेव दक्षिणा ॥ २ ॥

भवति ॥ २ ॥

अच्छावाकविग्रहेषु भक्षणम् ॥ ३ ॥

---

(१) वृषभेणाभुक्ता इत्यर्थः।

(२) कर्बुराः, एवम्भूता वत्सतर्यो दक्षिणा भवन्ति।

(३) उभयस्येति वत्सतरगणस्य वत्सतरीगणस्य च मिलितं सहस्रं दद्यात्। (४) द्वादशभिरधिकं शतम्।

(५) अपरुद्धः राष्ट्रेण स्वराज्यात्प्रच्यावितः स चासौ राजन्यश्च तस्यायं भवति।

(६) अत्र तीव्रसुति सर्वेषु सवनेषु सोमाः 'पूर्ववत्' इति वैश्यस्तोमवदाशीर्वन्तो ( का० श्रौ० २२–६–८, ९, १०, ११, ) भवन्ति।

अवघ्राणमितरेषु ॥ ४ ॥

न भक्षणम् ॥ ४ ॥

तेष्वेवोन्नयनम् अभ्यभि सोमानुन्नयन्तीति श्रुतेः(१) ॥५॥

अध्वर्यू चमसाध्वर्यवश्च सर्वे प्रतिगृणन्त्यच्छावाकाय ॥६॥

छन्दानां प्रथमो राड्राजन्यस्य राज्यकामस्य ॥ ७ ॥

छन्दानां यः प्रथमो राट्संज्ञकः स राजन्यस्य राज्यकामस्य (२)क्रतुर्भवति ॥ ७ ॥

(३)यथाशक्त्येकविंशतिवर्गान्दद्यात् ॥ ८ ॥

ऋषभ ऐन्द्रः (४)परियज्ञः ॥ ९ ॥

'परि'शब्दसामर्थ्यादधस्ताच्चोपरिष्टाच्च भवति । यजनीयेषु ॥९॥

अन्नाद्यकामस्य विराट् ॥ १० ॥

विराडाख्यो छन्दसोमः सोऽन्नाद्यकामस्य भवति ॥ १० ॥

यथाशक्ति दशवर्गान्दद्यात्(५) ॥ ११ ॥

अत्र ॥ ११ ॥

पशुराग्नेयः परियज्ञः(६) ॥ १२ ॥

भवति ॥ १२ ॥

प्रजातिकामस्यौपसदः ॥ १३ ॥

औपसदो नाम छन्दः सोमः स प्रजाकामस्य भवति ॥ १३ ॥

---

( १ ) तेष्ववघ्रातेषु सोमोन्नयनं कर्तव्यम् । कुतः ? "अभ्यभि सोमानुन्नयन्ति" ( ताण्ड्य० १८-५ ) इति श्रुतेः । अत्र छन्दोगसूत्रम् ( लाट्या० श्रौ० ८-१०-१२ ) यानवजिघ्रेयुस्तेष्वेवाभ्युन्नयेयुः । अवघ्रातोऽपि भक्षित एवेति मत्वा न त्याज्य इत्यर्थः ।

( २ ) अग्निष्टोमसंस्थः ।

( ३ ) अत्र एकविंशतिसंख्याभिर्गोभिरेको वर्गः । एवंविधान् गवां वर्गान् त्रिप्रभृति यथाशक्ति दद्यादित्यर्थः ।

( ४ ) यज्ञारम्भात्पूर्वं यज्ञसमाप्त्यनन्तरञ्चेन्द्रदेवत्य ऋषभः परियज्ञो भवति ।

( ५ ) दशभिर्गोभिरेको वर्गः । त्रिप्रभृति यथाशक्ति गवां दशवर्गान्दद्यात् ।

( ६ ) ऐन्द्रपरियज्ञवदिति सूत्रार्थः ।

(१)दक्षिणाचतुर्विंशः शतम् ॥ १४ ॥

पशुर्वैश्वदेवः परियज्ञः ॥ १५ ॥

भवति ॥ १५ ॥

बहु प्रतिगृह्य गरगीरिव यो मन्येत तस्य पुनस्तोम उक्थ्यः ॥ १६ ॥

बहु प्रतिगृह्य गरगृहीतमिव आत्मानं मन्यते तस्य 'पुनस्तोम'संज्ञक उक्थ्यसंस्थो भवति ॥ १६ ॥

(२)दक्षिणा द्वादशमिथुना पुनर्वतीं च यथाशक्ति॥ १७ ॥

पशुकामयज्ञौ चतुष्टोमौ ॥ १८ ॥

चतुष्टोमसंज्ञकौ द्वौ यज्ञौ तौ पशुकामस्य भवतः ॥ १८ ॥

तयाश्च—

षोडश्युत्तरः । पूर्वस्मिन्यथाशक्त्येक(३)शफान्दद्यात्॥१९॥

उभयानुत्तरस्मिन् ॥ २० ॥

एकशफान् द्विशफांश्च ॥ २० ॥

उद्भिद्बलभिदौ (४)चाहरतः संयुक्तौ ॥ २१ ॥

'च' शब्दात्पशुकामयज्ञौ ॥ २१ ॥

'आहरतः संयुक्तौ' इति कोऽस्यार्थः—

पूर्वेणेष्टोत्तरेणावश्यम् ॥ २२ ॥

'यष्टव्यम्' इत्ययमर्थः ॥ २२ ॥

इषुरिष्टिरन्तरेणैनावाग्नेयः पुरोडाशः ॥ २३ ॥

उभौ उद्भिद्बलभिदौ अन्तरेण 'इषुरिष्टि' संज्ञा इष्टिर्भवति। आग्नेयः पुरोडाशः । 'आग्नेय' इति न्यायसंसूचनम् ॥ २३ ॥

---

(१) अत्र चतुर्विंशत्या अधिकं गवां शतं दद्यात् ।

(२) अत्र गवां द्वादशमिथुनानि । द्वादशगावो द्वादशसंज्ञाः। तथा पुनर्वतीं पुनःशब्दवतीं "पुनः संस्कृतोरथः" (का० श्रौ०४–६–१९) इत्यादि वस्तूनां यथाशक्ति दद्यात् ।

(३) अश्वाश्वतरगर्दभादीनेकखुरान् ।

(४) तावेकाहौ 'च' कारात्पशुकामयज्ञौ संयुक्तदर्शपूर्णमासवत्संहतावेव फलमाहरतः ।

अत्र विशेषः—

(१)उद्बूढः प्रस्तरः ॥ २४ ॥

वृहू निष्कर्षे । ऊर्ध्वं निष्कृष्ट इत्यर्थः ॥ २४ ॥

बाणवन्तः परिधयः ॥ २५ ॥

(२)'बाणवत्' शब्द इषौ हि दृष्टः । "द्वौ बाणवन्तौ सपत्नाधिव्याधिनौ हस्ते कृत्वोपोत्तिष्ठेत्" ( श० ब्रा० १४-६-८-२ ) इति । एतच्च शरेषूपपद्यते । एतच्च शाखान्तरेऽपि पठ्यते । तस्माद् बाणा एव परिधय इति ॥ २५ ॥

अर्धमासं मासꣳ संवत्सरं वा ॥ २६ ॥

(३)'इषुरिष्टिः' भवति ॥ २६ ॥

दक्षिणा (४)गायत्री चतुर्विꣳशतिवर्गा यथाशक्ति ॥२७॥

इयमेव 'गायत्री' इत्युच्यते ॥ २७ ॥

(५)अपचितिकामस्यापचिती ॥ २८ ॥

द्वौ क्रतू तावपचितिकामस्य भवतः । 'अपचितिः' पूजोच्यते॥२८॥

राजयज्ञावित्येके ॥ २९ ॥

एके आचार्या मन्यन्ते 'राजयज्ञौ' एताविति । एके त्रैवर्णिकस्यापि ॥ २९ ॥

दक्षिणाऽश्वरथश्चतुर्युगुभयतः ॥ ३० ॥

(६)उभयतश्चत्वार इत्यर्थः ॥ ३० ॥

काꣳस्यकवचः ॥ ३१ ॥

(७) रथो भवति ॥ ३१ ॥

---

( १ ) उद्वूढो बहिर्भारादग्रमार्गेण निष्काशितो भवति न प्रकृतिवन्मूलभागेन । ( २ ) अतिशयार्थे वतिः ।

( ३ ) उद्भिदा इष्ट्वा तत एव दिनादारभ्यार्धमासं, मासं, सम्वत्सरं वा प्रत्यहमियमिषुरिष्टिर्भवति ।

( ४ ) गायत्रीशब्दार्थमाह–'चतुर्विंशतिवर्गा' इति । चतुर्विंशतिसंख्याभिर्गोभिरेको वर्गः । एवंविधान् वर्गान् त्रिप्रभृति यथाशक्ति दक्षिणां दद्यात् ।

( ५ ) अपचितिसंज्ञावेकाहौ । ( ६ ) 'चत्वारश्चत्वार' इ० पा० ।

( ७ ) उभयतः पार्श्वे कांस्यकवचो रथो भवेत् । कांस्यधातुनिर्मितकवचः ।

(१)शतार्हा अश्वाः ॥ ३२ ॥

अश्वाः शतार्हा भवन्ति ॥ ३२ ॥

साग्निचित्यावग्निस्तोमौ (२)सर्वजिद्दीक्षौ ॥ ३३ ॥

'अग्निस्तोम'संज्ञकौ क्रतू साग्निचित्यौ भवतः ॥ ३३ ॥

पूर्वः पक्ष्युत्तरो ज्योतिः ॥ ३४ ॥

पूर्वस्य 'पक्षी' इति विशेषसंज्ञा, उत्तरस्य च 'ज्योतिः' इति ॥३४॥

इति द्वाविंशेऽध्याये दशमी कण्डिका।

---

(३)धान्याचितानि चत्वारि-चत्वारि दक्षिणा ॥ १ ॥

अग्निस्तोमयोर्धान्यस्य पूर्णान्यनांसि चत्वारि दक्षिणा ॥ १ ॥

पूर्वस्य (४)षड्गवान्युत्तरस्य (५)चतुर्गवानि ॥ २ ॥

पूर्वस्य पक्षिणः षड्गवानि भवन्ति। उत्तरस्य ज्योतिषश्चतुर्गवानि ॥ २ ॥

ऋषभगोसवौ ॥ ३ ॥

ऋषभश्च गोसवश्च ऋषभगोसवौ क्रतू भवतः ॥ ३ ॥

पूर्वो राज्ञः ॥ ४ ॥

पूर्व ऋषभसंज्ञको राज्ञः ॥ ४ ॥

(६)दक्षिण (७)ऋषभसहस्रं द्वादशं वा शतम् ॥ ५ ॥

विकल्पेन ॥ ५ ॥

उक्थ्यो गोसवोऽयुतदक्षिणः ॥ ६ ॥

'गोसव' संज्ञकः क्रतुरुक्थ्यसंस्थो भवति अयुतदक्षिणश्च ॥ ६ ॥

वैश्यय़ज्ञ इत्येके ॥ ७ ॥

मन्यन्ते। सर्वेषामित्यपरे ॥ ७ ॥

---

(१) अत्र रथे गोशतेन मूल्यभूतेन येषामेकैको लभ्यते।

(२) "सर्वजित्समहाव्रतः०" ( का० श्रौ० २२-१-४४) इत्यादि।

(३) धान्यैर्व्रीहियवादिभिराचितानि पूर्णानि चत्वारि चत्वारि शकटानि दक्षिणा।

(४) षड्भिर्बलीवर्दैर्युक्तानि।

(५) चतुर्भिरनडुद्भिर्युक्तानि।

(६) 'दक्षिणा' इ० पा०।

(७) ऋषभाणां सहस्रं, द्वादशाधिकं शतं वा।

(१)सराजानो विशो यं पुरस्कुर्वीरन्त्स एतेन यजेत ॥ ८ ॥

गोसवेन ॥ ८ ॥

(२)स्थण्डिलेऽभिषिच्यते प्रतिदुहाहवनीयस्य दक्षिणतः॥९॥

स्थितः। आगन्तुत्वादन्ते ॥ ९ ॥

स्थपतिरित्येनं ब्रूयुः ॥ १० ॥

गोसवयाजिनं जनाः ॥ १० ॥

वैश्वस्तोमदक्षिणालिङ्गो मरुत्स्तोमो गणयज्ञः भ्रातृणाꣳ सखीनां वा ॥ ११ ॥

वैश्वस्तोमदक्षिणायां यानि यानि लिङ्गानि(३) तान्यत्रापि भवन्ति। 'मरुत्स्तोम' इति च संज्ञा। भ्रातृणां सखीनां वास भवति 'गणयज्ञः'॥११॥

प्रजाकामपशुकामयोरैन्द्राग्नकुलायः कुलदक्षिणः ॥१२॥

'ऐन्द्राग्नकुलाय' इति संज्ञा। गोकुलश्चास्य दक्षिणा ॥ १२ ॥

स च—

(४)द्वियज्ञो भ्रात्रोः सख्योर्वा ॥ १३ ॥

इन्द्रस्तोमो राजयज्ञः सहस्रं दक्षिणा ॥ १४ ॥

सहस्रं चास्य दक्षिणा ॥ १४ ॥

उक्थ्यः ॥ १५ ॥

उक्थ्यसंस्थश्चासौ भवति ॥ १५ ॥

पुरोधाकामस्येन्द्राग्न्योस्तोमः ॥ १६ ॥

भवति। पौरोहित्यकामस्य ॥ १६ ॥

राजपुरोहितयोर्वा सह यजमानयोः ॥ १७ ॥

---

(१) राज्ञा सहिता विशः प्रजाः सर्वे पुरुषा यं पुरस्कुर्वीरन् मुख्यत्वेनाङ्गीकुर्वीरन् स गोसवेन यजेत।

(२) आहवनीयाद्दक्षिणस्यां स्थण्डिले उपविष्टो यजमानः प्रतिदुहा धारोष्णेन दुग्धेनाभिषिच्यते।

(३) "दक्षिणा वत्सतराः पञ्चवर्षा" (का० श्रौ० २२-९-१२) इत्युक्तानि इत्यर्थः।

(४) द्वयोर्भ्रात्रोर्द्वयोः सख्योर्वा। कुलदक्षिणः गोकुलानि चास्य दक्षिणा। इदं सरस्वत्याः कुलम्, इदं यमुनायाः कुलम् इत्येवमाज्ञतं पूरयेत्।

तं प्रकृत्य हि श्रूयते-'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' ( ताण्ड्य० २९-१७ ) इति ॥ १७ ॥

पृथग्वा ॥ १८ ॥

सह । 'वा' इति विकल्पः ॥ १८ ॥

दक्षिणा (१)गायत्रीसम्पन्ना ब्राह्मणस्य ॥ १९ ॥

यष्टुर्भवति ॥ १९ ॥

जगत्या राज्ञः ॥ २० ॥

(२)जगत्यासम्पन्ना राज्ञः। सह पक्षे (३)प्राकृतदक्षिणः ॥ २० ॥

(४)विघनौ पशुकामस्य ॥ २१ ॥

'विघन' संज्ञकौ क्रतू पशुकामस्य भवतः ॥ २१ ॥

अभिचरतो वा ॥ २२ ॥

तौ भवतः ॥ २२ ॥

बृहतीसम्पन्नाः पशुकामस्य ॥ २३ ॥

दक्षिणाः(५) ॥ २३ ॥

अभिचरतः प्रज्ञाताः ॥ २४ ॥

प्राकृताः ॥ २४ ॥

सन्दंशवज्रावभिचरतः ॥ २५ ॥

सन्दंशश्च वज्रश्च (६)तावभिचरतो भवतः ॥ २५ ॥

षोडशी वज्रः ॥ २६ ॥

वज्रः षोडशिसंस्थो भवति ॥ २६ ॥

(७)शुण्ठाधी (८)लोहाकर्णी षोडशिनः सोमक्रयणी ॥ २७ ॥

भवति ॥ २७ ॥

---

( १ ) गायत्र्यक्षरसमानसंख्याश्चतुर्विंशतिर्गावो दक्षिणा ।

( २ ) जगत्यक्षरसमानसंख्या अष्टाचत्वारिंशद्गावो भवन्ति ।

( ३ ) 'प्राकृती दक्षिणा' इ० पा० ।

( ४ ) विघनौ नाम एकाहावग्निष्टोमसंस्थौ द्वन्द्वसोमौ ।

( ५ ) षट्त्रिंशद्गावो भवन्ति । ( ६ ) इमौ द्वन्द्वसोमौ ।

( ७ ) शुण्ठाधी-पीतमुखी । वेष्टितमुखी इति केचित् । पीतपुच्छी इत्येके ।

( ८ ) लोहाकर्णी-लोहितकर्णी ।

(१)अहर्गणेऽप्यविशेषात् ॥ २८ ॥

अहर्गणे गतेऽपि षोडशिनि उक्तलक्षणयैव सोमक्रयणी भवति। कुत एतत्? अविशेषात्। अहर्गणगतोऽपि षोडशी षोडश्येव। न च संस्थान्तरैर्विरोधोऽस्ति ॥ २८ ॥

(२)विश्वजित्परिवासाश्च ॥ २९ ॥

अहर्गणगतेऽपि विश्वजिति परिवासा भवन्ति। तुल्यन्यायत्वात् ॥ २९ ॥

न वा स्वसम्बन्धात् ॥ ३० ॥

न वाऽहर्गणगते विश्वजिति परिवासा भवन्ति। सर्वस्वदानसम्बन्धेन हि तेषां श्रवणमिति। अथवा 'स्वसम्बन्धात्' इति। विश्वजिद्याजिसम्बन्धात्। न चाहर्गणयाजी। तस्मान्न भवन्ति ॥ ३० ॥

एकराजमेव पूर्वेणाभिचरेत् ॥ ३१ ॥

पूर्वेण सन्दंशेन राजानमेवैकमभिचरेत्, न जनपदम् ॥ ३१ ॥

(३)जनपदं वज्रेण ॥ ३२ ॥

व्यत्यासं वैनौ प्रयुञ्जीत ॥ ३३ ॥

वज्रेण राजानं तज्जनपदं च सन्दंशेन ॥ ३३ ॥

शमित्वा स्तृत्वा वा ज्योतिष्टोमेन यजेत शान्त्यर्थेन शान्त्यर्थेन ॥ ३४ ॥

अभिचारादुपशमं गत्वा मारयित्वा वा शत्रुं ज्योतिष्टोमेन शान्त्यर्थेन यजेत ॥ ३४ ॥

इति द्वाविंशेऽध्याये एकादशी कण्डिका।

इत्युपाध्यायकर्ककृतौ कात्यायनसूत्रविवरणे

द्वाविंशतिमोऽध्यायः समाप्तः।

---

(१) यस्मिन्नहर्गणे षोडशिसंस्थमहः तस्मिन्नपि शुण्ठाधी, लोहाकर्णी, सोमक्रयणी भवन्ति।

(२) अहर्गणेऽपि विश्वजिति विश्वजित्परिवासा भवन्ति "द्वादशरात्रं परिवसति" (का० श्रौ० २२-१-२१) इत्यादयः।

(३) वज्रसंज्ञेन जनपदं सकलदेशमभिचरेत्।

# त्रयोविंशोऽध्यायः।

**द्वादशोपसत्का अहीना मासापवर्गाः ॥ १ ॥**

ननु च द्वादशोपसत्कत्वं न वाच्यम्, अन्यथाप्यत्प्राप्तेः। अहीनात्मकस्य हि द्वादशाहस्य अहीनान्तरेषु सामान्याद्धर्मप्रवृत्तिरिष्यते। तेन द्वादशोपसत्कत्वं प्राप्तमेवात्रेति। अत्रोच्यते—"दीक्षाः सुत्योपसच्छेषेण" (का० श्रौ० २३-१-९) इति वक्ष्यति। जामदग्न्ये चतूरात्रे दीक्षाणां विंशतिरुक्ता (का० श्रौ० २३-२-१)। तत्र मासापवर्गत्वे सति किं जामदग्न्ये मासापवर्गता बाध्यताम्, उतोपसदां द्वादशत्वमिति। तेन मासापवर्गताबाधनाय द्वादशोपसत्कत्व मुच्यते, वचनात्(१) मासापवर्गास्ते भवन्ति ॥ १ ॥

**(२)दीक्षाः सुत्योपसच्छेषेण ॥ २ ॥**

सौत्यान्यहानि परिगणय्य औपसदानि च शेषा दीक्षाः ॥ २ ॥

**द्व्यहप्रभृतयो द्वादशाहपर्यन्ताः ॥ ३ ॥**

द्विरात्रप्रभृतयो द्वादशरात्रपर्यन्ता अहीनाः ॥ ३ ॥

**(३)तत्राम्नानादतिरात्रांश्चैके ॥ ४ ॥**

तन्मध्य आम्नानात् अतिरात्रांश्च एके अहीनधर्मकानिच्छन्ति प्रायोवचनन्यायात्। यथा कितवमध्यस्थो ऽकितवोऽपि कितव इवानुमीयते साहचर्यादेव। एके तत्रेच्छन्ति। धर्मप्राप्तिर्हि वचनाद्भवति। न चेह वचनमस्ति प्रत्यक्षम्, न चानुमानिकम्, न च नामधेयम्। तस्मान्नाहीनधर्मका अतिरात्राः। न च सन्निधावाम्नानमात्रेण धर्माणां प्रवृत्तिर्युक्ता ॥ ४ ॥

**दाशरात्रिकाण्यहानि (४)द्व्यहादिष्वेकोच्चयेन तद्गुणदर्शनात् ॥ ५ ॥**

---

(१) मासेनापवर्गः समाप्तिः येषाम्। मासश्चात्र सावनस्त्रिंशाह्निनात्मकः

( २ ) सुत्योपसदां शेषेण दीक्षा भवन्तीत्यर्थः।

( ३ ) तेषां अहीनानां मध्ये पठनात् अतिरात्रान् नवसप्तदशादीन् वक्ष्यमाणान् त्रयोदशसंख्यान् अहीनधर्मकानेके इच्छन्ति। अन्य एकाहधर्मकान्। अतः कठमैत्रादिसूत्रेषु एकाहमध्य एव त्रयोदशातिरात्राः सूत्रिताः। अत एकाहधर्मका एवेति सिद्धम्।

( ४ ) द्व्यहादिष्वहीनेषु एकोच्चयेन दाशरात्रिकाण्यहानि द्वादशाहिकदशरात्रसम्बन्धीन्यहानि भवन्ति। कुतः? 'तद्गुणदर्शनात्' दाशरा-

द्वादशाहे यो दशरात्रस्तदीयान्यहानि भवन्ति द्विरात्रादिषु । कुत एतत्? तद्गुणदर्शनात् । तद्गुणा हि दृश्यन्ते द्विरात्रं प्रकृत्य "अपशव्यो वै द्विरात्र इत्याहुः द्वे ह्येत छन्दसी गायत्रं च त्रैष्टुभं(च) जगतीमन्तर्यन्ति जगत्यत्र न भवति" इति । त्रैष्टुभमेके (इति) वैखानसविधिपरे वाक्ये सिद्धं गायत्रं प्रथममहस्त्रैष्टुभं च द्वितीयं दर्शयति । यदि च दाशरात्रिकाण्यहानि त्र्यहादिषु तदेतदुपपद्यते । तथा त्रिकद्रुकविधिपरे वाक्ये पृष्ठ्यमवसितं दर्शयति। लिङ्गमात्रमुपदिष्टम् । न्यायोऽभिधीयते । द्विरात्रादिष्वहर्गणेषु गुणत्वसामान्याद् द्वादशाहिका विध्यन्त इष्यते । तत्र च प्रायणीयोदयनीयावतिरात्रौ । सर्वत्र प्रत्यक्षो दशरात्र एव प्रवृत्तिधर्मः । अपि च द्विरात्रस्त्रिरात्र इति च रात्रिसामान्याद्दाशरात्रिकी विध्यन्तप्रवृत्तिर्युक्तेति तस्मात्साधूक्तमाचार्येण "दाशरात्रिकाण्यहानि त्र्यहादिषु" इति ॥ ५ ॥

सहस्रदक्षिणाः ॥ ६ ॥

द्विरात्रादयो भवन्ति ॥ ६ ॥

चतूरात्रादिष्वधिकम् ॥ ७ ॥

चतूरात्रादिषु तु सहस्राधिका दक्षिणा(१) ॥ ७ ॥

प्राकृतं वा प्रत्यहम् ॥ ८ ॥

'वा' शब्दो विकल्पार्थः । प्राकृतं दक्षिणादानं द्विरात्रादिषु वा भवति(२) ॥ ८ ॥

पौण्डरीकेऽयुतम् ॥ ९ ॥

दक्षिणा ॥ ९ ॥

समविभक्ताः प्रत्यहं ददाति ॥ १० ॥

(३)प्रत्यहं समविभागेन दक्षिणादानम् ॥ १० ॥

(४)अन्त्येऽहन्याधिकाः ॥ ११ ॥

---

त्रिकाहर्गुणानां त्र्यहादिषु शाखान्तरे दर्शनात् । एकोत्तरेणेत्यकैकाहवृद्ध्या तेन त्र्यहेष्वेकम्, त्र्यहेषु द्वे, चतुरहे त्रीणि ।

(१) तेषां गवां सहस्रं किञ्चिदधिकम् ।

(२) सन्निधानात् चतूरात्रादिष्वपि वासुदेव इति देवयाज्ञिकभाष्ये ।

(३) तेन त्र्यहेष्वन्वहं पञ्च पञ्च शतानि, त्र्यहेऽन्वहं त्रीणि त्रीणि शतानि त्रयस्त्रिंशदधिकानि ददाति ।

(४) समविभागे क्रियमाणे या अधिका अवशिष्यन्ते ता अन्त्येऽहनि देयाः ।

विभागाधिकानामन्त्येऽहनि दानम् ॥ ११ ॥

त्रयोदशातिरात्राः ॥ १२ ॥

'व्याख्यायन्ते' इति सूत्रशेषः ॥ १२ ॥

तेषाम्—

चत्वारो ऽषोडशिकाः प्रथमाः ॥ १३ ॥

षोडशिग्रहरहिताश्चत्वारः प्रथमाः ॥ १३ ॥

(१)प्रजातिकामस्य नवसप्तदशः ॥ १४ ॥

(२)भवति ॥ १४ ॥

ज्येष्ठस्य (३)ज्यैष्ठिनेयस्य विषुवान् ॥ १५ ॥

अतिरात्रो भवति ॥ १५ ॥

गौश्चातृव्यवतः ॥ १६ ॥

स्वर्गकामस्यायुः ॥ १७ ॥

आमयाविनो (४)वा ॥ १८ ॥

भवति ॥ १८ ॥

ज्योतिष्टोमविश्वजित्सर्वपृष्ठपञ्चदशसप्तदशैकविंशा यथासंख्यमृद्धिपशुब्रह्मवर्चसवीर्यान्नाद्यप्रतिष्ठाकामानाम् ॥ १९ ॥

(५)भवन्ति ॥ १९ ॥

असोर्यामः प्र प्रेव यस्मात्पशवो भ्रंशेरन् ॥ २० ॥

प्राप्ता इव यस्मात्पशवो भ्रश्यन्ते तस्य 'असोर्यामो' भवति ॥ २० ॥

अभिजित् भ्रातृव्यवतः ॥ २१ ॥

---

(१) तत्र प्रथममतिरात्रमाह—इत्यवतरणिका श्रीदेवयाज्ञिकैः लिखिता । (२) नवसप्तदशसंज्ञकः ।

(३) यस्या योषितो ज्येष्ठो भ्राता विद्यते सा ज्येष्ठिनी तस्याः पुत्रो ज्यैष्ठिनेयः पुमानिति माधवः । ज्येष्ठो वै ज्यैष्ठाधिकारं कामयते मयाऽनुजाः कथमपि भोजनाच्छादनादिदानेन निश्चिन्ताः कर्तव्या इति ज्यैष्ठिनेयं तदिच्छोः स्यात् इति श्रीअनन्तः ।

नैश्चिन्त्यमनुजानां यज्ज्यैष्ठिनेयं तदुच्यते—
तत्कामस्याग्रजस्यात्र विषुवान्बोध्यते मघाः ॥ इति वासुदेवः

(४) आमयाविनो रोगिणो वा ।

(५) ऋद्धिकामादीनां षण्णामधिकारिणां ज्योतिष्टोमादयः षडतिरात्रा भवन्ति ।

सर्वस्तोमो बुभूषतः ॥ २२ ॥

भूतिमिच्छतः 'सर्वस्तोमो' भवति ॥ २२ ॥

यूपैकादशिनी चास्मिन् ॥ २३ ॥

भवति ॥ २३ ॥

इति त्रयोविंशेऽध्याये प्रथमा कण्डिका ॥

---

त्र्यहास्त्रयः ॥ १ ॥

(१)भवन्ति ॥ १ ॥

अषोडशिकावतिरात्रा उत्तरयोः ॥ २ ॥

(२)द्विरात्रयोः ॥ २ ॥

आङ्गिरसचैत्ररथकापिवनाः ॥ ३ ॥

एतेषामेव संज्ञाः ॥ ३ ॥

द्वितीयमुक्थ्यपूर्वमेके ॥ ४ ॥

द्वितीयं द्विरात्रमेके उक्थ्यपूर्वं कुर्वन्ति । पार्ष्ठिकस्याग्निष्टोमस्य स्थाने उक्थ्यं कुर्वन्ति । संस्थामात्रान्यत्वं, धर्मास्तु तदीया एव ॥ ४ ॥

प्रथमेन यजेत यः (३)पौण्यो हीन इव स्यात् ॥ ५ ॥

पुण्यार्हः सन्पुण्यैर्न युज्यत इत्यर्थः ॥ ५ ॥

(४)द्वितीयेन प्रजाकामः ॥ ६ ॥

(५)तृतीयेन स्वर्गकामः पशुकामो वा ॥ ७ ॥

(६)त्र्यहाः पञ्च ॥ ८ ॥

गर्गवैदच्छन्दोमान्तर्वसुपराकाः ॥ ९ ॥

द्वितीये त्रिवृतोऽतिरात्राः सर्वे(७)राज्यकामस्य॥ १० ॥

त्रिवृत्स्तोमयुक्ता अतिरात्राः राज्यकामस्य भवन्ति क्रतवः ।

---

( १ ) त्रिसुत्यास्त्रयोऽहीना । ( २ ) द्वितीयतृतीययोः ।

( ३ ) पुण्येषु श्रौतस्मार्तेषु साधुः पौण्यः । तादृशोऽपि सन्यो हीन इवस्यात् । पुण्यात्मनाम् सर्वैः पूज्यानां मध्ये पूजारहित इव स्यात् स प्रथमेन आङ्गिरससंज्ञकेन यजेतेत्यर्थः । ( ४ ) चैत्ररथनाम्ना ।

( ५ ) कापिवननाम्ना । ( ६ ) त्र्यहास्त्रिसुत्याः पञ्चाहीनाः ।

( ७ ) वैदत्रिरात्रे सर्वे त्रयोऽपि सौत्याः क्रतवोऽतिरात्रसंस्था भवन्ति ।

तत्रापि संस्थान्यत्वमात्रम् ॥ १० ॥

अन्तर्वसुः पशुकामस्य ॥ ११ ॥

भवति ॥ ११ ॥

पराकः स्वर्गकामस्य ॥ १२ ॥

भवति ॥ १२ ॥

(१)चतुरहाश्चत्वारः ॥ १३ ॥

अत्रिचतुर्वीरजामदग्नवासिष्ठसꣳसर्पविश्वामित्राः ॥१४॥

संज्ञा एताः ॥ १४ ॥

जामदग्नो विꣳशतिदीक्षः पुष्टिकामस्य ॥ १५ ॥

भवति ॥ १५ ॥

तत्र च—

उपसदः पुरोडाशिन्यः ॥ १६ ॥

"उपसदः पुरोडाशिन्यो भवन्ति"(ता०ड्य० २१-११)इति वचनात्॥१६

अनूपसदं जुहोति ॥ १७ ॥

उपसद्युपसदि पुरोडाशान् जुहोतीत्यर्थः ॥ १७ ॥

यदा चानूपसदं पुरोडाशहोमस्तदा चिन्त्यते। किमाज्यधर्मा भवन्ति, उत औषधधर्मा इति। किं तावत्प्राप्तम्। सूत्रेणैव पक्षः—

आज्यधर्मास्थानापत्तेः(२) ॥ १८ ॥

कार्यापत्तौ हि धर्मप्राप्तिर्युक्तेति ॥ १८ ॥

एवं प्राप्त आह—

औषधधर्मा (३)वा द्रव्यसामान्यात् ॥ १९ ॥

औषधधर्मा वा भवन्ति नाज्यधर्माः। सत्यामपि कार्यापत्तौ पुरोडाशद्रव्यं ह्यत्र पर्युपस्थापकं धर्माणाम्। कार्यापत्तिरिति कृत्वाऽभिहितमेतत्। न चेह कार्यापत्तिः ॥ १९ ॥

अनुहोमाश्च पुरोडाशाः ॥ २० ॥

अनुहोमा हि पुरोडाशाः श्रूयन्त इति "अनूपसदं जुहोति" (का०

(१) चत्वारोऽहीनाश्चतुरहाश्चतुःसुत्या भवन्ति।

(२) पुरोडाशानामाज्यस्थानापन्नत्वात्। प्रकृतौ ह्याज्यमुपसद्द्रव्यम्।

(३) वावधारणे। औषधधर्माः पुरोडाशधर्माः। कुतः? द्रव्यसामान्यात्। पुरोडाशानां पुरोडाशेन सामान्यं यतः।

श्रौ० २३-२-१७ ) इति । उपसद्यागमनु जुहोतीत्यर्थः ॥ २० ॥

प्रत्युपसदमेकोच्चयेन कपालान्येककपालप्रभृतीनामाग्नेयाश्विनवैष्णवसौम्यसावित्रधात्रमारुतबार्हस्पत्यमैत्रवारुणैन्द्रवैश्वदेवाः(१)॥ २१ ॥

एतद्देवत्याः पुरोडाशाः। तेषां चैकोच्चयेन कपालानि एकप्रभृतीनि भवन्ति। 'अनूपसदं जुहोति' इति च जुहोतिसंशब्दनाज्जुहोतय एते॥२१॥

इति त्रयोविंशेऽध्याये द्वितीया कण्डिका ॥

---

तेषाꣳ होमः ॥ १ ॥

अग्ने वेर्होत्रं वेरध्वरमा पितरं वैश्वानरमवसे करिन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ २ ॥

देवावश्विनौ मधुकशयाद्येमं यज्ञं यजमानाय मिमिक्षतमिन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ ३ ॥

देव विष्ण उर्वद्यास्मिन्यज्ञे यजमानायाधि विक्रमस्वेन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ ४ ॥

देव सोम रेतोधा अद्यास्मिन्यज्ञे यजमानायैधीन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ ५ ॥

देव सवितः सुसावित्रमद्यास्मिन्यज्ञे यजमानायासुवस्वेन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ ६ ॥

देव धातः सुधाताद्यास्मिन्यज्ञे यजमानायैधीन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ ७ ॥

देवा ग्रावाणो मधुमतीमद्यास्मिन्यज्ञे यजमानाय वाचं वदतेन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ ८ ॥

देव्यनुमतेऽन्वद्येमं यज्ञं यजमानाय मन्यस्वेन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ ९ ॥

---

(१) एककपालादीनां द्वादशानां पुरोडाशानां प्रत्युपसदमेकोच्चयेन कपालानि भवन्तीत्यर्थः।

देव्यदिते स्वादिग्यमद्यास्मिन्यज्ञे यजमानायास्सुव-स्वेन्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ १० ॥

देव्य आपो नंनम्यध्वमद्यास्मिन्यज्ञे यजमानाये-न्द्राय देवेभ्यो जुहुता हविः स्वाहा ॥ ११ ॥

सदः सदः प्रजावान्भुर्जुषाण इन्द्राय देवेभ्यो जुहु-ता हविः स्वाहा ॥ १२ ॥

देव त्वष्टः सुरेतोधा अद्यास्मिन्यज्ञे यजमानायैषी-न्द्राय देवेभ्यो जुहुता हविः स्वाहेति(१) ॥ १३ ॥

इत्येवमादि निगदव्याख्यातम् ॥ १-१३ ॥

एतैः सुत्यान्ते(२) द्वादशाहं यजने प्रतिलोममेकैकेन ॥१४॥

एतद्धर्मकैः पुरोडाशैः सुत्यान्ते सुत्यासन्निधौ द्वादशाहानि यजेत प्रातिलोम्येन। 'यजेत' इति संशब्दनाच्च यजतय एते न जुहोतयः॥१४॥

इति त्रयोविंशेऽध्याये तृतीया कण्डिका ॥

पञ्चाहास्त्रयः ॥ १ ॥

भवन्ति ॥ १ ॥

देवानां प्रथमः ॥ २ ॥

प्रथमस्य 'देवपञ्चाह' इतीयं संज्ञा ॥ २ ॥

द्वितीयः पञ्चशारदीयः ॥ ३ ॥

द्वितीयस्य 'पञ्चशारदीय' इतीयं संज्ञा ॥ ३ ॥

तेन यक्ष्यमाणः पञ्चवर्षाण्या(३)श्वयुजीशुक्लेषु चतु-स्त्रिंशतं पशूनालभते मारुतान् ॥ ४ ॥

'तेन' इति पञ्चशारदीयोपलक्षणम् ॥ ४ ॥

वैरूपस्तोमदक्षिणालिङ्गान् ॥ ५ ॥

---

(१) तेषामाग्नेयादीनां पुरोडाशानां "अग्ने वेर्होत्रम्" इत्यादयो होममन्त्राः यथाक्रममेभिर्मन्त्रैर्होमः कार्य इत्यर्थः।

(२) सुत्यानामन्ते यज्ञसमाप्त्यनन्तरं पूर्वाह्णापराह्णयोर्यागं कुर्यात्।

(३) आश्वयुजी पौर्णमासीसम्बन्धिषु शुक्लपक्षेषु आश्विनशुक्लपक्षे सप्तम्यामष्टम्यां वेत्यर्थः।

वैश्यस्तोमे दक्षिणायां यानि लिङ्गानि 'राजीवपृश्नय' इत्येवमादीनि तल्लिङ्गानालभते ॥ ५ ॥

उक्ष्णो वत्सतरीर्वर्णानुपूर्व्येण ॥ ६ ॥

प्रतिवर्षम्(१) ॥ ६ ॥

(२)अर्धा वत्सतर्यः ॥ ७ ॥

तेषां च पशूनामर्धा वत्सतर्यो भवन्ति ॥ ७ ॥

पर्यग्निकृतानुत्सृजन्त्युक्ष्णो वत्सतरीभिः सꣳस्थापयन्ति ॥ ८ ॥

'उक्ष्णां (३)तदङ्गरीतिविधानम् । वत्सतरीभिः परिसमाप्तिः ॥ ८ ॥

एवं पञ्च वर्षाण्युक्ष्णो नियुञ्जन्ति(४) ॥ ९ ॥

"ताꣳश्चैवोक्ष्ण" ( ताण्ड्य० २१-१४ ) इति वचनात् तानेव । वत्सतर्यस्तु प्रतिवर्षं वर्णानुपूर्व्येणान्याश्चान्याश्च भवन्ति ॥ ९ ॥

(५)षष्ठे सवनीया भवन्ति त्रयस्त्रयोऽन्वहमैन्द्रामारुताः ॥ १० ॥

षष्ठे वर्षे त एवोक्षाणः सवनीया भवन्त्यन्वहं त्रयस्त्रयः ॥ १० ॥

पञ्चोत्तमे(६) ॥ ११ ॥

उत्तमे ऽहनि पञ्च ॥ ११ ॥

यः कामयेत बहुः स्यामिति स एतेन यजेत ॥ १२ ॥

पञ्चशारदीयेन ॥ १२ ॥

---

( १ ) तत्र प्रतिवर्षमुक्ष्णो वृषभान् वर्णानुपूर्व्येण वर्णक्रमेण वत्सतरीश्चालभते । उक्षाणो वृषभाः साण्डाः सेचनसमर्थाः पञ्चवर्षाः पृश्नयो विचित्रवर्णा आलभ्यन्ते । वत्सतर्यश्च त्रिवर्षा अप्रवीता ऋषभेणाभुक्ताः । पञ्चवर्णा वत्सतर्यः सन्ति । प्रथमे वर्षे राजीवपृश्नयः, द्वितीये नवनीतपृश्नयः, तृतीये अरुणाः, चतुर्थे पिशङ्ग्यः, पञ्चमे सारङ्ग्य इति ।

( २ ) चतुस्त्रिंशत्संख्यानां पशूनां मध्येऽर्धाः सप्तदश वत्सतर्यः । अर्धा उक्षाणः ।

( ३ ) 'तदन्ताङ्गरीति' बलिनमुद्रितपुस्तके ।

( ४ ) तानेव पर्यग्निकृतानुत्सृष्टान् तानेव प्रतिवर्षमालभन्ते ।

( ५ ) ये उक्षाणः पञ्चवर्षाण्यालभ्यालभ्य उत्सृष्टास्त एव षष्ठे वर्षे कार्तिके मासि सुत्यासु विभज्य सवनीयाः पशवो भवन्ति । चतसृषु सुत्यासु अन्वहं प्रत्यहं त्रयस्त्रय आलभ्यन्ते ऐन्द्रामारुताः ।

( ६ ) उत्तमे पञ्चमे सौत्येऽहनि पञ्चोक्षाण आलभ्यन्ते ।

पश्वापदि चरवः ॥ १५ ॥

एतेषामेव पशूनामापत्सु चरवो भवन्ति ॥ १५ ॥

(१)अपोनप्त्रियोऽप्सु मृते ॥ १६ ॥

अप्सु मृते पशावपोनप्त्रियश्चरुर्भवति। अत्र चाऽपोनपाद्देवता न त्वपोनप्ता। तत्र यप्रत्ययसान्नियोगेन प्रातिपदिकव्युत्पत्त्या 'अपोनप्त्रिय' इति रूपं भवति। एतच्च तद्धित एव नानुवाचनादिषु ॥ १६ ॥

वायव्यः पलायिते ॥ १७ ॥

नष्टे वायव्यश्चरुर्भवति ॥ १७ ॥

बार्हस्पत्यः श्रवणकूटकाणश्चेत् ॥ १८ ॥

(२)श्रवणो-व्याधिविशेषः। कूटो-भग्नशृङ्गः। काणः प्रसिद्धः। एषु बार्हस्पत्यश्चरुः ॥ १८ ॥

नैर्ऋतो(३)ऽवसन्ने ॥ १९ ॥

अन्ययूथ्यैर्युध्यमानस्यावसाये चरुर्भवति ॥ १९ ॥

पुरोडाशाः परे रुद्राभिमानेऽग्नये रुद्रवते ॥ २० ॥

रुद्रायाभिमाने (४)ज्वरगृहीते ॥ २० ॥

(५)संशीर्णश्चेदेककपालो (६)भौमः ॥ २१ ॥

संशीर्णो विशीर्णः ॥ २१ ॥

(७)प्रासहा हृतश्चेदिन्द्राय प्रसह्वने ॥ २२ ॥

---

( १ ) 'अपोनप्त्रपांनप्त्रृभ्यां घः' इति सूत्रेण घ प्रत्ययः तत्सन्नियोगेन अपांनपाच्छब्दस्य स्थाने अपोनप्तृ आदेशः। याज्ञिकास्तु अपोनप्ता एव देवता इति देवयाज्ञिके स्पष्टम्।

( २ ) 'श्रोणो' इत्यपिपाठः माधवीये ताण्ड्यभाष्ये व्याख्यातः। श्रोणो रक्तवर्णो बिन्द्वाकारस्त्वग्दोष इति।

( ३ ) अवसाये शिथिले। अवसन्नः—अत्यन्तकृश इति माधवः।

( ४ ) अतःपरं पुरोडाशा उपदिश्यन्ते। तत्र पशोर्ज्वरपीडायाम्। रुद्राभिमानश्च ज्वरः; रुद्रकोपजत्वादिति स्पष्टं भावप्रकाशे।

( ५ ) संशीर्णो रोगान्तरं विनापि आहारापरिपाकेन शरीरपुष्ट्यभावात्क्षयेणावसन्न इति याज्ञिकाः। क्षीण इति यावत्।

( ६ ) अकस्माच्छरीरं प्रकम्प्य भूमौ पतितश्चेत् तदा भौमः भूमिदेवताकः।

( ७ ) केनचिद्वैरिणा इति शेषः।

प्रासहा हृतः प्रसह्य हृतः ॥ २२ ॥

भोजनीयमृते प्राजापत्यो द्वादशकपालः ॥ २३ ॥

भोजनीयमृतो ऽजीर्णमृतः ॥ २३ ॥

(१)मृतं ब्राह्मणान्भोजयेत् ॥ २४ ॥

प्रोक्षितस्य हि मांसभक्षणमुचितमिति ॥ २४ ॥

अप्सु प्रासनम् ॥ २५ ॥

"दुष्टस्य हविषोऽप्स्ववहरणम्" ( का० श्रौ० २५-५-९ ) इति अप्सु प्रासनमुक्तम् ॥ २५ ॥

निधानं वा दुष्टत्वात् ॥ २६ ॥

निधानं (२)वा भवति नाप्सु प्रासनम्। किं कारणम्? अदुष्टत्वात्। शिष्टभक्षप्रतिषिद्धं दुष्टं भवति(३)। न चैषु दोषेषु शिष्टभक्षप्रतिषेधः। तस्मान्निधानमेव ॥ २६ ॥

इदमिदानीं विचार्यते—किमत्रैवैतानि नैमित्तिकानि, उतान्यत्रापीति। अत्राह—

अन्यत्रापि दोषसंयोगात् ॥ २७ ॥

अतोऽप्यन्यत्राप्येभिर्दोषैः पशुव्यापत्तौ एतानि नैमित्तिकानि भवन्ति। कुतः? पशुव्यापत्त्युपदेशेन(४) विहितत्वात् ॥ २७ ॥

एवं प्राप्त आह—

न प्रकरणात् ॥ २८ ॥

पञ्चशारदीयव्यतिरेकेणैतानि नैमित्तिकानि न भवन्ति। कुतः? पञ्चशारदीयं हि प्रकृत्य श्रुतत्वात् प्रकृतत्वाच्च विशेषावसानम् ॥ २८ ॥

(५)व्रतवानुत्तमः ॥ २९ ॥

उत्तमः पञ्चाहः व्रतवत्संज्ञको भवति ॥ २९ ॥

---

( १ ) इयं मृतस्य पशोः प्रतिपत्तिः।

( २ ) अथवा भक्षणाय निधानं यत्नेन सुगुप्ते देशे स्थापनमिति देवयाज्ञिकाः।

( ३ ) न हि स्वयं मृतस्य शिष्टानां भक्षप्रतिषेध इति।

( ४ ) पञ्चशारदीयादन्यत्रापि कर्मणि पशुव्यापत्तौ इमानि प्रायश्चित्तानि भवन्ति। पशुव्यापत्त्युद्देशेन प्रायश्चित्तानां विहितत्वात्।

( ५ ) इतः पञ्चाहस्तृतीय आरभ्यते।

तत्राऽहान्याह—

(१)ज्योतिर्गौर्महाव्रतं गौरायुः ॥ ३० ॥

अहीना व्रतवन्तः सर्वजिद्दीक्षाः ॥ ३१ ॥

भवन्ति ये व्रतवन्तः(२) ॥ ३१ ॥

इति त्रयोविंशेऽध्याये चतुर्थी कण्डिका ॥

---

षडहास्त्रयः ॥ १ ॥

ऋतूनां प्रथमः ॥ २ ॥

षष्ठीनिर्देशेऽपि सति संज्ञैषा(३)। यथा गवामयनं शाक्यानामयनमिति च ॥ २ ॥

द्वितीये बृहद्रथन्तरपृष्ठः पञ्चाहः पृष्ठ्यावलम्बाख्यः ॥ ३ ॥

द्वितीये षडहे पाष्ठिकः पञ्चाह उभयपृष्ठः पृष्ठ्यावलम्बाख्यो भवति। पृष्ठ्यावलम्बाख्याया इह च प्रयोजनाभावादन्यार्थता। वक्ष्यति हि—"पृष्ठ्यावलम्बाश्चत्वारश्छन्दोमा" ( का० श्रौ० २३-५-३३ ) इति ॥ ३ ॥

तृतीये त्रिभ्यस्त्रिकद्रुकाः(४) ॥ ४ ॥

तृतीये षडहे त्रिभ्यः पाष्ठिकेभ्योऽवसितेभ्यस्त्रिकद्रुका भवन्ति॥४॥

सप्त सप्ताहाः ॥ ५ ॥

चत्वारो व्रतोत्तमाः प्रथमाः ॥ ६ ॥

चतुर्णां महाव्रतमुत्तमं भवति ॥ ६ ॥

तृतीयः पशुकामस्य ॥ ७ ॥

भवति ॥ ७ ॥

---

( १ ) ज्योतिः गौः महाव्रतं गौः आयुः एतन्नामकानि पञ्चाहानि भवन्ति।

( २ ) ये अहीना व्रतवन्तः ते सर्वजिद्दीक्षाः। सर्वजिति यथा—"सर्वजित्समहाव्रतः संवत्सरदीक्षः सप्ताहाभिप्लवस्तिस्र उपसदः षड्वा" "अग्निवद्वा दीक्षाः" ( का० श्रौ० २२-१-४४,४५ ) दीक्षाः तथात्रापि बोद्धव्याः।

( ३ ) ऋतुषडह इति तस्य संज्ञा।

( ४ ) ज्योतिरादीनां त्रयाणां 'त्रिकद्रुक' इति संज्ञा "त्र्यहार्थे ज्योतिर्गौरायुरिति त्रिकद्रुकाः" ( का० श्रौ० २४-१-९ ) इत्युक्तेः।

इन्द्रस्य पञ्चमः ॥ ८ ॥

पञ्चम इन्द्रसप्ताहसंज्ञकः ॥ ८ ॥

तत्र—

(१)द्वितीयप्रभृतिषडेकाहाः ॥ ९ ॥

भवन्ति ॥ ९ ॥

सर्वस्तोम उत्तमः (२)॥ १० ॥

जनकसप्तरात्रः ॥ ११ ॥

चतुर्भ्यो विश्वजिन्महाव्रतम् ॥ १२ ॥

चतुर्भ्यः पार्ष्ठिकेभ्योऽवसितेभ्यः परो 'विश्वजिन्महाव्रतं'च ॥ १२ ॥

उत्तमे षडहो बृहद्रथन्तरपृष्ठः पृष्ठ्यस्तोमाख्यः ॥ १३ ॥

उभयपृष्ठ्यस्य षडहस्य 'पृष्ठ्यस्तोम' इतीयमाख्या संव्यवहारार्था ॥ १३ ॥

विश्वजित्पशुकामस्य ॥ १४ ॥

(३)विश्वजिदतिरात्रो भवति । पशुकामस्य चायम् ॥ १४ ॥

अष्टाहे षडहान्महाव्रतम्(४) ॥ १५ ॥

अष्टाहे षडहादवसितान्महाव्रतं भवति । ततोऽतिरात्रः ॥ १५ ॥

नवरात्रे त्रिकद्रुकाः ॥ १६ ॥

षडहादेवावसिताद्भवन्ति ॥ १६ ॥

(५)द्वितीयं त्रिकद्रुकेभ्यः पृष्ठ्यावलम्बः ॥ १७ ॥

ततोऽतिरात्रः ॥ १७ ॥

दशरात्राश्चत्वारः ॥ १८ ॥

भवन्ति ॥ १८ ॥

प्रथमस्त्रिककुप् ॥ १९ ॥

---

(१) तत्र पञ्चमे सप्ताहे द्वितीयादेकाहादारभ्य षडेकाहाः सुत्याहानि भवन्ति । ज्योतिर्गोआयुषोर्अभिजिद्विश्वजित्सर्वजित्समहाव्रतश्च षष्ठ इत्येके ।

(२) अन्त्यः सर्वस्तोमोऽतिरात्रो भवति ।

(३) अस्मिन्नेव सप्तमे सप्ताहे सप्तममहो 'विश्वजित्' भवति ।

(४) अष्टसुत्ये पार्ष्ठिकात्षडहादूर्ध्वं महाव्रतं भवति ।

(५) व्यत्ययेन 'द्वितीये' इत्यस्यार्थे द्वितीयमिति । द्वितीये नवरात्रे नवसुत्येऽहीने त्रिकद्रुकेभ्यः परः पृष्ठ्यावलम्बः भवति बृहद्रथन्तरपृष्ठः पञ्चाहो भवतीत्यर्थः ।

प्रथमः 'त्रिककुप्' संज्ञको भवति ॥ १९ ॥

उक्थ्योऽग्निष्टोमपक्षास्त्रिरावृतः(१) ॥२०॥

सर्वे चैतेऽपूर्वाः ॥ २० ॥

(२)प्रतिष्ठाकामस्य ॥ २१ ॥

(३)कौसुरुबिन्दः ॥ २२ ॥

'कौसुरुबिन्द' इति संज्ञा ॥ २२ ॥

तत्राहान्याह—

अग्निष्टोमास्त्रिवृतस्त्रयः ॥ २३ ॥

त्रिवृत्स्तोमयुक्ता 'अग्निष्टोमाः' त्रयो भवन्ति ॥ २३ ॥

(४)पञ्चदशाश्चोक्थ्याः ॥ २४ ॥

त्रय एव ॥ २४ ॥

सप्तदशाश्च ॥ २५ ॥

'च' शब्दात्त्रय उक्थ्याः ॥ २५ ॥

एकविंशोऽतिरात्रः ॥ २६ ॥

योऽतिरात्रः स एकविंशस्तोमको भवति ॥ २६ ॥

(५)पूर्दशरात्रोऽभिचर्यमाणस्य ॥ २७ ॥

'पूर्दशरात्र' इति संज्ञैषा, सोऽभिचर्यमाणस्य भवति ॥ २७ ॥

तत्राहान्याह—

उक्थ्योऽग्निष्टोमपक्षः ॥ २८ ॥

उक्थ्यस्योभयतोऽग्निष्टोमाविति ॥ २८ ॥

गोपक्षोऽभिजित् ॥ २९ ॥

'अभिजित्' एकाहः । तस्य गौरुभयतो भवतीत्यर्थः ॥ २९ ॥

आयुर्विश्वजित्पक्षः ॥ ३० ॥

आयुराख्यश्च—एकाहः तस्य विश्वजित्पक्षसंस्थानीयो भवति ॥३०॥

---

(१) अग्निष्टोमा पक्षाविव यस्योक्थ्यस्य । त्रिरावृतस्त्रिवारं भवति । एवं नव । ततश्च पाष्ठिकधर्माभावः ततो दशमो विश्वजिदतिरात्र इति देवयाज्ञिकाः ।

(२) अयं 'त्रिककुप्' संज्ञको दशरात्रो भवतीतिशेषः ।

(३) अयं द्वितीयो दशरात्रः ।

(४) पञ्चदशस्तोमाः 'च' कारात्त्रय उक्थ्या भवन्ति । एवमग्रेऽपि

(५) अयं तृतीयो दशरात्रः ।

(१)छन्दोमदशाहः पशुकामस्य ॥ ३१ ॥

'छन्दोमदशाह' इति संज्ञा । स पशुकामस्य भवति ॥३१॥

तत्राहान्याह—

पृष्ठ्यावलम्बाच्चत्वारश्छन्दोमाः(२) ॥ ३२ ॥

अतिरात्र उत्तमः ॥ ३२ ॥

(३)पौण्डरीकः सर्वर्द्धिकामस्य ॥ ३३ ॥

'पौण्डरीक' इति संज्ञा, स सर्वर्द्धिकामस्य भवति । सर्वामृद्धिं यः कामयते स सर्वर्द्धिकामः, तस्य पौण्डरीको भवति ॥ ३३ ॥

दशरात्रोऽसत्रोत्थानः ॥ ३४ ॥

दशरात्रो भवति सत्रोत्थानवर्जितः ॥ ३४ ॥

विश्वजिदतिरात्रः(४) ॥ ३५ ॥

भवति ॥ ३५ ॥

तुल्यमाध्वर्यवमतिरात्रेषु विश्वजिद्वर्जम् ॥३६॥

अहीनेषु येऽतिरात्रास्तेषु समानमाध्वर्यवं भवति । विश्वजितं वर्जयित्वा । को विशेषस्तत्रेति चेत्, सर्वमेधे श्रूयते—"विश्वजित्सर्वपृष्ठोऽतिरात्रो दशममहर्भवति" ( श० ब्रा० १३-७-१-१२ ) इति सर्वपृष्ठता विशेषः । तेनोच्यते 'विश्वजिद्वर्जम्' इति ॥ ३६ ॥

यथोक्तमुत्तमो यथोक्तमुत्तमः ॥ ३७ ॥

उत्तमो द्वादशरात्रो (५)यथोक्त एव भवति ॥ ३७ ॥

इति त्रयोविंशेऽध्याये पञ्चमी कण्डिका ॥

इत्युपाध्यायकर्ककृतौ कात्यायनसूत्रविवरणे त्रयोविंशतितमोऽध्यायः समाप्तः ।

---

( १ ) अयं चतुर्थो दशरात्रः ।

( २ ) चतुर्थे दशरात्रे पृष्ठ्यावलम्बादूर्ध्वं द्वादशाहिकाश्चत्वारश्छन्दोमा भवन्ति । तत्र पूर्वं बृहद्रथन्तरपृष्ठः पञ्चाहः ततश्चत्वारश्छन्दोमाः ततो दशमो विश्वजिदतिरात्रः ।

( ३ ) एतत्संज्ञक एकादशरात्रः । ( ४ ) एकादशमहर्भवति ।

( ५ ) यथोक्तो यथा पूर्वमुक्तः ( का० श्रौ० १२-१-१,६-३३ ) तथा भवतीत्यर्थः ।

सत्त्रात्मकद्वादशाहसंनिधाने अहीनद्वादशाहोऽप्युक्तोऽस्ति इति दैवयाज्ञिकाः ।

# चतुर्विंशोऽध्यायः ।

उक्ता अहीनाः । इदानीं सत्राण्यभिधीयन्ते—

**द्वादशरात्रादीनि रात्रिसत्त्राणि ॥ १ ॥**

'रात्रिसत्त्राणि' इति नाम । तच्च द्वादशरात्रप्रभृतीनाम् । (१)पूर्वपदप्रधानोऽयं बहुव्रीहिः ॥ १ ॥

**एकोच्चयेन चत्वारिंशदन्तानि ॥ २ ॥**

एकोच्चयेनाह्नां चत्वारिंशदन्तानि रात्रिसत्त्राणि ॥ २ ॥

**यथोपदेशमहानि(२) ॥ ३ ॥**

येन क्रमेण यान्यहान्युपदिश्यन्ते, तानि तथैव प्रतिपत्तव्यानि । किमर्थमिदमुच्यते ? आवापिकानामन्यः क्रमः औपदेशिकानां तु उपदेशक्रम एव । अथवा 'यथोपदेशम्' इति ऐहिकानां नाम्नां धर्मप्रतिपत्त्यर्थम् ॥ ३ ॥

**आपूर्यमाणे (३)दशरात्रः परः ॥ ४ ॥**

आपूर्यमाणे सत्रे दशरात्र आवापो भवति । स च भवन्परतो भवति न पूर्वः । षट् पार्ष्ठिकानि चत्वारि छान्दोमिकान्यहानि दशरात्र उच्यते ॥ ४ ॥

**(४)प्रकृतिविहितेषु महाव्रतं दशरात्रादुत्तरमेकाहार्थे ॥ ५ ॥**

यानि प्रकृतिविहितानीत्याचार्येणाभिधीयन्ते, तत्रैकाहार्थे महाव्रतं भवति दशरात्रादुत्तरम् ॥ ५ ॥

---

(१) द्वादशरात्रमादिर्येषाम् । तत्र द्वादशरात्रं द्वादशाह एव सत्रात्मकः । स च पूर्वमुक्त एव । ततो द्वादशरात्रादारभ्य एकैकाहर्वृद्ध्या चत्वारिंशद्रात्रान्तानि सत्राणि भवन्ति ।

(२) एषु त्रयोदशरात्रादिषु सत्रेषु उपदेशक्रमेणैवाहानि भवन्ति ।

(३) द्वादशाहिको दशरात्रः । 'पृष्ठ्यः षडहः, त्रयश्छन्दोमा, अविवाक्यो दशम' ( का० श्रौ० १२-३-१, २० ) इत्ययं परो भवति । सर्वेषामहामन्ते प्रागुदयनीयातिरात्राद्भवतीत्यर्थः ।

(४) प्रकृतिविहितानि सत्राणि वक्ष्यति तेषु एकाहार्थं एकाहं विना सत्रस्यापूरणे दशरात्रात्परं महाव्रतं भवति ।

पुरस्तादन्यत् ॥ ६ ॥

यदन्यदावापान्तरं व्याख्यास्यते तद्दशरात्रात्पूर्वं भवति ॥ ६ ॥

षडहार्थेऽभिप्लवः ॥ ७ ॥

यत्र षड्भिरहोभिर्न पूर्यते सत्त्रम् तत्राभिप्लवः पूरणो भवति। अभिप्लवार्थश्चोक्तो गवामयने(१) ॥ ७ ॥

तस्यादितः पञ्च पञ्चाहार्थे ॥ ८ ॥

तस्यैवाभिप्लवस्यादितः पञ्चाहानि गृह्यन्ते (२)पञ्चाहार्थे ॥ ८ ॥

त्र्यहार्थे ज्योतिर्गौरायुरिति त्रिकद्रुकाः ॥९॥

'त्रिकद्रुका' इति ज्योतिरादीनां समुदितानां संज्ञा संव्यवहारार्था॥९॥

व्रतं च यथोक्तं चतुरहार्थे ॥ १० ॥

'च' शब्दात्त्रिकद्रुकाश्च। यथोक्तग्रहणाच्च दशरात्रात्परं व्रतं भवति ॥ १० ॥

गोआयुषी द्व्यहार्थे ॥ ११ ॥

भवतः ॥ ११ ॥

अतिरात्रान्तरमावापस्थानम् ॥ १२ ॥

सत्रस्याद्यन्तयोरतिरात्रविधानात् (३) ॥ १२ ॥

(४)आवापसमवेतानामल्पमल्पं पूर्वम् ॥ १३ ॥

यत्रावापानां समवायेन सत्रं पूर्यते तत्र यद्यदल्पं तत्तत्पूर्वं भवति॥१३॥

(५)द्वे त्रयोदशरात्रे ॥ १४ ॥

मात्रे भवतः ॥ १४ ॥

---

( १ ) "अभिप्लवः षडहः" ( का० श्रौ० १३-२-१ ) इत्यादिना।

( २ ) यत्र सत्त्रपूरणाय पञ्चैवाहानि मृग्यन्ते तत्र तस्याभिप्लवस्यादितः आदिमानि पञ्चाहानि गृह्यन्त इति।

( ३ ) "उभयतोऽतिरात्रः सत्त्रम्०" ( का० श्रौ० १२-१-७ ) इत्यत्र, तत्रातिरात्रयोः प्रायणीयोदयनीययोरन्तरालमावापस्थानम्।

( ४ ) आवापाश्च ते समवेताश्च ते आवापसमवेताः तेषाम्। यत्र आवापानां बहूनां समवायः तत्र अल्पमल्पं पूर्वं पूर्वमावपनीयम्। यथा एकोऽभिप्लवः षडहः अपरस्तस्यैव पञ्चाहः चतुरहस्त्र्यहो द्व्यहो वा। तत्र पञ्चाहादेः पूर्वमावापः ततोऽभिप्लवषडहस्येति।

( ५ ) एवं सत्रपूरणोपयोगिनीं परिभाषामुक्त्वाऽधुना 'त्रयोदशरात्र' प्रभृतीनि सत्राण्युच्यन्ते तत्र द्वे त्रयोदशसंख्ये भवतः।

**पृष्ठ्यात्सर्वस्तोमोऽतिरात्रः(१) ॥ १५ ॥**

पृष्ठ्यादवस्थितात्सर्वस्तोमसंज्ञकोऽतिरात्रो भवति। पूर्णमिदमेकम्॥१५॥

**प्रकृतिविहितं द्वितीयम्(२) ॥१६॥**

भवति। प्रकृतिविहितग्रहणाच्च व्रतं दशरात्रादुत्तरं भवति ॥१६॥

**सम्भार्यं तृतीयम्(३) ॥ १७ ॥**

तृतीयं त्रयोदशरात्रमहोभिः सम्भ्रियते ॥ १७ ॥

**(४)प्रायणीयाच्चतुर्विंशमहरभिजित्त्रयः स्वरसामानो विषुवांस्त्रयः स्वरसामानो विश्वजिद्व्रतमुदयनीयोऽतिरात्रः ॥१८॥**

अत्र चतुर्विंशमहरादिषु गावामयनिकेषूद्गात्रालम्भसवनान्तजपा भवन्ति गावामयनिकत्वादेव ॥ १८ ॥

**(५)चतुर्दशरात्राणि त्रीणि(६) ॥ १९ ॥**

तत्रैकस्मिन्—

**द्वौ पृष्ठ्यौ ॥ २० ॥**

भवतः ॥ २० ॥

**प्रतिलोमः परः(७) ॥ २१ ॥**

---

(१) त्रयोदशसुत्ये भवतः। तत्र प्रथमस्याहान्याह 'पृष्ठ्यात्सर्वस्तोमोऽतिरात्रः'। "द्वादशाहधर्माः सत्त्रेषु०" ( का० श्रौ० १३-१-१ ) इत्युक्तम् तेन सर्वेषु सत्त्रेषु द्वादशाहधर्मा भवन्ति। अतस्त्रयोदशरात्रे द्वादशाहः सकलोऽपि भवति। एकमहर्मृग्यते तदर्थमाह—पृष्ठ्यात्परः सर्वस्तोमोऽतिरात्रः। ततस्त्रयश्छन्दोमा अविवाक्यम् 'उदयनीय' इति।

अत्र प्रायणीयातिरात्रः १, पृष्ठ्यः षडहः २-७, सर्वस्तोमोऽतिरात्रः ८, चत्वारश्छन्दोमाः ९-१२, उदयनीयातिरात्रः १३ इति।

(२) द्वितीयं त्रयोदशरात्रं प्रकृतिविहितं भवति।

(३) तृतीयं त्रयोदशरात्रं सम्भार्यमन्यैरेवोपदिष्टैरेवाहोभिः सम्भरणीयं नत्वावापिकैः पूरणीयमित्यर्थः।

(४) तदेवसम्भरणमाह— (५) तत्राहान्याह—

(६) प्रथमे चतुर्दशरात्रे प्रायणीयातिरात्रो भवतीति बोध्यम्।

(७) परो द्वितीयः पृष्ठ्यः प्रतिलोमः विपरीतक्रमो भवति, त्रयस्त्रिंशाद्यक्रमणो भवतीत्यर्थः। पृष्ठ्ये षडहे हि त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशा इति क्रमेणाहानि। प्रतिलोमे तु विपरीतक्रमेण।

भवति । प्रातिलोम्यं च त्र्यर्स्त्रिशारम्भणत्वेन ॥ २१ ॥

**मध्यमे त्रिकद्रुकाः पृष्ठ्यमभितः ॥ २२ ॥**

मध्यमे चतुर्दशरात्रे पृष्ठ्यमभितस्त्रिकद्रुका भवन्ति ॥ २२ ॥

**(१)प्रतिलोमाः परे ॥ २३ ॥**

आयुर्गौर्ज्योतिरित्येवम् ॥ २३ ॥

**विवाहोदकतल्पसंशयितानामेतत्(२) ॥ २४ ॥**

येषां विवाहे संशयो भवति किमस्माकं विवाहो भवति न भवतीति संशयः । तथा उदकपाने शयने च । तेषामेतत्सत्रं भवति ॥ २४ ॥

**प्रकृतिविहितं तृतीयम्(३) ॥ २५ ॥**

प्रकृतिविहितग्रहणाद्गोआयुषी भवतः ॥ २५ ॥

**पञ्चदशरात्राणि चत्वारि ॥ २६ ॥**

भवन्ति ॥ २६ ॥

तत्र—

**उत्तरे (४)प्रकृतिविहिते ॥ २७ ॥**

त्रिकद्रुकैः पूरणमित्येतदुक्तं भवति ॥ २७ ॥

**चतुर्दशरात्राभ्यां (५)पूर्वे व्याख्याते ॥ २८ ॥**

पूर्वे पञ्चदशरात्रे चतुर्दशरात्राभ्यां व्याख्याते ॥ २८ ॥

इयांस्तु विशेषः—

**पृष्ठ्ययोर्मध्ये महाव्रतम्(६) ॥ २९ ॥**

भवति ॥ २९ ॥

---

(१) पृष्ठ्यात्परे ये त्रिकद्रुकास्ते प्रतिलोमा भवन्ति ।

(२) विवाहे उदके तल्पे अन्येषां संशयिताः तेषामेतद् द्वितीयं चतुर्दशरात्रं भवति । "यांस्तल्पे वोदके वा विवाहे वा मीमांसेरंस्तऽएता रात्रीरुपेयुः" (ताण्ड्य० २३-३) इति श्रुतेः । उदके अभिषेकाद्यर्थे इति परे।

( ३ ) तृतीयं चतुर्दशरात्रं प्रकृतिविहितं भवति । आवापप्रकारेण पूरणीयमित्यर्थः । ततश्च-प्रायणीयः १, गोआयुषी २-३, दशरात्रः ४-१३, उदयनीयः १४; इति ।

( ४ ) तृतीयचतुर्थे पञ्चदशरात्रे प्रकृतिविहिते भवतः । आवापप्रकारेण पूरणीये इत्यर्थः । त्र्यहार्थे त्रिकद्रुकैः पूरणं कार्यमित्यभिप्रायः ।

( ५ ) पूर्वे प्रथमद्वितीये ।

( ६ ) प्रथमे पञ्चदशरात्रे पृष्ठ्ययोर्मध्ये महाव्रतम् । तेन प्रायणीयः १, पृष्ठ्यः २-७, महाव्रतम् ८, पृष्ठ्यः ९-१४, उदयनीय १५ इति ।

अतिरात्रादग्निष्टुद्द्वितीयस्य(१) ॥ ३० ॥

अतिरात्रादवसितादग्निष्टुद् द्वितीयस्य भवति ॥ ३० ॥

स प्रायणीयस्तृतीयस्य(२) ॥ ३१ ॥

स एवाग्निष्टुत्तृतीयस्य प्रायो भवति। नाम्ना च तदीयैव संस्था ॥३१॥

इति चतुर्विंशेऽध्याये प्रथमा कण्डिका ॥

प्रकृतिविहितानि प्राग्विंशतिरात्रात् ॥ १ ॥

षोडशरात्रादिषु चतुर्षु आवापेन हि पूरणम्(३)। तत्र षोडशरात्रे प्रायणीयात् त्रिकद्रुकाः दशरात्रादुत्तरव्रतम्। सप्तदशरात्रे प्रायणीयात्प· ञ्चाहः, अष्टादशरात्रे षडहः, एकोनविंशतिरात्रे षडहः, दशरात्राच्चोत्तरं व्रतम् ॥ १ ॥

(४)विंशतिरात्रेऽभिप्लवोऽभिजिद्विश्वजितौ च ॥ २ ॥

यथोपदेशम् ॥ २ ॥

एकविंशतिरात्रयोरतिरात्रावषोडशिकौ ॥ ३ ॥

(५)अभिप्लवात्त्रयः प्रथमादतिरात्रः ॥ ४ ॥

---

(१) द्वितीयस्य पञ्चदशरात्रस्य प्रायणीयातिरात्रादग्निष्टुद्भवति। अत्राग्निष्टुति सर्वं ग्रहादिकमाग्नेयं भवति। तेनैवम्-प्रायणीयः १, अग्निष्टुत् २, ज्योतिर्गौरायुः ३-५, पृष्ठ्यः ६-११, आयुः गौर्ज्योतिः १२-१४, उदयनीयः १५ इति।

(२) तृतीयस्य पञ्चदशरात्रस्य स एवाग्निष्टुत्प्रायणीयो भवति। ततश्चैवम्- त्रिवृदग्निष्टुदग्निष्टोमसंस्थः १, त्रिकद्रुकाः २-४, दशरात्रः ५-१४, उदयनीयः १५ इति।

चतुर्थे पञ्चदशरात्रे-प्रायणीयः १, त्रिकद्रुकाः २-४, दशरात्रः ५-१४, उदयनीयः १५ इति।

(३) तद् यथा-षोडशरात्रे प्रायणीयः १, त्रिकद्रुकाः २-४, दशरात्रः ५-१४, महाव्रतम् १५, उदयनीयः १६ इति। सप्तदशरात्रे-प्रायणीयः १, अभिप्लवस्य पञ्चाहः २-६, दशरात्रः ७-१६, उदयनीयः १७ इति। अष्टादशरात्रे-प्रायणीयः १, अभिप्लवः षडहः २-७, दशरात्रः ८-१७, उद· यनीयः १८ इति। एकोनविंशतिरात्रे-प्रायणीयः १, अभिप्लवः षडहः २-७, दशरात्रः ८-१७, महाव्रतम् १८, उदयनीयः १९ इति।

(४) विंशतिरात्रे-प्रायणीयः १, अभिप्लवषडहः २-७, अभिजित् ८, विश्वजित् ९, दशरात्रः १०-१९, उदयनीयः २० इति।

(५) त्रयाणां अभिप्लवानां मध्ये प्रथमादभिप्लवात्परोऽतिरात्रो

परिपूर्णमेवैतत् ॥ ४ ॥

निदाघे द्वितीयं ब्रह्मवर्चसकामानाम् ॥ ५ ॥

निदाघो ग्रीष्मः। तत्र द्वितीयमेकविंशतिरात्रं ब्रह्मवर्चसकामानां भवति ॥ ५ ॥

त्र्यहस्त्रयः स्वरसामानो विषुवन्तमभितः ॥ ६ ॥

पृष्ठयौ च ॥ ७ ॥

च शब्दादभितः ॥ ७ ॥

(१)उत्तरः प्रतिलोमः ॥ ८ ॥

पृष्ठ्यो भवति ॥ ८ ॥

(२)मानव्यः सामिधेन्यः ॥ ९ ॥

विषुवति भवन्ति ॥ ९ ॥

सौमापौष्ण उपालम्भ्यः ॥ १० ॥

विषुवत्येवम् ॥ १० ॥

(३)प्रकृतिविहितान्याद्वात्रिंशद्रात्रात् ॥ ११ ॥

सह द्वात्रिंशद्रात्रेण, आङभिविधौ कर्मविषयत्वात् ॥ ११ ॥

द्वाविंशतिरात्रमन्नाद्यकामानाम् ॥ १२ ॥

त्रयोविंशतिरात्रं प्रतिष्ठाकामानाम् ॥ १३ ॥

पूर्वं चतुर्विंशतिरात्रं प्रजाकामानां पशुकामानां वा ॥ १४ ॥

द्वाविंशतिरात्रे पूरणम्—प्रायणीयात्त्रिकद्रुकास्ततोऽभिप्लवः, दशरात्राच्च परं व्रतम्(४)। त्रयोविंशतिरात्रे प्रायणीयात्पञ्चाहः, ततः च

---

भवति। तद् यथा—प्रथमे एकविंशतिरात्रे-अषोडशिकः प्रायणीयः १, अभिप्लवः षडहः २–७, अतिरात्रः सषोडशिकः ८, अभिप्लवो ९–२०, अषोडशिकः उदयनीयः २१ इति।

(१) उत्तरो द्वितीयः पृष्ठ्यः प्रतिलोमः त्रयस्त्रिंशारम्भणो भवति।

(२) अत्र विषुवति विशेषमाह–। मनुना दृष्टा मानव्य ऋचः। तदित्थं द्वितीये एकविंशतिरात्रे—प्रायणीयः १, पृष्ठ्यः २–७, त्रयः स्वरसामानः ८–१०, मानव्यृग्युक्तो विषुवान् ११, स्वरसामानः त्रयः १२–१४, त्रयस्त्रिंशारम्भणः पृष्ठ्यः १५–२०, उदयनीयः २१ इति।

(३) आवापक्रमेण पूरणीयानि इति तदाशयः।

(४) द्वाविंशतिरात्रे-प्रायणीयः १, त्रिकद्रुकाः २–४, अभिप्लवः ५–१०, दशरात्रः ११–२०, महाव्रतम् २१, उदयनीयः २२ इति।

डहः(१)। (२)पूर्वस्मिँश्चतुर्विंशतिरात्रे द्वौ षडहौ ॥ १४ ॥

द्वितीयꣳ (३)सꣳसदः ॥ १५ ॥

द्वितीयं चतुर्विंशतिरात्रं संसदसंज्ञकम् ॥ १५ ॥

अत्र विशेषः—

अषोडशिकावतिरात्रौ ॥ १६ ॥

विशालः ॥ १७ ॥

वक्ष्यमाणस्याहस्संङ्घातस्य संज्ञा ॥ १७ ॥

पार्ष्ठिकानि त्रीण्युत्तराणि प्रतिलोमानुलोमानि ॥ १८ ॥

(४)पार्ष्ठिकानि त्रीण्युत्तराणि अहानि प्रतिलोमानुलोमानि ॥ १८ ॥

तमभितोऽग्निष्टोमावनिरुक्तौ ॥ १९ ॥

तं विशालमभितोऽग्निष्टोमावनिरुक्तौ ॥ १९ ॥

पृष्ठ्यस्तोमौ च ॥ २० ॥

'च' शब्दाद् अभितो भवतः(५) ॥ २० ॥

तयोः—

उत्तरः प्रतिलोमः(६) ॥ २१ ॥

---

(१) त्रयोविंशतिरात्रे-प्रायणीयः १, अभिप्लवस्य पञ्चाहः २-६, अभिप्लवः ७-१२, दशरात्रः १३-२२, उदयनीयः २३ इति।

(२) प्रथमे चतुर्विंशतिरात्रे-प्रायणीयः १, द्वावभिप्लवौ २-१३, दशरात्रः १४-२३, उदयनीय २४ इति।

(३) संसद इति षष्ठ्येकवचनम्। यथा द्वादशसंवत्सरं प्रजापतेः षट्त्रिंशत्संवत्सरꣳ शाक्त्यानामित्यादि तेन सꣳसदोऽयनमित्येवंसंज्ञमित्यर्थः।

(४) प्रतिलोमानुलोमक्रमेणानुष्ठीयमानस्य षडहसम्बन्धिनः पार्ष्ठिकानि पृष्ठ्यषडहसम्बन्धीनि, उत्तराणि चतुर्थप्रभृतीनि त्रीण्यहानि एकविंशत्रिणवत्रयस्त्रिंशानि प्रतिलोमानि अनुलोमानि चात्र भवन्ति। पूर्वं प्रतिलोमानि षष्ठपञ्चमचतुर्थानि ततोऽनुलोमानि चतुर्थपञ्चमषष्ठानीत्यर्थः।

(५) पूर्वं हि उक्तम्-"उत्तमे षडहो बृहद्रथन्तरपृष्ठः पृष्ठ्यस्तोमाख्यः" (का० श्रौ० २३-५-१३) इति। तौ पृष्ठ्यस्तोमौ बृहद्रथन्तरपृष्ठौ षडहौ। 'च' कारात् तं साग्निष्टोमं विशालमभितो भवत इति।

(६) तयोः साग्निष्टोमं विशालमभितः क्रियमाणयोः पृष्ठ्यस्तोमयोर्मध्ये उत्तरः प्रतिलोमोऽन्त्याहःप्रभृति भवतीत्यर्थः।

तस्मादग्निष्टोमावनिरुक्तौ(१) ॥ २२ ॥

पूर्णमेतत् ॥ २२ ॥

पञ्चविंशतिरात्रमन्नाद्यकामानाम् ॥ २३ ॥

षड्विंशतिरात्रं प्रतिष्ठाकामानाम् ॥ २४ ॥

सप्तविंशतिरात्रमृद्धिकामानाम् ॥ २५ ॥

अष्टाविंशतिरात्रं प्रजाकामानां पशुकामानां वा ॥२६॥

द्वात्रिंशद्रात्रं च ॥ २७ ॥

चशब्दात्प्रजाकामानां पशुकामानां वा । (२)पञ्चविंशतिरात्रेऽभिप्लवौ, स्वस्थाने व्रतं च(३) । षड्विंशतिरात्रे प्रायणीयाद्गोआयुषी, ततोऽभिप्लवौ(४)। सप्तविंशतिरात्रे प्रायणीयात्त्रिकद्रुकाः, ततोऽभिप्लवौ(५)। अष्टाविंशतिरात्रे प्रायणीयात्त्रिकद्रुकाः, ततोऽभिप्लवौ, स्वस्थाने च व्रतम्(६) । एकोनत्रिंशद्रात्रे प्रायणीयात्पञ्चाहः ततोऽभिप्लवौ(७) । त्रिंशद्रात्रे

---

(१) योऽयं प्रतिलोम उत्तरः पृष्ठ्यस्तोमस्तस्मात्परौ अनिरुक्तौ अग्निष्टोमौ भवतः । तदेवं द्वितीयचतुर्विंशतिरात्रेऽह्नां क्रमः संपन्नो भवति–अषोडशिकः प्रायणीयः १, पृष्ठ्यस्तोमः षडहः २–७, अनिरुक्तोऽग्निष्टोमः ८, विशालः षडहः ९–१४, तत्र पार्ष्ठिकान्यहानि (६–५–४) (४–५–६) अनिरुक्तोऽग्निष्टोमः १५, त्रयस्त्रिंशारम्भणः पृष्ठ्यस्तोमः षडहः १६–२१, अग्निष्टोमावनिरुक्तौ २२–२३, उदयनीयः २४ इति ।

(२) द्वाविंशतिरात्रे द्वावभिप्लवौ इ० पा० पूर्वसंस्करणे ।

(३) प्रायणीयः १, अभिप्लवौ षडहौ २–१३, दशरात्रः १४–२३, महाव्रतम् २४, उदयनीयः २५ इति ।

(४) प्रायणीयः १, गोआयुषी २–३, अभिप्लवौ षडहौ ४–१५, दशरात्रः १६–२५, उदयनीयः २६ इति ।

(५) प्रायणीयः १, त्रिकद्रुकाः २–४, अभिप्लवौ षडहौ ५–१६, दशरात्रः १७–२६ उदयनीयः २७ इति ।

(६) प्रायणीयः १, त्रिकद्रुकाः २–४, अभिप्लवौ षडहौ ५–१६, दशरात्रः १७–२६; महाव्रतम् २७, उदयनीयः २८ इति ।

(७) प्रायणीयः १, अभिप्लवस्य पञ्चाहः २–६, अभिप्लवौ षडहौ ७–१८, दशरात्रः १९–२८, उदयनीयः २९ इति ।

त्रयोऽभिप्लवाः(१)। एकत्रिंशद्रात्रे व्रतमधिकम्(२)। द्वात्रिंशद्रात्रे प्रायणीयाद्गोआयुषी, अभिप्लवास्त्रयः(३) ॥ २७ ॥

त्रयस्त्रिंशद्रात्राणि त्रीणि(४) ॥ २८ ॥

तत्र प्रथमे—

(५)पञ्चाहाश्चत्वारः ॥ २९ ॥

त्रिभ्योऽतिरात्रो विश्वजित्(६) ॥ ३० ॥

त्रिभ्यः पञ्चाहेभ्योऽवसितेभ्यो विश्वजिदतिरात्रः ॥ ३० ॥

व्रतवद्द्वितीयम्(७) ॥ ३१ ॥

त्र्यभिप्लवमभिप्लवान्तरयोरतिरात्रौ(८) ॥ ३२ ॥

तृतीये त्रयस्त्रयः पञ्चाहा विश्वजितमभितः(९) ॥३३॥

भवन्ति ॥ ३३ ॥

---

(१) प्रायणीयः १, त्रयोऽभिप्लवाः षडहाः। २–१९, दशरात्रः २०–२९, उदयनीयः ३० इति।

(२) प्रायणीयः १, त्रयोऽभिप्लवाः २–१९, दशरात्रः २०–२९, महाव्रतम् ३०, उदयनीयः ३१ इति।

(३) प्रायणीयः १, गोआयुषी २–३, त्रयोऽभिप्लवाः ४–२१, दशरात्रः २२–३१, उदयनीयः ३२, इति।

(४) त्रीणि सत्राणि त्रयस्त्रिंशद्रात्राणि भवन्ति।

(५) तत्र प्रथमस्याहान्युच्यन्ते—प्रथमे त्रयस्त्रिंशद्रात्रे प्रायणीयादनन्तरं चत्वारोऽभिप्लवस्य पञ्चाहा भवन्ति।

(६) पूर्वसूत्रविहितानां चतुर्णां पञ्चाहानां मध्ये त्रिभ्यः पञ्चाहेभ्यः परो विश्वजिदतिरात्रो भवति। तदयं क्रमः—प्रायणीयः १, अभिप्लवस्यत्रयः पञ्चाहाः २–१६, विश्वजिदतिरात्रः १७, ततः–चतुर्थः पञ्चाहः १८–२२, ततो दशरात्रः २३–३२, उदयनीयः ३३ इति।

(७) द्वितीयं त्रयस्त्रिंशद्रात्रं व्रतवत् महाव्रतयुक्तं भवति।

(८) त्र्यभिप्लवम् प्रायणीयादनन्तरं प्रथमं त्रयोऽभिप्लवा भवन्ति। तत्र त्रयाणामभिप्लवानां द्वेऽन्तराले भवतः। अन्तरालयोरतिरात्रौ भवतः। तदयं क्रमः–प्रायणीयः १, अभिप्लवः २–७, अतिरात्रः ८, अभिप्लवः ९–१४, अतिरात्रः १५, अभिप्लवः १६–२१, दशरात्रः २२–३१, महाव्रतम् ३२, उदयनीयः ३३ इति।

(९) तृतीये त्रयस्त्रिंशद्रात्रे विश्वजितमभितः त्रयस्त्रयः अभिप्लवस्य पञ्चाहा भवन्ति।

तत्र च—

प्रतिलोमाः परे(१) ॥ ३४ ॥

प्रकृतिविहितान्या चत्वारिꣳशद्रात्रात्(२) ॥ ३५ ॥

चतुस्त्रिꣳशद्रात्रमन्नाद्यकामानाम्(३) ॥ ३६ ॥

षट्त्रिꣳशद्रात्रं प्रतिष्ठाकामानाम्(४) ॥ ३७ ॥

सप्तत्रिꣳशद्रात्रमृद्धिकामानाम्(५) ॥ ३८ ॥

अष्टात्रिꣳशद्रात्रं प्रजाकामानां पशुकामानां वा(६) ॥३९॥

चत्वारिꣳशद्रात्रं(७) च ॥ ४० ॥

'च' शब्दादेतत्कामानामेव । अत्र पूरणं प्रकृतिविहितावापेन यथोक्तम् ॥ ४० ॥

व्रतवन्त्युत्तराणि प्रथमतृतीयवर्जꣳ सप्तैकान्नपञ्चाशद्रात्राणि(८) ॥ ४१ ॥

---

(१) तेषां मध्ये विश्वजितो ये पश्चाद्भवन्ति ते प्रतिलोमाः । तदयं क्रमः—प्रायणीयः १, त्रयोऽभिप्लवस्य पञ्चाहाः २–१६; विश्वजिदतिरात्रः १७; प्रतिलोमास्त्रयः पञ्चाहाः १८–३२, उदयनीयः ३३ इति ।

(२) आङत्राभिविधौ । चतुस्त्रिंशद्रात्रमारभ्यचत्वारिंशद्रात्रमभिव्याप्य सप्त सत्राणि प्रकृतिविहितानि आवापप्रकारेण पूरणीयानि ।

(३) चतुस्त्रिशद्रात्रे—प्रायणीयः १, त्रिकद्रुकाः २–४, त्रयोऽभिप्लवाः ५–२२, दशरात्रः २३–३२, महाव्रतम् ३३, उदयनीयः ३४ । पञ्चत्रिंशद्रात्रे—प्रायणीयः १, पञ्चाहः २–६ त्रयोऽभिप्लवाः ७–२४, दशरात्रः २५–३४, उदयनीयः ३५ ।

(४) प्रायणीयः १, चत्वारोऽभिप्लवाः २–२५, दशरात्रः २६–३५, उदयनीयः ३६ ।

(५) प्रायणीयः १, चत्वारोऽभिप्लवाः २–२५, दशरात्रः २६–३५ महाव्रतम् ३६, उदयनीयः ३७ ।

(६) प्रायणीयः १, गोआयुषी २–३, चत्वारोऽभिप्लवाः ४–२७, दशरात्रः २८–३७; उदयनीयः ३८ ।

एकोनचत्वारिंशद्रात्रे—प्रायणीयः १, त्रिकद्रुकाः २–४. चत्वारोऽभिप्लवाः ५–२८, दशरात्रः २९–३८, उदयनीयः ३९ ।

(७) प्रायणीयः १, त्रिकद्रुकाः २–४, चत्वारोऽभिप्लवाः ५–२८, दशरात्रः २९–३८, महाव्रतम् ३९, उदयनीयः ४० ।

(८) उत्तराणि वक्ष्यमाणानि सप्त एकोनपञ्चाशद्रात्राणि सत्राणि

प्रथमतृतीयवर्जं व्रतवन्ति भवन्ति ॥ ४१ ॥

तत्र—

प्रथमो विधृतिः(१) ॥ ४२ ॥

पुल्लिङ्गेनैव सत्रस्याभिधानम् ॥ ४२ ॥

अषोडशिकावतिरात्रौ(२) ॥ ४३ ॥

इति चतुर्विंशेऽध्याये द्वितीया कण्डिका ॥

कौसुरुबिन्दः प्रथमस्त्र्यह(३) उक्थ्यौ तूत्तरौ(४) ॥१॥

कौसुरुबिन्दः प्रथमस्त्र्यहोऽग्निष्टोमास्त्रिवृत्स्तोमयुक्तास्त्रयः । तत्र विशेषः । उक्थ्यावुत्तरौ भवतः ॥ १ ॥

(५)षोडशिदशमा उक्थ्याः ॥ २ ॥

भवन्ति । यत्र संस्थामात्रमेवोद्घटते, तत्राऽपूर्वव्यपदेशः । यत्र गौ-ज्योतिरायुरादिवदुपादानम् , तत्रैकाहिकाः, दशरात्रे पुनर्द्वादशाहिका इति । ऐकाहिके पुनर्नाम्ना धर्मप्रवृत्तिः, अपूर्वेषु तु द्वादशाहिको विध्यन्तः ॥ २ ॥

पृष्ठ्यं चाभितो द्वादश द्वादश ॥ ३ ॥

(६)उक्थ्या भवन्ति ॥ ३ ॥

---

भवन्ति । तत्र सत्रानां मध्ये प्रथमतृतीयवर्जमन्यानि पञ्च महाव्रतवन्ति भवन्ति । प्रथमतृतीये तु महाव्रतरहिते भवतः ।

( १ ) प्रथम एकान्नपञ्चाशद्रात्रो विधृतिसंज्ञकः ।

( २ ) प्रथमे एकान्नपञ्चाशद्रात्रे अतिरात्रौ प्रायणीयोदयनीयावषोडशिकौ भवतः ।

( ३ ) अत्र प्रायणीयादनन्तरं कुसुरबिन्दसंज्ञकदशरात्रस्य यः प्रथमस्त्र्यहः "अग्निष्टोमास्त्रिवृतस्त्रयः" ( का० श्रौ० २३-५-२३ ) इति, स एवात्र भवतीत्यर्थः ।

( ४ ) अत्र कौसुरबिन्दे त्र्यहे उत्तरौ द्वितीयतृतीयौ उक्थ्यौ उक्थ्यसंस्थौ भवतः ।

( ५ ) ततः त्र्यहात्परे षोडशिदशमा उक्थ्याः भवन्ति । षोडशी दशमो येषां ते ।

( ६ ) अस्मादेव वचनादत्रैकः पृष्ठ्यः षडहः तमभितो द्वादश द्वादश उक्थ्याः ।

वर्गान्तरेष्वतिरात्राः(१) ॥ ४ ॥

यमातिरात्रम् ॥ ५ ॥

'व्याख्यास्यते' इति सूत्रशेषः ॥ ५ ॥

अभिप्लवौ गोआयुषी अतिरात्रावभिप्लवावभिजिद्विश्वजितावतिरात्रावभिप्लवः सर्वस्तोमनवसप्तदशावतिरात्रौ(२) ॥ ६ ॥

आञ्जनाभ्यञ्जनीयेऽभिप्लवाः षट्(३) ॥ ७ ॥

'आञ्जनाभ्यञ्जनीयम्' इति संज्ञा ॥ ७ ॥

तत्र—

चतुर्भ्यः सर्वस्तोमोऽतिरात्रः ॥ ८ ॥

चतुर्भ्योऽभिप्लवेभ्योऽवसितेभ्यः सर्वस्तोमोऽतिरात्रो भवति ॥ ८ ॥

तस्मिन्नुपसत्सु सर्पिर्विपचेयुर्गार्हपत्ये गुल्गुलुसुगन्धितेजनपीतुदारुभिः(४) ॥ ९ ॥

तस्मिन्नाञ्जनाभ्यञ्जनीये उपसत्सु वर्त्तमानासु गुल्गुलुसुगन्धितेजनपीतुदारुभिः पृथक् पृथक् सर्पिर्विपचेयुः। पुरुषार्थत्वाद्गार्हपत्ये न प्राप्नोति इति वचनम् ॥ ९ ॥

---

(१) अत्र पञ्चवर्गाः तेषां चत्वार्यन्तराणि। तेष्वन्तरेषु चत्वारोऽतिरात्राः, कर्तव्या इति (ताण्ड्ये० २४-११) स्पष्टम्। तदयं क्रमः-अषोडशिकः प्रायणीयः १, कौसुरबिन्दस्त्र्यहः २-४, अतिरात्रः ५, नवोक्थ्याः ६-१४, एकः षोडशी १५, अतिरात्रः १६, द्वादशोक्थ्याः १७-२८, अतिरात्रः २९, पृष्ठ्यः ३०-३५, अतिरात्रः ३६, द्वादशोक्थ्याः ३७-४८, उदयनीयः ४९।

(२) प्रायणीयः १, अभिप्लवौ २-१३, गोआयुषी १४-१५, अभिप्लवौ १६-२७, अभिजिद्विश्वजितौ २८-२९, अभिप्लवः ३०-३५, सर्वस्तोमनवसप्तदशौ३६-३७, दशरात्रः३८-४७, महाव्रतम्४८, उदयनीयः४९

(३) आञ्जनाभ्यञ्जनीयसंज्ञके तृतीये एकान्नपञ्चाशद्रात्रे षडभिप्लवा भवन्ति।

(४) अत्र दीक्षिताः गार्हपत्ये गुग्गुलुसुगन्धितेजनपीतुदारुभिः सह पृथक् पृथक् सर्पिः विपचेयुः। सुगन्धितेजनं—रोहिणपुष्पाणि। पीतुदारुः—देवदारुः। उदुम्बर इत्यन्ये।

(१)यथासवनन्तैः सवनेष्वाञ्जनाभ्यञ्जने कुर्वी-
रन्नाग्नीध्रेऽहरहः ॥ १० ॥

प्रातःसवनान्ते गुल्गुलुना माध्यन्दिने सुगन्धितेजनेन तृतीयसवने पैतुदारवेण। अञ्जनमक्ष्णोः, अभ्यञ्जनं शरीरस्य। आग्नीध्रेऽहरहः(२)॥१०॥

पृष्ठ्ये वा(३) ॥ ११ ॥

वा शब्दो विकल्पार्थः ॥ ११ ॥

सवनमुखीयेषु भक्षयिष्यन्तो वा ॥ १२ ॥

(४)वा सवनान्तेषु ॥ १२ ॥

ये आत्मानं नैव जानीरंस्तेषामेतत्(५) ॥ १३ ॥

य आत्मानं प्रसुप्तमिव मन्यन्ते तेषामाञ्जनाभ्यञ्जनीयेऽधिकारः ॥१३॥

संवत्सरसंमिते चतुर्विंशमहः ॥ १४ ॥

'संवत्सरसम्मितम्' इति सत्रनाम। तत्र चतुर्विंशमहर्भवति ॥१४॥

अभिप्लवाश्चत्वारः ॥ १५ ॥

गोआयुषी(६) त्रिभ्यो विषुवन्मध्यो नवरात्रः(७) ॥१६॥

---

( १ ) अथास्य त्रिधापक्वस्य घृतस्य विनियोग उच्यते।

( २ ) अहरहः सर्वेषु एकोनपञ्चाशत्संख्येष्वप्यहःसु अग्नीधः शरणे गृहे तैर्गौग्गुलवादिभिः सर्पिभिर्यथासवनं सवनक्रमेण दीक्षिता आञ्जनाभ्यञ्जने कुर्वीरन्।

( ३ ) पृष्ठ्ये षडहे वा आञ्जनाभ्यञ्जने कुर्युः न तु सर्वेष्वहःसु।

( ४ ) अथवा सवनान्तेषु चमसेषु भक्षयिष्यन्तः तद्भक्षणात्पूर्वम् आञ्जनाभ्यञ्जने कुर्युः। सर्वेषु सवनेषु सवनस्य मुखे आदौ भवाः सवनमुखीयाः प्रस्थितयागचमसा इति यावत्।

( ५ ) जानातिरत्रान्तर्भावितण्यर्थः न ज्ञापयेयुरित्यर्थः। विद्वत्सभामध्ये ये स्वात्मानं प्रख्यापयितुमशक्ताः, तेषामेतत्सत्रं भवति। तस्य चैवं क्रमः-प्रायणीयः १, अभिप्लवाश्चत्वारः २-२५ सर्वस्तोमोऽतिरात्रः २६, अभिप्लवौ २७-३८, दशरात्रः ३९-४८, उदयनीयः ४९ इति।

( ६ ) यद्यपि सूत्रकारेण 'गोआयुषी' इत्युक्तं तथापि 'पञ्चविंशे आयुश्च गौश्च द्वे अहनी' इत्येवमत्र विशेषपाठात्। पूर्वमायुस्ततो गौरित्येवमनुष्ठेयम् सूत्रे स्वल्पाच्तरत्वेन गोशब्दस्य पूर्वनिपात इति देवयाज्ञिके स्पष्टम्।

( ७ ) तत्र चतुर्णामभिप्लवानां मध्ये त्रिभ्योऽभिप्लवेभ्यः परो विषु-

त्रिभ्योऽवसितेभ्यो विषुवन्मध्ये गवामयनिको नवरात्रो भवति ॥१६॥

**एकषष्टिरात्रे पृष्ठ्यौ नवरात्रमभितः ॥ १७ ॥**

अप्रतिज्ञातमप्येकषष्टिरात्रं लाघविकेन सताऽऽचार्येणेहाभिहितम्(१)।१७

**प्रतिलोमः परः(२) ॥ १८ ॥**

तयोः पृष्ठ्ययोः प्रतिलोमः परो भवति ॥ १८ ॥

**(३)सवितुः ककुभः ॥ १९ ॥**

'व्याख्यास्यते' इति सूत्रशेषः ॥ १९ ॥

**नवरात्राश्चत्वारः ॥ २० ॥**

तानाचष्टे—

**अग्निष्टोमाः प्रथमसप्तमोत्तमा नववर्गाणामुक्थ्या इतरे ॥ २१ ॥**

सर्वे चैतेऽपूर्वाः(४) ॥ २१ ॥

**परे षडभिप्लवे ॥ २२ ॥**

(५)परे ये द्वे ते षडभिप्लवे भवतः ॥ २२ ॥

---

वन्मध्यो गावामयनिको नवरात्रो भवति । तदयं क्रमः चतुर्थे एकोनपञ्चाशद्रात्रे-प्रायणीयः १, चतुर्विंशमहः २, त्रयोऽभिप्लवाः ३-२०, (अभिजित् १, त्रयः स्वरसामानः ४, विषुवान् ५, त्रयः स्वरसामानः ६-८, विश्वजित् ९,) इत्येवंक्रमो नवरात्रः २१-२९, अभिप्लवाः ३०-३५, आयुः ३६, गौः ३७, दशरात्रः ३८-४७, महाव्रतम् ४८, अतिरात्रः ४९ ।

( १ ) अथ प्रागप्रतिज्ञातमप्येकषष्टिरात्रं लाघवार्थं संवत्सरसंमितस्याग्रहामनुवृत्तिलोभेनान्तरोपनिबध्नाति । नवरात्रमभितः पृष्ठ्यः षडहो भवति ।

( २ ) उपरिष्टात्क्रियमाणः पृष्ठ्यः प्रतिलोमः त्रयस्त्रिंशारम्भणो भवति । अन्यत्सर्वं संवत्सरसम्मितेन समानम् । तदयं क्रम एकषष्टिरात्रे-प्रायणीयः १, चतुर्विंशमहः २, त्रयोऽभिप्लवाः ३-२०, पृष्ठ्यः २१-२६, नवरात्रः २७-३५, प्रतिलोमः पृष्ठ्यः ३६-४१, अभिप्लवः ४२-४७, आयुः ४८, गौः ४९, दशरात्रः ५०-५९, महाव्रतम् ६०, उदयनीयः ६१ ।

( ३ ) एकचमस्यैकान्नपञ्चाशद्रात्रस्य संक्षेयम् ।

( ४ ) तदयं क्रमः—प्रायणीयः १, चत्वारोनवरात्राः २-३७, दशरात्रः ३८-४७, महाव्रतम् ४८, उदयनीयः ४९ ।

( ५ ) परे पूर्वोक्तात्पञ्चमात्परे द्वे षष्ठसप्तमे एकान्नपञ्चाशद्रात्रे षडभिप्लवे भवतः ।

पूर्वस्य चतुर्भ्यो व्रतम्(१) ॥ २३ ॥

भवति ॥ २३ ॥

प्रजातिकामानामेतत्(२) ॥ २४ ॥

भवति ॥ २४ ॥

प्रकृतिविहितः शतरात्रं चतुर्दशाभिप्लवं चतुरहश्च ॥२५॥

ननु प्रकृतिविहितत्वेनैवैतत्प्राप्नोति, चतुर्दशाभिप्लवं चतुरहश्चेत्यवाच्यम्। उच्यते च, तत्किमर्थम्? (३)शतरात्रद्वयप्रज्ञापनाय । एकं प्रकृतिविहितम् । तत्र त्रिकद्रुकाः पूर्वमभिप्लवेभ्यो भवन्ति, दशरात्राच्च परं व्रतं भवति, (४)द्वितीये यथोपदेशमहानीत्यभिप्लवेभ्यः परतश्चतुरहः ॥ २५ ॥

सदोहविर्धानानि चक्रीवन्ति(५) ॥ २६ ॥

चक्रीवन्ति भवन्ति ॥ २६ ॥

---

(१) प्रस्तुतयोः षष्ठसप्तमयोर्मध्ये प्रथमस्य षष्ठस्यैकान्नपञ्चाशद्रात्रस्य चतुर्भ्योऽभिप्लवेभ्योऽवसितेभ्यः परं महाव्रतम् भवति । तदयं क्रमः षष्ठे एकोनपञ्चाशद्रात्रे—

प्रायणीय १, चत्वारोऽभिप्लवाः २-२५, महाव्रतम् २६, अभिप्लवौ २७-३८, दशरात्रः ३९-४८, उदयनीयः ४९ । सप्तमे एकोनपञ्चाशद्रात्रे त्वयं क्रमः—प्रायणीयः १, षडभिप्लवाः २-३७, दशरात्रः ३८-४७, महाव्रतम् ४८, उदयनीयः ४९ इति ।

(२) सत्रम् ।

(३) मन्दधियां सुखेन प्रतिपत्त्यर्थमित्यर्थः । अन्यथा तेषां झटित्येवंविधा प्रतिपत्तिर्न भवति, यदेतावद्भिरेवाभिप्लवैः पूरणं भवतीति देवयाज्ञिके स्पष्टम् ।

(४) ताण्ड्ये अस्यैव शतरात्रस्य दर्शनात् स्वबुद्ध्या शतरात्रद्वयकल्पनं निर्मूलमिति प्रतिभातीत्याहुर्देवयाज्ञिकाः ।

शतसुत्यं सत्रं प्रकृतिविहितं भवति । चतुरहशब्देन त्रयस्त्रिकद्रुका महाव्रतं चेति । तदयं शतरात्रे क्रमः—प्रायणीयः १, त्रिकद्रुकाः २-४, चतुर्दशाभिप्लवाः ५-८८, दशरात्रः ८९-९८, महाव्रतम् ९९, उदयनीयः १०० । प्रायणीयः १, चतुर्दशाभिप्लवाः २-८५, त्रिकद्रुकाः ८६-८८, महाव्रतम् ८९, दशरात्रः ९०-९९, उदयनीयः १०० इति च । अत्रान्त्यक्रमकमेकमेव शतरात्रं देवयाज्ञिकसंमतम्, कर्काणां तूभयम् ।

(५) चक्रीवन्ति मञ्जूषादिवच्चक्रयुक्तानि भवन्ति यथा पुरुषैः प्रेरितानि चलन्ति ।

अभिप्रयायमभिषुण्वन्ति देशानुपरोधेन(१) ॥ २७ ॥

यात्वा यात्वाभिषवं कुर्वन्ति देशानुपरोधेन प्रतिनिवर्तन्ते ॥ २७ ॥

अहरहराभिप्लवेषु त्रिकद्रुकेषु वा(२) ॥ २८ ॥

'वा' इति विकल्पः ॥ २८ ॥

अभिप्लवाभ्यासेनाभिपूरणम् ॥ २९ ॥

भवति(३) सत्राणाम् ॥ २९ ॥

सकृत्प्रयोगी दशरात्रः(४) ॥ ३० ॥

भवति । प्रकृतिविहितानामेष धर्मः ॥ ३० ॥

व्रतवन्ति सर्वजिद्दीक्षाणि ॥ ३१ ॥

यानि व्रतवन्ति सत्राणि तानि सर्वजिद्दीक्षाणि(५) ॥ ३१ ॥

सप्तदशरात्रादीनि त्रिंशदन्तान्येक एकान्नपञ्चाशद्रात्रे चाष्टादशदीक्षाणि पौर्णमासीप्रक्रमाणि ॥ ३२ ॥

सप्तदशरात्रादीनि रात्रिसत्राणि त्रिंशदन्तानि । एकान्नपञ्चाशद्रात्रे च यानि व्रतवन्ति तान्यष्टादशदीक्षाणि पौर्णमासीप्रक्रमाणि चैक इच्छन्ति । एके यथाप्राप्तम् (६)व्रतवतां सर्वजिद्दीक्षता (७) ॥३२॥

---

(१) अहरहः प्रत्यहमभिप्रयायाभिप्रयाय यात्वा यात्वाभिषुण्वन्ति सोमाभिषवं कुर्वन्ति । कथम्? देशानुपरोधेन । देशस्याभिषवस्थानस्यानुपरोधोऽबाधो देशानुपरोधः । अभिगमनं कृत्वा पश्चात्स्वस्थानमागत्याभिषवः कार्य इत्यर्थः ।

(२) अभिप्रयायमभिषुण्वन्तीत्येतदभिप्लवेष्वेव कर्तव्यं न तद्व्यतिरिक्तेषु दशरात्रमहाव्रतत्रिकद्रुकप्रायणीयोदयनीयेषु । अथवा त्रिकद्रुकेषु एवैतत्कर्तव्यं नाभिप्लवदशरात्रमहाव्रतप्रायणीयोदयनीयेषु ।

(३) प्रकृतिविहितानामित्यर्थः । यदा चाभिप्लवाभ्यासो न सम्भवति तदा तस्यादितः पञ्च इत्याद्युपायः ।

(४) द्वादशाहिको दशरात्रः सकृत्प्रयोगी भवति । एकस्य सत्रस्य मध्ये एकवारमेव प्रयुज्यते ।

(५) यथा सर्वजिति(का०श्रौ०२२-१-४४,४५) चतुर्दिनाधिकं संवत्सरं दीक्षाः एकदिनाधिकं संवत्सरं वा संवत्सरं वा षण्मासान् वा, ता एव दीक्षा अत्रापि भवन्तीत्यर्थः ।

(६) व्रतवत्त्वमात्रम् इ० पा० ।

(७) 'च' अधिकः । अत्र सप्तदशरात्रादित्रिंशद्रात्रान्तेषु, एकान्न-

"ते शतातिरात्रं सत्रमुपेयुः" ( श० ब्रा० ११-५-५-६ ) इति श्रूयते। तत्र सन्देहः—किं शातरात्रिकाणामह्नां संस्थात्वमात्रमुच्यते, उत द्वादशाहस्य यदाद्यमहरतिरात्रसंस्थं तच्छतकृत्वोऽभ्यसितव्यम्, उत दशरात्रस्यातिरात्रसंस्थस्यैषोऽभ्यासः, आहोस्विच्छतसंख्यासंयुक्तानामतिरात्राणां विधिरिति। किं तावत्प्राप्तम्? सूत्रेणैव पक्षः—

**शतातिरात्रेऽहानि शतरात्रसामान्यात् ॥३३॥**

शतातिरात्रे शतमह्नां श्रूयते। (०)तच्छातरात्रिकाण्यहानि प्रवर्त्तन्ते। शतसंख्यावच्छिन्नस्य हि धर्मापेक्षायां सत्यां शतरात्रस्य पर्युपस्थापकत्वमिति ॥ ३३ ॥

एवं प्राप्त आह—

**द्वादशाहाद्यं वा तत्प्रकृतेः ॥ ३४ ॥**

अत्र वृद्धयाज्ञिको (१)यशोगोप्याचष्टे—'द्वादशाहस्य यदाद्यं प्रायणीयमहरतिरात्रसंस्थं तस्यैतच्छतसंख्याविधानम्' इति। एवं चातिरात्रप्राप्तौ शतसंख्याविधानमिति। यत्पुनरुक्तं 'शतरात्रः प्रवर्त्तत' इति, तदयुक्तम्। न हि शतातिरात्रस्य शातरात्रिकधर्मप्रवृत्तौ प्रमाणमस्ति। उभयत्र ह्यानुमानिकेन वचनेन द्वादशाहाविष्यन्तप्रवृत्तिरिष्यते तस्मान्न शातरात्रिको विध्यन्तः। यदप्युक्तं—'द्वादशाहाद्यस्याह्न इयं संख्या विधीयते' इति, तदप्ययुक्तम्। पृथक्त्वनिवेशिनी हि संख्या भवति। न च प्रायणीयेऽभ्यस्यमाने पृथक्त्वनिवेशित्वसम्भवः। तस्मादेतदप्यनुपपन्नमेव। पितृभूतिराचार्यस्तु सूत्रमन्यथा व्याचष्टे—"द्वादशाहाद्यं वा तत्प्रकृतेः" इति। द्वादशाहाद्यं प्रवृत्तिधर्माणां विजानीयात्, यः सत्रेषु प्रवर्त्तते इति। कश्चासौ? दशरात्रः। स हि सर्वसत्रेषु प्रवृत्तिधर्म इति(२)। एतदपि नोपपद्यते। न हि दाशरात्रिकेष्वन्त्यप्राप्तेष्वहःसु संस्थान्यत्वं शतसंख्याविधानं चोपपद्यते, वाक्यभेदप्रसङ्गात्। अत्रापि च पृथक्त्वनिवेशिन्येव संख्या भवति, दशरात्राभ्यासात्। तस्मादेतदप्यसदेव। अत्र वदामः—द्वादशाह आद्यो मूलभूतो यस्य शतातिरात्रस्य तद् द्वादशाहाद्यं शतातिरात्रम्। द्वादशाहमूलमित्यर्थः। कुत एतत्? तत्प्रकृतेः। 'द्वादशाहो हि प्रकृतिः सर्वसत्राणाम्' इत्युक्तमेव। अपि च यत्राहर्विशेषो नाम्नायते तत्र दशरात्रप्रवृत्तिर्भ-

---

पञ्चाशद्रात्राणां मध्ये महाव्रतरहितयोः प्रथमतृतीययोः विधृत्याञ्जनाभ्यञ्जनीयसंज्ञयोश्चाष्टादशदीक्षाः पौर्णमास्यामारभ्य इति साम्प्रदायिकाः।

( १ ) 'यशोगोप्याचार्य आचष्टे' इ० पा०।

( २ ) शतातिरात्रे दशरात्रोऽतिरात्रसंस्थ आवर्तते इति सम्प्रदायः।

पति । इह संख्याविशिष्टानामतिरात्रसंस्थानामहर्विशेषाणामाम्नाना इशरात्रप्रवृत्तिर्न युक्ता इति । तस्मादियमेव व्याख्या–"द्वादशाह आद्यः प्रकृतिभूतो यस्य शतातिरात्रस्य तद्द्वादशाहाद्यं शतातिरात्रम्" इति(१) बहुव्रीहिः ॥ ३४ ॥

**शताग्निष्टोमे शतोक्थ्ये च ॥ ३५ ॥**

एष एव न्यायः ॥ ३५ ॥

शतातिरात्र एव कर्म विचारयति—

**आश्विनस्याग्नेयान्ते प्रतिप्रस्थाता व्युत्क्रामतादि कृत्वा मैत्रावरुणाय प्रातरनुवाकमुपाकृत्यान्तर्यामं हुत्वा प्रपीड्य पवित्रं द्रोणकलशे निदधाति ॥ ३६ ॥**

आश्विनस्य सशस्त्रस्य आग्नेयसूक्तान्ते प्रतिप्रस्थाता व्युत्क्रामतादि कृत्वा मैत्रावरुणाय प्रातरनुवाकमुपाकरोति । अन्तर्यामं हुत्वा प्रपीड्य पवित्रं द्रोणकलशे स्थापयति ॥ ३६ ॥

**सशेषं होतृचमसम् ॥ ३७ ॥**

स्थापयति ॥ ३७ ॥

ततः—

**तिरोऽह्न्यादि करोति पूर्वस्याह्नः(२) ॥ ३८ ॥**

---

(१) एवञ्च शतातिरात्रं द्वादशाहप्रकृतिकं भवति, न शतरात्रप्रकृतिकम् । अहानि तु समाख्यया विहितानि, शतमतिरात्रा यास्मिस्तच्छतातिरात्रमिति हि अन्वर्था संज्ञा विज्ञायते । अन्यथा तद्वैयर्थ्यापत्तेः । तस्मादत्र शतमतिरात्रा अपूर्वा एव विधीयन्ते, तेषु च द्वादशाहधर्मा भवन्तीति च ।

(२) ततः सूर्यउदिते आश्विनशस्त्रे समाप्ते अध्वर्युः पूर्वस्याह्नः तिरोऽह्न्यादि तिरोऽह्न्यसोमयागादि कर्म करोति । तिरश्च तदहश्चेति । "विशेषणं विशेष्येण बहुलम्" ( पाणि० २–१–५७ ) इति कर्मधारये तिरोऽह्न इति रूपम् । रात्र्या अन्तर्हितं व्यवहितमहरिति तस्यार्थः । तिरोऽह्नि रात्र्यन्तर्हितेऽहनि भवाः सोमास्तिरोऽह्न्याः । आश्विनशस्त्रकयागसम्बन्धिनः चमसस्थाः सोमाः पूर्वदिननिष्पन्नत्वात्तिरोऽह्न्या इत्युच्यन्ते, तत्प्रचारादि करोतीति देवयाज्ञिकाः ।

**(१)ग्रहग्रहणाद्या विप्रुड्ढोमात्कृत्वा-**

इति चतुर्विंशेऽध्याये तृतीया कण्डिका ॥

**(२)सवनसन्ततिं जुहोत्यग्निः प्रातः सवन इति(३)॥१॥**

ऐन्द्रवायवग्रहणमाविप्रुड्ढोमात्कृत्वा सवनसन्ततिसंज्ञकं होमं करोति "अग्निः प्रातः सवन" (का०श्रौ०४-३-१८) इत्यनेन मन्त्रेण ॥ १ ॥

**संवत्सरप्रभृतीनि गवामयनप्रकृतीनि तद्गुणदर्शनात् ॥ २ ॥**

संवत्सरप्रभृतीनि यानि सत्राणि तानि गवामयनप्रकृतीनि भवन्ति, संवत्सरसामान्यात्, तद्गुणदर्शनाच्च। दृश्यन्ते हि तेषु गवामयनिका गुणाः, "अथ यत्पृष्ठ्यꣳ षडहमुपयन्ति" "अथ यदभिप्लवꣳ षडहमुपयान्ति" ( श० ब्रा० १२-१-३-११,१० ) इति ॥ २ ॥

**आदित्यानामयनेऽभिप्लवास्त्रिवृत्पञ्चदशस्तोमाः(४) ॥३॥**

'आदित्यानामयनम्' इति संज्ञा सत्रस्य। तत्राभिप्लवास्त्रिवृत्पञ्चदशस्तोमा भवन्ति ॥ ३ ॥

**मासाः पृष्ठ्यमध्याः ॥ ४ ॥**

गवामयने हि पृष्ठ्यान्ता मासाः, इह पृष्ठ्यमध्या भवन्ति(५) ॥ ४ ॥

**बृहस्पतिसवोऽभिजित्स्थाने(६) ॥ ५ ॥**

भवति ॥ ५ ॥

---

( १ ) पूर्वस्याह्नो यज्ञपुच्छे समाप्ते पुनः पवित्रं वितत्य होतृचमसे यजमानेन हस्तेन गृहीते प्रकृतिवद्धारायां प्रवृत्तायामध्वर्युरैन्द्रवायवादिग्रहग्रहणादि विप्रुड्ढोमान्तं कुर्यात्।

( २ ) 'सवनसन्ततिं' इ० पा०।

( ३ ) "अथानुपूर्वं यज्ञपुच्छꣳ सꣳस्थाप्य यऽऊर्ध्वा अन्तर्यामाद्ग्रहास्तान्गृहीत्वा विप्रुषाꣳ होमꣳ हुत्वा सन्ततिं च बहिष्पवमानेन स्तुत्वाहरेव प्रतिपद्याध्वाऽइति" ( श० ब्रा० ११-५-५-११ ) इति श्रुतेः।

( ४ ) तत्र गवामयनप्रकृतित्वात्सर्वं तद्वत्प्राप्तम्। तद्विशेषयति तत्राभिप्लवास्त्रिवृत्पञ्चदशस्तोमा भवन्ति। तत्रायुग्मान्यहानि त्रिवृत्स्तोमकानि युग्मानि तु पञ्चदशानीति षडहेषु त्रिवृत्पञ्चदशयोर्विवेकः। उत्तरपक्षे तु विपरीतम् अयुग्मानि पञ्चदशानि युग्मानि तु त्रिवृत्स्तोमकानीति।

( ५ ) द्वौ अभिप्लवौ पृष्ठ्यः द्वावभिप्लवावित्येवंरूपाः।

( ६ ) "षष्ठे मासे अभिजिदग्निष्टोमः" ( का० श्रौ० १३-२-६ ) इ·

इन्द्रस्तोमो विश्वजितः(१) ॥ ६ ॥

स्थाने भवति ॥ ६ ॥

विश्वजितः परे ये त्रयोऽभिप्लवास्तेषामुत्तरयोः स्थाने त्रिवृतोऽग्निष्टोमा दश ॥ ७ ॥

(२)भवन्ति ॥ ७ ॥

उद्भिद्बलभिदौ च(३) ॥ ८ ॥

षष्ठमासादौ मध्यमस्थाने पृष्ठ्यः(४) ॥ ९ ॥

षष्ठस्य मासस्य आदौ मध्यमस्याभिप्लवस्य स्थाने पृष्ठ्यो भवति॥९॥

दशरात्रस्य छन्दोमदशाहः ॥ १० ॥

दशरात्रस्य स्थाने छन्दोमदशाहो भवति ॥ १० ॥

अङ्गिरसामयनमादित्यानामयनवत् ॥ ११ ॥

'अङ्गिरसामयनम्' इति सत्रसंज्ञा। तदादित्यानामयनवद्भवति ॥११॥

विशेषमाह—

अभिप्लवास्त्रिवृतः ॥ १२ ॥

त्रिवृत्स्तोमका अभिप्लवा भवन्ति ॥ १२ ॥

मासाः पृष्ठ्यादयः पूर्वपक्षे ॥ १३ ॥

प्रतिलोमाः परे(५) ॥ १४ ॥

भवन्ति ॥ १४ ॥

---

त्यस्य स्थाने त्रिवृद्बृहस्पतिसवो भवति ऐकाहिकबृहस्पतिसवधर्मक इत्यर्थः।

(१) उत्तरस्मिन्पक्षे सप्तमे मासे पञ्चदशउक्थ्यसंस्थो भवति।

(२) तेषामुत्तरयोर्द्वितीयतृतीययोः स्थाने त्रिवृत्स्तोमका दशाग्निष्टोमाः।

(३) दशभ्योऽग्निष्टोमेभ्यः परौ। एवं द्वयोरभिप्लवयोः स्थानं पूर्णं कृतम्।

(४) षष्ठमासस्यादौ ये त्रयोऽभिप्लवा गवामयने ( का० श्रौ० १३-२-५ ) विहिताः तेषां मध्ये मध्यमाऽभिप्लवस्थाने पृष्ठ्यः षडहो भवति।

(५) उत्तरपक्षे मासाः प्रतिलोमाः।

**योऽभिप्लवमध्ये पृष्ठ्य(१) उत्तमः सः ॥ १५ ॥**

भवति ॥ १५ ॥

**गोआयुषी प्रतिलोमे ॥ १६ ॥**

भवतः ॥ १६ ॥

**छन्दोमदशाहश्च ॥१७॥**

प्रतिलोम एव ॥ १७ ॥

**दृतिवातवतोरयनमेकैकेन पृष्ठ्यस्तोमेन मासं मासम् ॥ १८ ॥**

दृतिवातवतोरयनमिति सत्रस्य संज्ञा। तत्रैकैकेन पृष्ठ्यस्तोमेन मासं मासं नयेत् पृष्ठ्यस्तोमाश्च त्रिवृदादयः। एवं ह्यत्र श्रूयते—"त्रिवृता मासं पञ्चदशेन मासं सप्तदशेन मासमेकविंशेन मासं त्रिणवेन मासं त्रयस्त्रिंशेन मासम्" (ताण्ड्य० २५-३) इति । अतस्त्रिवृदादिभिरेकाहैर्मासं मासं नयेदिति ॥ १८ ॥

तदुक्तमाचार्येण—

**(२)एकाहास्तच्छब्दात् ॥ १९ ॥**

इति। तेषां शब्दस्तच्छब्दः सत्राभिधायके उपलभ्यते। पृष्ठ्यस्तोमशब्दोऽपि च एकाहानामेव वाचक उपलभ्यते—पृष्ठ्यस्तोमशब्दास्त्रिवृदादयः। ननु च स्तोमेष्वपि दृश्यते पृष्ठ्यस्य षडहस्य स्तोमाः पृष्ठ्यस्तोमा इति स्तोमेष्वपि भवति। नैतदेवम्, पृष्ठ्यस्तोमशब्दः प्रत्यस्तमितावयवार्थवृत्तितयाऽश्वकर्णादिवदेकाहानां वाचक इति। स्तो-

---

(१) आदित्यानामयने उत्तरपक्षे मध्यमस्थाने पृष्ठ्यः, अत्र स उत्तमः ।

(२) अत्रेदं सन्दिह्यते किं पृष्ठ्यस्तोमशब्देन त्रिवृदादय एकाहा अभिधीयन्ते उत पृष्ठ्यस्य स्तोमाः पृष्ठ्यस्तोमा इति पृष्ठ्यस्य षडहस्य सम्बन्धिनस्त्रिवृदादयः स्तोमा इति ? किं चातः? यद्येकाहाभिधानम् एकैकेन त्रिवृदादिना एकाहेन मासस्य पूरणं कर्तव्यम्। अथ पृष्ठ्यस्य स्तोमानामभिधानं तदा चोदकप्राप्तेषु गावामयनिकेषु नानाविधेष्वहःसु त्रिवृदादेः स्तोममात्रस्य विधानमिति। किं तावत्प्राप्तम् ? सूत्रेणैव पक्षः एकाहास्तच्छब्दात् अत्र पृष्ठ्यस्तोमशब्देन त्रिवृदादय एकाहा एवाभिधीयन्ते तच्छब्दात्। त्रिवृदादय एकाहवाचकाः शब्दा यतः। इति पूर्वः पक्षः ।

मेषु पुनः षष्ठीं कल्पयित्वा समासलक्षणेन तल्लोपेन च स्तोमेन प्रवृत्तिः। न च तन्न्याय्यम् । तस्मात्पृष्ठ्यस्तोमशब्द एकाहानां वाचक इति॥१९॥

एवं प्राप्ते आह—

नानाऽहानि (१)वा सङ्घातशब्दात् ॥ २० ॥

'वा' शब्दः पक्षव्यावृत्तौ । नानाऽहानि वा यान्यन्वयप्राप्तानि तेषु स्तोमविधानं, त्रिवृता स्तोमेन मासं पञ्चदशस्तोमेन मासमित्येवमादि । कुत एतत् ? सङ्घातशब्दो यत्र भवति तत्रैकाहवचने त्रिवृद्भवति स च मासमिति वाक्यं भिद्यते। अथ पुनर्यो मासः स त्रिवृता स्तोमेन इति नैष दोषो भवति ॥ २० ॥

मध्ये व्रतम् ॥ २१ ॥

(२)विषुवत्स्थाने व्रतं भवति ॥ २१ ॥

उत्तरपक्षं प्रतिलोमम् ॥ २२ ॥

उत्तरपक्षः पूर्वपक्षात् प्रातिलोम्येन(३) ॥ २२ ॥

कुण्डपायिनामयनं पौर्णमासीदीक्षम् ॥ २३ ॥

'कुण्डपायिनामयनम्' इति सत्रस्य संज्ञा । तस्य पौर्णमास्यां दीक्षा भवति ॥ २३ ॥

चतुर्थ्यां वाऽपरपक्षस्य(४) ॥ २४ ॥

इति विकल्पः ॥ २४ ॥

मासं दीक्षाः ॥ २५ ॥

तस्य भवन्ति ॥ २५ ॥

---

(१) अथोत्तरपक्षः—दृतिवातवतोरयनस्य एकैकस्मिन्मासे नानाऽहानि भवन्ति । यानि प्रकृतितः प्राप्तानि तेष्वेव त्रिवृदादिस्तोमविधानं न तु त्रिवृदादिना एकैकेनैकाहेन मासपूरणम् । कुतः ? सङ्घातशब्दात् । यतस्त्रिवृदादयः सङ्घातशब्दाः । सङ्घातवाचकाः स्तोत्रियासंख्यावाचकाः अतो मुख्यया वृत्त्या स्तोत्रियासङ्घवाचिनः गौण्या वृत्त्या त्वेकाहेषु वर्तन्ते त्रिवृत्स्तोमयोगस्त्रिवृदिति । गौणमुख्ययोश्च मुख्ये सम्प्रत्यय इति न्यायात्त्रिवृदादिशब्दाः पृष्ठ्यसम्बन्धिनां स्तोमानां वाचका इति सिद्धम् ।

(२) 'विषुवत्स्तोमे' इ० पा० ।

(३) त्रयस्त्रिंशेन मासं त्रिणवेन मासमित्यादि क्रमेणेत्यर्थः ।

(४) फाल्गुनापरपक्षस्य चतुर्थ्यां वा चैत्र्यां पौर्णमास्यां वेति ।

(१)सोममुपनह्य सुत्यास्थानेषु मासमग्निहोत्रं जुहोति ॥ २६ ॥

सोमोपनहनं कृत्वा यानि सुत्यास्थानानि तेष्वग्निहोत्रहोमः। अग्निहोत्रं च सायारम्भं प्रातरपवर्गम्। तत्र द्वावपि होमौ (२)फलैक्यात्तन्त्रेणोपक्रमितव्यौ। प्रधानस्य तु भेदः। चतुर्गृहीतेनाग्नेयीं सायमाहुतिं हुत्वा पुनश्चतुर्गृहीतेन सौरीमाहुतिं जुहोति। तन्त्रेणोत्तरां जुहोति(३)। गार्हपत्यकार्ये तत्र प्राजहित एव न शालाद्वार्ये। ज्योतिष्टोमे हि तत् श्रुतं, न चाग्निहोत्रं ज्योतिष्टोमो न च तदङ्गमिति। आहवनीयस्त्वतिप्रणीत एव ॥ २६ ॥

दर्शपूर्णमासाभ्यां मासम् ॥ २७ ॥

नयेयुः(४) ॥ २७ ॥

पक्षादौ यद्यद्धविस्तत्सर्वस्मिन् ॥ २८ ॥

पक्षस्यादौ यद्धविस्तत्सर्वस्मिन् पक्षे कर्तव्यम्, अभिप्रवृत्तत्वात् ॥ २८ ॥

सारस्वते च प्रथमे ॥ २९ ॥

एवमेव ॥ २९ ॥

तन्त्रेण वा समस्तचोदितत्वात्(५) ॥ ३० ॥

'वा' शब्दः पक्षव्यावृत्तौ। तन्त्रेणैव दर्शपूर्णमासौ कर्तव्यौ। समस्तयोर्हि चोदना दर्शपूर्णमासाभ्यां मासमिति। न ह्यत्र कालो भेदकः, तस्मादग्निहोत्रवदत्रापि तन्त्रमेव ॥ ३० ॥

अग्निहोत्रं च(६) ॥ ३१ ॥

---

(१) सोमबन्धनपूर्वकम्। अत्राग्निहोत्रशब्दो नित्याग्निहोत्रधर्माऽतिदेशार्थः ततश्च तद्धर्मकं कर्मान्तरं मासपूर्तिपर्यन्तं प्रत्यहमत्र भवति।

(२) कालैक्यात् इ० पा०।

(३) तस्मिन्नेव काले जुहोति,न तु नित्याग्निहोत्रवद् द्वितीयदिवसे प्रातरिति।

(४) सम्पूर्णे शुक्लपक्षे दर्शेष्टिः, सम्पूर्णे कृष्णे च पौर्णमासेष्टिः कर्तव्या।

(५) न दर्शपौर्णमासस्य पक्षभेदेनानुष्ठानम्। किं तर्हि? तन्त्रेण। कुतः? समस्तचोदितत्वात्। समस्तयोरेव दर्शपौर्णमासयोः प्रत्यहं मासस्य पर्यन्तं विहितत्वात्। सारस्वते तु पक्षभेदेनैव तत्र तथैव विधानात्।

(६) तन्त्रेण। न तु नित्याग्निहोत्रवत्सायं प्रातः पृथक्पृथगिति।

अस्य सूत्रस्य पूर्वमेवाभिहितो न्यायः ॥ ३१ ॥

पृथङ्मासाश्चातुर्मास्यपर्वाभिः ॥ ३२ ॥

नीयन्ते । "वैश्वदेवेन मासं वरुणप्रघासैर्मासꣳ साकमेधैर्मासꣳ शुनासीरीयेण मासम्" ( ताण्ड्य० २५–४ ) इति श्रुतेः ॥ ३२ ॥

साकमेधा दर्शपूर्णमासवत् ॥ ३३ ॥

तन्त्रेणेत्युक्तो न्यायः ॥ ३३ ॥

सोमा वा सामान्यात् ॥ ३४ ॥

सोमा वा एते भवन्त्यग्निहोत्रादयः । कुत एतत् ? सामान्यात् । सत्रं हि सोमयागैः पूर्यते । अथवा सामान्यादिति समानशब्दः अग्निहोत्रादिषु प्रतिकर्म सोमेषु ॥ ३४ ॥

न जुहोतिशब्दात् ॥ ३५ ॥

नैतदेवं सोमा एत इति । कुत एतत् ? जुहोतिशब्दात् । मासमग्निहोत्रं जुहोतीति जुहोतिशब्दोऽत्र भवति । न चासौ सोमयागेषु प्रसिद्धः, तस्मान्न सोमा इति ॥ ३५ ॥

काममितरे(१) ॥ ३६ ॥

इतरे तर्हि दर्शपूर्णमासादयो भवन्तु सोमाः । न हि तत्र जुहोति शब्द इति । नेत्युच्यते—दर्शपूर्णमासादयः शब्दा निरुपपदा एव दर्शपूर्णमासादीन् प्रत्याययन्ति, सोपपदाः सोमान् । निरुपपदाश्चैते मासं दर्शपूर्णमासाभ्यामिति । तस्माद्दर्शपूर्णमासादयोऽपि न सोमा एते॥३६॥

(२)दृतिवातवतोरयनपूर्वपक्षेण षण्मासान् ॥ ३७ ॥

दृतिवातवतोरयनस्य पूर्वपक्षेण षण्मासान्नयेयुः ॥ ३७ ॥

(३)उत्तमे त्र्योऽभिप्लवा दशरात्रो महाव्रतम् ॥३८॥

---

अतो दिवसे एव सायम्प्रातस्तनमग्निहोत्रं तन्त्रेणैव होतव्यम् । एककालत्वादङ्गानि तन्त्रेण । प्रधानाहुतयस्तु भिन्नाः ।

( १ ) दर्शपूर्णमासादयः कामं सोमा भवन्तु यतस्तत्र जुहोति शब्दो नास्ति । परमार्थतस्तु तेऽप्यत्र सोमा न भवन्ति यतो दर्शपूर्णमासादयः शब्दा निरुपपदा अत्र श्रूयन्ते न चातुर्मास्यसोमा दर्शपूर्णमाससोमा इत्येवं सोमोपपदाः अतस्तेऽपि न सोमा इति सिद्धान्तः । एवं षण्मासाः परिपूर्णाः । मासश्चात्र सर्वत्र सावनस्त्रिंशद्दिनात्मकः ।

( २ ) अथोत्तरेषु षट्सु मासेष्वहान्याह—

( ३ ) तत्र विशेषमाह—

(१) उत्तमे मासे त्र्योऽभिप्लवा दशरात्रो महाव्रतं भवति ॥ ३८॥

उपरिष्टादतिरात्रं भवति(२) ॥३९॥

अनुग्रहश्रुतेः। यदन्यतरतोऽतिरात्रस्तेनाहीन इति ॥ ३९ ॥

उभयतो वा(३) ॥ ४० ॥

अतिरात्रो भवति सत्रत्वात्। अनुग्रहश्रुतिस्तु अहीनत्वेन संस्तौति तत्कथम्? हविर्यज्ञैर्व्यवहितत्वात् ॥ ४० ॥

हविर्यज्ञेभ्योऽतिरात्रमेके सोमानन्तर्यात्(४) ॥४१॥

हविर्यज्ञेभ्योऽवसितेभ्य एके प्रायणीयमतिरात्रमिच्छन्ति। एवं सोमानन्तर्यं भवति। एके तन्नेच्छन्ति। अग्नीषोमीयोत्तरकालता हि तस्य प्रकृतौ दृष्टा। इहापि तद्वदेव। तस्मात्प्रागेव हविर्यज्ञेभ्यः प्रायणीयः ॥ ४१ ॥

(५)अत्सरुकाः कुण्डप्रतिरूपाश्चमसाः(६) ॥४२॥

अत्सरुका अवृन्तकाः कुण्डप्रतिरूपा वृत्ताकाराः ॥ ४२ ॥

पञ्चर्त्विजस्त्रीणि त्रीणि कर्माणि कुर्युः(७) ॥ ४३ ॥

तान्याह—

होत्राध्वर्यवपोत्रीये च ॥ ४४ ॥

---

(१) द्वादशे मासे

(२) अन्ते एक उदयनीयातिरात्र (का० श्रौ० १२-१-७) एव भवति न प्रायणीय इति।

(३) अथवा उभयतोऽतिरात्रं भवति प्रायणीयश्चोदयनीयश्चात्र द्वावपि भवत इत्यर्थः।

(४) उभयतोऽतिरात्रपक्षे प्रायणीयमतिरात्रमेकेआचार्याः हविर्यज्ञेभ्योऽग्निहोत्रदर्शपूर्णमासचातुर्मास्यपर्वभ्यः परं कुर्वन्ति। एवं हि सर्वेषां सोमयागानामानन्तर्यमव्यवधानं कृतं भवति। इतरथा हविर्यज्ञैर्व्यवधानं स्यात्। एक एतन्न वाञ्छन्ति। यतः प्रकृतौ प्रायणीयस्याग्नीषोमीयोत्तरकालता दृष्टा। इहापि च तद्वदेवानुष्ठानं युक्तम्। तस्माद्धविर्यज्ञेभ्यः पूर्व एव प्रायणीयो भवति।

(५) अन्येभ्यः सत्रेभ्योऽत्र विशेषमाह—

(६) अत्र अत्सरुका अवृन्ता मूलज्ञापकचिन्हदण्डरहिताः कुण्डप्रतिरूपा कुण्डाकारा वृत्ताश्च भवन्ति।

(७) अत्र कुण्डपायिनामयने वक्ष्यमाणाः पञ्चर्त्विजस्त्रीणि त्रीणि कर्माणि कुर्वन्ति त्रयाणां त्रयाणामृत्विजां कर्माणि एकैकः करोति।

'च' शब्दाद्धौत्रं च ॥ ४४ ॥

उद्गाता नेष्टृच्छावाकीये ॥ ४५ ॥

मैत्रावरुणो ब्रह्मत्वप्रातिहर्त्रे ॥ ४६ ॥

प्रस्तोता ब्राह्मणाच्छंसिग्रावस्तोत्रीये(१) ॥ ४७ ॥

प्रतिप्रस्थाताग्नीध्रोन्नेत्रे(२) ॥ ४८ ॥

'होताध्वर्यवपोत्रीये च' इति 'च'कारः सर्वत्रानुवर्तते ॥ ४८ ॥

मुख्यासनेभ्योऽनुसंसर्पमितराणि ॥ ४९ ॥

आसनशब्दः स्थानवाची मुख्यस्थानेभ्यः अनु सृप्त्वा सृप्त्वा परकीयाणि कर्माणि कुर्युः। स्वकर्मकर्तृत्वस्य चरितार्थत्वात् ॥ ४९ ॥

(३)सर्पसत्रं व्यत्यासं विराट् कौसुरुबिन्द द्वितीयं च(४) ॥ ५० ॥

'सर्पसत्रम्' इति नाम। तत्राहान्याह—विराडेकाहः। कौसुरुबिन्दस्य च द्वितीयमहः, वचनसामर्थ्यात् ॥ ५० ॥

गवामयनं वाभिगरश्रुतेः ॥ ५१ ॥

गवामयनमेव वा भवति। कुत एतत्? अभिगरश्रवणात्। (५)"षण्डकुषण्डावभिगरापगरौ" (ताण्ड्य० २५-१) इति श्रवणात्। अभिगरापगरौ च गवामयने दृष्टौ। तेन गवामयनं भवति। अत्र वाशब्दं विकल्पार्थमेक इच्छन्ति। न चैतद् युक्तम्। अभिगरापगरौ हि लिङ्गमात्रम्, "विराट्कौसुरुबिन्दद्वितीयम्" इति वचनात्। तस्मात्तदेव युक्तरूपमिति। लिङ्गं तु संस्तवार्थं भविष्यति ॥ ५१ ॥

इति चतुर्विंशेऽध्याये चतुर्थी कण्डिका।

---

(१) सर्वत्र प्रथमान्तः कर्ता।

(२) उन्नेतुः कर्म उन्नेत्रम्। आग्नीध्रं च उन्नेत्रं च आग्नीध्रोन्नेत्रे उद्गात्रादित्वादन्।

(३) गृहपतिर्गृहपतिः सुब्रह्मण्य इति छन्दोगसूत्रे। तेन सप्तभिः सर्पसत्रं कार्यम् ॥

(४) पूर्वं प्रायणीयातिरात्रः ततो द्वन्द्वसोमानां द्वितीयो विराडेकाहोऽग्निष्टोमसंस्थः तथा कौसुरुबिन्दस्य यद्द्वितीयं त्रिवृदग्निष्टोमः (का० श्रौ० २३-५-२२,२३) एतदहर्द्वयं व्यत्यस्य प्रयुञ्जानः सर्वं सत्रं पूरयेत्।

(५) षण्ढकुषण्ढाविति पा. भेदः।

**तापाश्चितं दीक्षाः संवत्सरमुपसदश्च तथा सुत्याः ॥ १ ॥**

'तापश्चितम्' इति सत्रनाम। तत्र दीक्षाः संवत्सरं भवन्ति। उपसदः सुत्याश्च ॥ १ ॥

(१)इदानीमहान्याह—

**गवामयनेनेयुः ॥ २ ॥**

गवामयनेन गच्छेयुः। गवामयनमेव कर्तव्यमित्यर्थः ॥ २ ॥

**अग्निष्टोमेन(२) वा ॥ ३ ॥**

ईयुः। अपूर्वश्चायमग्निष्टोमो नैकाहिको न द्वादशाहिकः, संस्थानमात्रोपदेशात् ॥ ३ ॥

**सर्वजिदभिजिद्विश्वजितां वैकैकेन(३) ॥ ४ ॥**

सर्वजिदादय एकाहाः ॥ ४ ॥

**त्रिकद्रुकैर्वा ॥ ५ ॥**

एतेऽप्येकाहा एव ॥ ५ ॥

**(४)महातापश्चितं त्रिसंवत्सरोपसत्कम् ॥ ६ ॥**

भवति ॥ ६ ॥

**तुल्यमन्यत्(५) ॥ ७ ॥**

तापश्चितेनैव ॥ ७ ॥

**क्षुल्लकतापश्चिते चतुर्मासशो दीक्षोपसत्सुत्यानि ॥ ८ ॥**

भवन्ति(६) ॥ ८ ॥

**(७)विषुवन्तमभितो गवामयनपक्षयोः प्रथमोत्तमौ प्रथमोत्तमौ(८) ॥ ९ ॥**

---

(१) अत्र सुत्या आह इति देवयाज्ञिकः।

(२) अग्निष्टोमसंस्थेन ज्योतिष्टोमेन पूरणं कर्तव्यम्।

(३) सर्वजिदादित्रयाणां मध्ये एकैकेन पूरणं कर्तव्यम्।

(४) 'महातापश्चितम्' सत्रनाम। तत्र त्रयः संवत्सरा उपसदो यत्र तादृशं भवति।

(५) अन्यत्सर्वं प्रागुक्तेन तापश्चितेन तुल्यं समानं भवतीत्यर्थः।

(६) 'क्षुल्लकतापश्चितम्' सत्रनाम। इदमतिलघु। चतुर्भिर्मासैर्दीक्षोपसत्सुत्या भवन्ति।

(७) तत्राहान्याह—

(८) विषुवतः पुरस्तादुपरिष्टात् गवामयनस्य पूर्वोत्तरयोः पक्षयोः

मासौ भवतः ॥ ९ ॥

**सहस्रसाध्यमग्नेः ॥ १० ॥**

(१)सहस्रसाध्यं नामाग्नेः सत्रम् ॥ १० ॥

**अभिप्लवानां चतुःषष्टं शतं चतुरहश्च(२) ॥ ११ ॥**

**त्रिषंवत्सरं षष्टिदीक्षम् ॥ १२ ॥**

त्रिसंवत्सरं सत्रम्। तच्च षष्टिदीक्षं भवति ॥ १२ ॥

**यथाशक्ति वा ॥ १३ ॥**

दीक्षा भवन्ति ॥ १३ ॥

**आदितस्त्रयः संवत्सराः सौत्याः(३) ॥ १४ ॥**

गवामयनादयो भवन्ति ॥ १४ ॥

**महासत्राण्यतः ॥ १५ ॥**

अतः परं महासत्राणि व्याख्यायन्ते। महासत्रग्रहणं तुल्यधर्मप्रज्ञप्त्यर्थम् ॥ १५ ॥

**चतुर्भागं चतुर्भागमेकैकस्य ज्यौतिष्टोमिकैः स्तोमैः ॥१६॥**

(४)नयेयुः ॥ १६ ॥

**तेष्वतिरात्रविषुवन्तः स्युर्वा न वा ॥ १७ ॥**

---

प्रथमोत्तमौ मासौ। पूर्वं पूर्वपक्षस्य प्रथमषष्ठौ मासौ विषुवत उत्तरमुत्तरपक्षस्य प्रथमषष्ठौ। ततश्च—प्रायणीयः १,चतुर्विंशमहः २,चत्वारोऽभिप्लवाः ३-२६, पृष्ठ्यः षडहः २७-३२। एवं प्रथमो मासः। त्रयोऽभिप्लवाः १-१८, पृष्ठ्यः १९-२४, अभिजिदग्निष्टोमः २५, त्रयः स्वरसामानः २६-२८। एवं द्वितीयो मासः विषुवान्। त्रयः स्वरसामानः १-३, विश्वजित् ४, पृष्ठ्यः प्रतिलोमः ५-१०, त्रयोऽभिप्लवाः ११-२८, एवं तृतीयो मासः। त्रयोऽभिप्लवाः १-१८,गो आयुषी १९-२०, दशरात्रः २१-३०, महाव्रतम् ३१, उदयनीयः ३२ इति चतुर्थो मासः।

( १ ) सहस्रसुत्यम्।

( २ ) प्रायणीयः १, त्रिकद्रुकाः २-४, चतुः षष्ठं शतमभिप्लवाः ५-९८८, दशरात्रः ९८९-९९८, महाव्रतम् ९९९, उदयनीयः १०००।

( ३ ) अस्मिन्सत्रे आदितः प्रथमाद्गवामयनादारभ्य त्रयः संवत्सराः सौत्याः सुत्याहानि भवन्ति इत्यर्थः।

( ४ ) एकैकस्य द्वादशसंवत्सरादेर्महासत्रस्य चतुर्थं भागं ज्योतिष्टोमिकैः त्रिवृत्पञ्चदशसप्तदशैकविंशैः स्तोमैः पूरयेयुः।

तेषु महासत्रेषु अतिरात्रविषुवन्तो भवेयुर्वा न वा भवेयुः । भवेयुरिति । कुत एतत् ? प्रतिसंवत्सरमादिमध्यावसानेष्वतिरात्रविषुवतां दृष्टत्वाद्भवेयुरिति गम्यते । यद्येवं न भवेयुः । कथम् ? सत्रसंयोगेन ह्यतिरात्रश्रवणात् । "उभयतोऽतिरात्रꣳ सत्रम्"( का० श्रौ० १२-१-७ ) इति । न सम्वत्सरसंयोगेन । अतो न प्रतिसम्वत्सरमतिरात्रौ(१) ॥१७॥

एवं सत्युपसंहरत्याचार्यः—

## आद्यन्तयोर्वातिरात्रौ विषुवांश्च मध्ये मध्ये ॥ १८ ॥

'वा'शब्दोऽवधारणार्थः । आद्यन्तयोरेवातिरात्रौ भवतः सत्रस्यैकत्वात् । विषुवांश्च प्रतिसंवत्सरं मध्ये मध्ये, संवत्सरसंयोगेन तस्य श्रुतत्वात् ॥ १८ ॥

## (२)द्वादशसंवत्सरं प्रजापतेः ॥ १९ ॥

प्रजापतिसत्रमिति संज्ञा ॥ १९ ॥

## (३)षट्त्रिꣳशत्संवत्सरꣳ शाक्यानां तरसमयाः पुरोडाशाः ॥ २० ॥

शाक्यानामयनमिति सत्रस्य सञ्ज्ञा । तत्षट्त्रिंशत्संवत्सरं भवति । तत्र तरसमयाः पुरोडाशा भवन्ति । मांसमया इत्यर्थः ॥ २० ॥

## (४)सर्वत्राविशेषात् ॥ २१ ॥

सर्वत्र सत्रे तरसमयाः पुरोडाशा भवन्ति । अविशेषश्रुतेः ॥ २१ ॥

## (५)सवनीया वा बहुश्रुतेः ॥ २२ ॥

'वा'शब्दः पक्षव्यावृत्तौ । सवनीया एव तरसमया भवन्ति । कुत एतत् ? बहुत्वश्रुतेः "तरसमयाः पुरोडाशा भवन्ति" इति । बहुत्वप्रयुक्तानां हि तरसविधानम् ॥ २२ ॥

---

( १ ) प्रायणीयोदयनीयौ ।

( २ ) द्वादशसंवत्सरं सुत्या भवन्ति ।

( ३ ) षट्त्रिंशत्संवत्सरसुत्यम् ।

( ४ ) अत्र सर्वत्र दीक्षणीयातिथ्यापशुपुरोडाशसवनीयादयः पुरोडाशास्तरसमया मांसमया भवन्ति । तथा हि संस्थितेऽहनि मृगपतिर्मृगयां याति स तत्र यान्मृगान्हन्ति तेषां तरसाः सवनीयाः पुरोडाशा भवन्ति ।

( ५ ) सवनीया एव तरसमयाः न सर्वत्र । 'पुरोडाशा' इति बहुत्वश्रवणात् । अत्र मांसस्य पेषणकाले "धान्यमसि०" ( वा० सं० १-२० ) इत्यत्र मन्त्रे 'तरसमसि' इत्येवमूहः कार्यः न तु 'मृगोऽसि' इति ।

शतसंवत्सरः साध्यानाम् ॥ २३ ॥

साध्यानामयनं सत्रम् । तच्छतसंवत्सरं भवति ॥ २३ ॥

(१)सहस्रसंवत्सरं विश्वसृजाम् ॥ २४ ॥

'विश्वसृजामयनम्' इति सत्रस्य संज्ञा । तत्सहस्रसंवत्सरं भवति ॥ २४ ॥

(२)यात्सत्राणि सारस्वतानि ॥ २५ ॥

(३)यात्वा यात्वा क्रियन्त इति यात्सत्राणीत्येके । तदनुपपन्नम्, गमनस्य स्वशब्दाभिहितत्वात् । तस्मात् यात्सत्राणि सारस्वतसत्राणीत्युभे अपि च संज्ञे एते ॥ २५ ॥

(४)सदोहविर्धानाग्नीध्राणि चक्रीवन्ति ॥ २६ ॥

भवन्ति । अन्यथा गमनासम्भवात् ॥ २६ ॥

(५)उलूखलबुध्नो यूपः (६)प्रकृष्यः ॥ २७ ॥

उलूखलमिव बुध्नो यूपस्य भवति । स च प्रकृष्यते न निखन्यते॥२७॥

वत्सतरीशतमृषभाधिकं गर्भिणीनामुत्सृजन्ति सहस्रपूरणाय(७) ॥ २८ ॥

सहस्रपूरणेन हि सत्रस्य परिसमाप्तिः ॥ २८ ॥

---

( १ ) अत्र संवत्सरशब्दोऽसम्भवाद्गौण्या वृत्त्याऽहर्लक्षक इति प्रागुक्तम् "अहा वा शक्यत्वात्" ( का० श्रौ० १-६-२५ ) इत्यत्र । तेन सहस्रसुत्यमेतत्सत्रं भवति इति देवयाज्ञिकाः ।

( २ ) अथ त्रीणि सारस्वतसत्राणि क्रमेणाह—

( ३ ) यान्ति च तानि सत्राणि च यात्सत्राणि इति वा ।

( ४ ) एतच्च पत्नीशालाया अप्युपलक्षणम् ।

( ५ ) उलूखलस्येव बुध्नं यस्यासौ उलूखलबुध्नः स्थिरासन इत्यर्थः ।

( ६ ) प्रकृष्यो देशान्तरनयने प्रकर्षणीयः भूमिसंलग्न एव प्रेरणीयः न तूत्पाट्य नेय इत्यर्थः ।

( ७ ) ऋषभेणाधिकं गर्भिणीनां वत्सतरीणां शतं सहस्रपूरणायारण्ये उत्सृजन्ति । वत्सभावादुत्तीर्णा वत्सतर्यः । अल्पं तासां वत्सत्वं बहुतासां गोत्वम् "वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे" (पा० सू० ५-३-९१) इति ष्टरच् ङीष् तेन प्रथमगर्भाणामिति सिद्धम् । सहस्रपूरणायेति याः स्त्रियः तासां मातरो न दोग्धव्याः । एवं वर्धमानाः क्षिप्रं सहस्रं सम्पद्यन्ते ।

(१)उपकिरन्त्युपरवस्थानेषु न खनन्ति ॥ २९ ॥

उपाकिरणं च मृदः ॥ २९ ॥

शुक्लपक्षसप्तम्यां दीक्षा सरस्वतीविनशने ॥ ३० ॥

(२)सरस्वतीविनशनप्रदेशे ॥ ३० ॥

द्वादशाहवद्दीक्षोपसदः ॥ ३१ ॥

अत्रैकाहिकान्यहानि तत्र द्वादशाहवदप्राप्तौ सत्यां द्वादशाहवदित्युच्यते ॥ ३१ ॥

अषोडशिकावतिरात्रौ ॥ ३२ ॥

भवतः ॥ ३२ ॥

तत्रैव प्रायणीयोऽतिरात्रः ॥ ३३ ॥

भवति । सरस्वतीविनशने ॥ ३३ ॥

सान्नाय्यश्च नास्मिन् ॥ ३४ ॥

"पक्षादौ यद्यद्विहितत्सर्वस्मिन्" "सारस्वते च प्रथमे" ( का० श्रौ० २४-४-२८, २९ ) इत्युक्तम्, तेन सान्नाय्यमत्र प्राप्नोति । अत उच्यते सान्नाय्यं च नास्मिन्निति ॥ ३४ ॥

स्थितेऽध्वर्युराहवनीयसमीपे स्थित्वाऽध्यध्वं(३) शम्यां प्रास्यति तद्गार्हपत्यस्थानम् ॥ ३५ ॥

यथोक्तमाहवनीयस्य(४) ॥ ३६ ॥

इति चतुर्विंशेऽध्याये पञ्चमी कण्डिका ।

यथास्थितं यज्ञाङ्गानि हरन्ति ॥ १ ॥

---

( १ ) उपरवानुपकिरन्ति न खनन्ति आलेखनमात्रमेव कुर्वन्ति ।

( २ ) चैत्रस्य शुक्लपक्षे सप्तम्यां तिथौ सरस्वतीविनशने सरस्वती समुद्रसङ्गमे प्रभासे इतिदेवः । यत्र सरस्वत्यन्तर्भवति तद्विनशनमित्युच्यते, अतिरात्रस्य द्वितीयायां समाप्तत्वात् ( लाट्या० १०-१५-१ ) इत्यग्निस्वामिनः । सरस्वती नाम महानदी प्रत्यक्स्रोता प्रवहति तस्याः प्रागपरौ भागौ सर्वलोकप्रत्यक्षौ मध्यमस्तु भागो भूम्यामन्तर्निमग्नः प्रवहति, नासौ केनापिदृश्यते तद्विनशनमिति माधवाचार्या धन्विभाष्यकाराश्च । यत्र सरस्वत्यन्तर्हिता तद्विनशनमिति जयस्वामिनः ।

( ३ ) अध्यध्वं मार्गाभिमुखम् ।

( ४ ) आहवनीयस्योत्तरवेदिकस्य स्थानं यथा ( का० श्रौ० ८-३-७, ८ ) प्रकृतावुक्तं तथैव भवति ।

येषु स्थानेषु स्थितानि (१)तत्समवेतान्येव हरन्ति ॥ १ ॥

पाꣳसूनादाय भौमानां यथादेशं निवपन्ति(२) ॥२॥

भौमानामङ्गानां पांसून्गृहीत्वा यथाप्रदेशं न्युप्यम् ॥ २ ॥

यजनीययोरन्होर्गोआयुषी(३) ॥ ३ ॥

भवतः ॥ ३ ॥

पर्वान्तरेषु दर्शपूर्णमासौ ॥ ४ ॥

प्रथमे पर्वान्तरे दर्शः । द्वितीये पौर्णमासम् । एवं व्यत्यासेन(४)॥४॥

शम्याप्रासे शम्याप्रासे वसन्तो यजमानाश्च यान्ति दक्षिणेन तीरेण ॥ ५ ॥

शम्याप्रास उषित्वा यागं कृत्वा ततो यन्ति दक्षिणेन तीरेण सरस्वत्याः(५) ॥ ५ ॥

दृषद्वत्यप्ययेऽपोनाप्त्रियश्चरुः(६) ॥ ६ ॥

दृषद्वत्यप्यये प्रदेशे चरुर्भवति ॥ ६ ॥

अग्नये कामायेष्टिः (७)प्लक्षे प्रास्रवणे ॥ ७ ॥

प्लक्षे प्रास्रवणप्रदेशे अग्नये कामायेष्टिर्भवति ॥ ७ ॥

---

(१) शालासदोहविर्धानाग्नीध्रीयादीनि ।

(२) भौमानां भूमिमयानां यज्ञाङ्गानां वेदिखरधिष्ण्योत्तरवेदीनां पांसून्पात्रान्तरेणादाय देवयजनान्तरे वेदिमध्ये तूष्णीं पांसून् निवपन्ति ।

(३) यजनीययोरह्नोः प्रतिपदोरुभयोः यथाक्रमं गोआयुषी भवतः । तावुभावुक्थ्यसंस्थौ । गौरुक्थ्यः पौर्णमास्यां अमावास्यायामायुरुक्थ्य इति ।

(४) अत्राग्न्यन्वाधानवर्जं पत्नीसंयाजान्तं तन्त्रमिति माधवाचार्यः।

(५) इष्ट्यनन्तरमेव देशान्तरं गत्वा तत्र वासः । प्रातरिष्ट्यन्ते पुनः शम्याप्रासनादि । इह सत्रे पर्वसु चन्द्रप्रमाणा एव मासाः स्युः न त्रिंशिनः सावना इति ।

(६) दृषद्वत्यप्यये सरस्वतीदृषद्वत्योः सङ्गमे एवं दक्षिणेन तीरेण प्रतिदिनं शम्याप्रासे वसतां यदा सरस्वतीदृषद्वत्योः सङ्गम आयाति तदा अपोनप्त्रियश्चरुर्भवति । अपांनपाद्देवताकः जलातिक्रमदोषपरिहारार्थम् ।

(७) प्लक्षे प्रास्रवणे सरस्वत्या उत्पत्तिस्थाने । "चतुश्चत्वारिंशदाश्विनानि सरस्वत्या विनशनात्प्लक्षः प्रास्रवणः" ( ताण्ड्य० २५-१० ) इति वचनात् ।

(१)तस्यामश्वपुरुष्यौ धेनुके दद्युः ॥ ८ ॥

इष्यते अश्वपुरुष्योर्दानं धेनुत्वे सति तदुपकाराभावात्तत्प्रसूतेश्च दानम्। दानं च प्रासर्पकेभ्यः ॥ ८ ॥

अवशिष्टं चैके यज्ञोपकरणमुदयनीयान्ते(२) ॥९॥

यदवशिष्टं यज्ञोपकरणं तदुदयनीयान्ते ददाति। सत्रसमाप्ता-वित्यर्थः ॥ ९ ॥

अवभृथमभ्यवयन्ति यमुनां कारपचवं प्रति(३) ॥१०॥

कारपचवप्रदेशं प्रति यमुनामवभृथमभ्यवयन्ति। अनेन चाव-भृथग्रहणेन सत्रसमाप्तिर्लक्ष्यते ॥ १० ॥

पुरस्ताद्वावभृथादग्नये कामाय(४) ॥ ११ ॥

इष्टिर्भवति ॥ ११ ॥

उदवसानीयान्ते वा(५) ॥ १२ ॥

'वा' इति विकल्पः ॥ १२ ॥

यथार्थं विप्रव्रजेयुः(६) ॥ १३ ॥

अपृष्ठशमनानि सारस्वतानि(७) ॥ १४ ॥

अपृष्ठशमनानि हि सारस्वतसत्राणि श्रूयन्ते ॥ १४ ॥

त्रीण्येषां साभ्युत्थानान्यतिरात्रैः ॥ १५ ॥

---

(१) अश्वपुरुष्यौ अश्वां वडवां पुरुषीं मानुषीं स्त्रियं च ते उभे धेनुके प्रत्यग्रप्रसूते सापत्ये दद्युः। दानं चात्र प्रासर्पकाणां मध्ये कस्मैचिद्गुणवते।

(२) अवभृथानन्तरमुदयनीयासंज्ञिकेष्टिर्भवति तस्या अन्ते। एके यज्ञोपकरणं घृतधान्यसुवर्णद्रव्यादिकं गुणवते दद्युः।

(३) कारपचवो देशविशेषः। तन्मध्ये यमुना वर्तते। तां कारपचवदेशस्थां यमुनां प्राप्य तत्रावभृथमभ्यवयन्ति।

(४) इष्टेः ( का०श्रौ० २४-६-७ ) कालान्तरविधानम्।

(५) इष्टिर्भवतीत्यध्याहारः।

(६) इदं सत्रं समाप्तं अतो यजमानाः स्वस्वकार्यार्थं गच्छेयुः।

(७) पृष्ठशमनीयवर्जितानि सारस्वतसत्राणि भवन्ति। पृष्ठशमनीय पशु न भवतीत्यर्थः। सत्राङ्गं हि सः ( का० श्रौ० १३-३-३४ ) अतोऽत्रापि प्राप्नोति। अत्र प्रतिषेधादन्येषु सत्रेषु सत्रान्ते नियमेनायं भवतीति प्रतीयते।

एषां सारस्वतसत्राणां मध्ये साम्युत्थानानि त्रीणि भवन्ति ॥१५॥

**सहस्रपूरणगृहपतिमरणसर्वज्यान्यः(१) ॥ १६ ॥**

प्रथमं साम्युत्थानं गवां सहस्रपूरणे। द्वितीयं गृहपतिमरणे। तृतीयं सर्वज्यान्याम्। सर्वज्यानिश्च सर्वहानिरुच्यते ॥ १६ ॥

**सहस्रपूरणे गौः ॥ १७ ॥**

(२) गौरतिरात्रो भवति ॥ १७ ॥

**तदेव दत्त्वा(३) ॥ १८ ॥**

तदेव सहस्रं दत्त्वा साम्युत्तिष्ठेरन् ॥ १८ ॥

**आयुर्गृहपतिमरणे ॥ १९ ॥**

अतिरात्रो भवति ॥ १९ ॥

**सर्वज्यान्यां विश्वजित् ॥ २० ॥**

अतिरात्रः कर्तव्यः(४) ॥ २० ॥

**ज्योतिष्टोमो (५)वा सर्वेषाम् ॥ २१ ॥**

भवति ॥ २१ ॥

**नावभृथः सरस्वत्याम् ॥ २२ ॥**

(६)सरस्वत्यामवभृथं न भवति ॥ २२ ॥

---

(१) पूर्वं सत्रारम्भकाले यद्वत्सतरीणां गर्भिणीनां शतमृषभेणाधिकं सहस्रपूरणार्थमुत्सृष्टमभूत् (का० श्रौ० २४-५-१८) तत्र यदा तासां तत्प्रसूतानां च प्रसवैः गवां सहस्रस्य पूरणं भवति, यदा गृहपतेर्मरणं भवति, यदा सर्वासां गवां हानिः सर्वज्यानिर्भवति। एतानि त्रीणि एषां दीक्षितानां साम्युत्थानानि अर्धसमाप्तसत्रपरित्यागकारणानि। तत्रातिरात्रैर्वक्ष्यमाणैर्गवादिभिरिष्ट्वा साम्युत्थानं कुर्युः। प्लक्षप्रास्रवणात्प्रागेव, समापनं कुर्युः।

(२) सहस्रपूरणे सति यदा साम्युत्थानं क्रियते तदा।

(३) गवि अतिरात्रे गवां सहस्रं दत्त्वा साम्युत्तिष्ठेयुरित्यर्थः।

(४) अत्र तासामेव गवामधिकारः। तासामेव सहस्रसम्पत्त्यर्थमुत्सृष्टानां हानौ साम्युत्थानेऽधिकारो भवति न द्रव्यान्तरस्य हानौ। कुतः? प्रकरणभूतत्वात्।

(५) अथवा सर्वेषां गवादीनां स्थाने ज्योतिष्टोमातिरात्र एवोदयनीयो भवति।

(६) साम्युत्थाने सति।

**परिपार्श्वेषूदकेषु(१) ॥ २३ ॥**

कर्तव्यः ॥ २३ ॥

**असत्सूद्धृत्य ततः ॥ २४ ॥**

यदि नाम न सन्ति ततः सरस्वत्या एवोदकमुद्धृत्यावभृथः कार्यः ॥ २४ ॥

**(२)द्वितीये दृतिवातवतोरयनस्याहनी त्रिवृत्पञ्चदशस्तोमे पर्वान्तरेषु व्यत्यासम्(३) ॥ २५ ॥**

द्वितीये सारस्वते सत्रे दृतिवातवतोरयनस्य ये त्रिवृत्पञ्चदशस्तोमे अहनी, ते पर्वान्तरेषु व्यत्यासेन क्रियेते ॥ २५ ॥

**तयोश्चेदसमाप्तयोरागच्छेद्यजनीयकालस्तमुपेत्य शेषमनुसमापयेयुः(४) ॥ २६ ॥**

तयोस्त्रिवृत्पञ्चदशस्तोमयोरसमाप्तयोर्यद्यागच्छेद्यजनीयकालस्तं यजनीयकालीनं परिसमाप्य शेषं परिसमापयेयुः ॥ २६ ॥

**शुक्लपक्षश्चेत्त्रिवृदग्निष्टोम इत्येके(५) ॥ २७ ॥**

एके शेषपरिसमाप्तिमिच्छन्ति ॥ २७ ॥

---

(१) यदि सरस्वत्यामवभृथकरणप्रतिषेधस्तदा सरस्वतीपरिपार्श्ववर्तिषु नदीतडागादिषु अवभृथं कुर्युरित्यर्थः।

(२) एवमेकं सारस्वतं सत्रमुक्त्वा अथ द्वितीयमुच्यते।

(३) द्वितीये सारस्वतसत्रे पौर्णमास्यमावास्ययोरन्तराले शम्याप्रासे दर्शपूर्णमासयोः स्थाने दृतिवातवतोरयनस्य सम्बन्धिनी त्रिवृत्पञ्चदशस्तोमे अहनी व्यत्यासं भवतः। एकस्मिन्दिने त्रिवृत्, द्वितीये पञ्चदशः, तृतीये त्रिवृत्, चतुर्थे पञ्चदशः। 'त्रिवृत्' अग्निष्टोमसंस्थः। 'पञ्चदश' उक्थ्यसंस्थः।

(४) यदा तिथिक्षयवृद्धिवशादेकस्मिन्पक्षे समप्रयोगो न सिद्ध्यति। त्रिवृत्पञ्चदशस्तोमयोरसमाप्तयोर्यदि यजनीयकाल आगच्छेत् त्रिवृति कृते पञ्चदशे अकृते इत्यर्थः। तदा तं यजनीयकालीनं गामायुर्वा उपेत्य शेषं समापयेयुः, तत आरभ्याग्रिमपक्षमुपक्रमेयुरित्यर्थः।

(५) पर्वान्तरेषु व्यत्यासेन त्रिवृत्पञ्चदशयोरनुष्ठानपक्षात्पक्षान्तरमाह। यदि शुक्लपक्षस्तदा सकलेऽपि तस्मिन् त्रिवृदग्निष्टोमः केवलः कार्यः, कृष्णपक्षे सकलेऽपि पञ्चदश उक्थ्यः केवलः कार्य इति देवयाज्ञिकाः।

**पञ्चदशाउक्थ्यः कृष्णे ॥ १८ ॥**

'भवति' इत्येके ॥ २८ ॥

**(१)तृतीये यजनीययोरह्नोरभिजिद्विश्वजितौ ॥२९॥**

(२)भवतः ॥ २९ ॥

**(३)पर्वान्तरेषु त्रिकद्रुकाः ॥ ३० ॥**

भवन्ति ॥ ३० ॥

**पूर्ववदनुसमापनम्(४) ॥ ३१ ॥**

भवति ॥ ३१ ॥

**दार्षद्वतमृत्विगाचार्ययोरन्यतरस्य गा रक्षे-त्संवत्सरम् ॥ ३२ ॥**

'दार्षद्वतम्' इति सत्रनामधेयम् । तत्र कर्मव्याख्यायते । ऋत्विगा-चार्ययोरन्यतरस्य गारक्षेत्संवत्सर गवा रक्षणम् (५) ॥ ३२ ॥

**अपरं व्यर्णे नैतन्धवेऽग्निमिन्धीत(६) ॥ ३३ ॥**

अपरं संवत्सरं नैतन्धवप्रदेशे विगतोदकेऽग्नीन्धनं कुर्यात् ॥३३॥

**(७)कुरुक्षेत्रे परिणहि स्थलेऽग्न्याधेयमन्वारम्भणी-यान्तं भवति ॥ ३४ ॥**

---

( १ ) अथ तृतीयं सारस्वतमाह—

( २ ) यजनीययोरह्नोः गोआयुषोः स्थाने ।

( ३ ) पौर्णमास्यमावास्ययोरन्तरालेषु शम्याप्रासे दर्शपूर्णमासयोः स्थाने त्रिकद्रुकाः उभयोः पक्षयोर्भवन्ति ।

( ४ ) अत्रापि तिथिवृद्धिक्षयवशात्त्रिकद्रुकेष्वसमाप्तेषु यजनीयकाल आगच्छेत् तदा पूर्ववदनुसमापनं कर्तव्यम् । त्रिकद्रुकशेषेणोत्तरपक्षे उप-क्रमः प्रारम्भः कार्य इति देवयाज्ञिकाः ।

( ५ ) अरण्ये तृणाद्याशयितुं पालयेत् ।

( ६ ) अपरं द्वितीयं संवत्सरं व्यर्णं विगतोदके नैतन्धवे सरस्वत्यां वर्तमाने ह्रदे अग्निं लौकिकं काष्ठादिभिरिन्धीत । सरस्वत्यास्तीरे नैत-न्धवा नामार्माः पुराणा ग्रामाः सन्ति । तथा च मन्त्रान्तरम्—"येषामिमे पूर्वे अर्मास आसन्नयूपाः सद्मविभृताः पुरूणि" (द्राह्या० ३१-३) इति ।

( ७ ) ततस्तृतीये संवत्सरे परीणन्नामस्थले अग्न्याधेयमन्वार-म्भणीयान्तं भवतीत्यर्थः ।

अन्वारम्भणीयान्तामिति। कुत एतत्? इष्ट्यङ्गत्वादन्वारम्भणीयायाः ॥ ३४ ॥

दर्शपूर्णमासान्तं वा ॥ ३५ ॥

'वा' शब्दः पक्षव्यावृत्तौ। दर्शपूर्णमासान्तमेव भवति नान्वारम्भणीयान्तम्। दर्शपूर्णमासस्य हीष्ट्यन्तरे प्रवृत्तिर्न्याय्येति ॥३५॥

आहिताग्निश्चेद्दृष्यर्णेऽग्निहोत्रमेव जुहुयात्(१) ॥३६॥

संवत्सरम् ॥ ३६ ॥

पुरोडाशोऽग्नये तेन यजमानः पूर्ववत्(२) ॥ ३७ ॥

तेन यागं कुर्वन् पूर्ववच्छम्याप्रासे दृषद्वतीतीरेण दक्षिणेन गच्छेत्॥३७॥

एत्य च दृषद्वतीतीरेण ॥ ३८ ॥

तद्वदेव ॥ ३८ ॥

(३)अवभृथमभ्यवयन्ति (४)यमुनां त्रिप्लक्षावहरणं प्रति ॥ ३९ ॥

त्रिप्लक्षावहरणस्यार्जव्येन यमुनामवभृथमभ्युपैति ॥ ३९ ॥

तत्र च—

स्वयमेव सामगानम्(५) ॥ ४० ॥

भवति ॥ ४० ॥

(६) आप्लवनमात्रं वा ॥ ४१ ॥

भवति,नावभृथः। 'वा' शब्दो विकल्पार्थः ॥ ४१ ॥

---

(१) पूर्वमेवचेत् कृतश्रौताग्न्याधानः, तस्यान्यत्प्रागुक्तमग्नीन्धनं वार्यते गोरक्षणं तु भवत्येवेति।

(२) अग्नयेऽष्टाकपालः पुरोडाशः प्रत्यहं भवति, तेन पुरोडाशेनेत्यर्थः। 'पूर्ववत्' इति शम्याप्रासे २ वसन्यजमानः दृषद्वत्या दक्षिणेन तीरेणेत्येता वल्लभ्यते।

(३) तस्या उत्पत्तिस्थानमागत्य।

(४) यमुनां प्राप्य त्रिप्लक्षावहरणे देशे अवभृथमभ्यवयन्ति। त्रिप्लक्षाभिधे जनपदे यमुनायामवभृथं कुर्वन्तीत्यर्थः। तत्रैव हि देशे दृषद्वती मनुष्येभ्यस्तिरोभवति, बहूदकापि सती तत्रैवान्तर्हिता भवतीत्यर्थः। अत्र दार्षद्वतावभृथे।

(५) यजमानः करोति, प्रस्तोतुरभावात्।

(६) स्नानमात्रं भवति, नत्ववभृथेष्ट्यादिकं किञ्चित्।

उदेत्यैतयैवेष्ट्या (१)यजेत ॥ ४२ ॥

परिसमाप्य सत्रमेतयैवेष्ट्या यजेत ॥ ४२ ॥

पशुना वा तद्देवतेन ॥ ४३ ॥

यजेत ॥ ४३ ॥

अग्निष्टोमेन वा ॥ ४४ ॥

'यजेत' इति ॥ ४४ ॥

इति चतुर्विंशेऽध्याये षष्ठी कण्डिका ।

तुरायणं वैशाखिशुक्लस्य पञ्चम्याम् ॥ १ ॥

'तुरायणम्' इति सत्रनाम ॥ १ ॥

चैत्रस्य वा ॥ २ ॥

शुक्लपञ्चम्यां भवति ॥ २ ॥

प्रातराहुत्यन्तेऽदीक्षितो दीक्षारूपाण्यासजते तूष्णीं कृष्णाजिनादीनि ॥ ३ ॥

स्वयमेव ॥ ३ ॥

हवीꣳषि निर्वपत्याग्नेयमैन्द्रं वैश्वदेवं चरुꣳ सवनकालेष्वेकैकम्(२) ॥ ४ ॥

कुत एतत् ? आग्नेयं प्रातस्सवनम् , ऐन्द्रं माध्यन्दिनम् , वैश्वदेवं तृतीयसवनमित्यर्थवादात् ॥ ४ ॥

तन्त्रेण वा ॥ ५ ॥

'वा' शब्दः पक्षव्यावृत्तौ । तन्त्रेण वा करोति न सवनकालेषु । कुत एतत् ? कालैक्यात् । तस्मात् तन्त्रेणैव ॥ ५ ॥

अन्वहम्(३) ॥ ६ ॥

हवीꣳषि निर्वपति ॥ ६ ॥

वा हविःशेषभक्षः(४)॥ ७ ॥

'वा' प्राकृताशनः ॥ ७ ॥

---

(१) अवभृथादागत्य एतयैवाग्नेय्या इष्ट्या यजेत ।

(२) प्रातर्माध्यन्दिनापराह्णेषु एकैकं हविर्निर्वपति ।

(३) प्रत्यहमेकैकं वा हविर्निर्वपति ।

(४) अत्र तुरायणे यजमानो हविःशेषभक्षो भवति । कर्तृत्वाविशेषात्पत्न्यपि ।

संवत्सरं यजते(१) ॥ ८ ॥

अत्राधस्तनसूत्रे वा शब्दमन्यथा वर्णयन्ति । संवत्सरं यजनीयेषु यागपरिसमाप्तौ सत्यामन्वहं वेत्युच्यते । ततश्चावधारणैषा । संवत्सरशब्देन हि सर्वाण्यहानि गृह्यन्ते न यजनीयान्येव, तत्रैव प्रयोगदर्शनात् ॥ ८ ॥

अनियतोदकं दार्षद्वतवदवभृथादि(२) ॥ ९ ॥

अनियतोदकोऽवभृथः कार्यः । आदिग्रहणाच्च "उदेत्यैतयैवेष्ट्या यजेत"( का० श्रौ० २४–६–४२ ) इत्येवमादि लभ्यते ॥ ९ ॥

द्वादशाहाविकल्पाः ॥ १० ॥

'व्याख्यायन्ते' इति सूत्रशेषः ॥ १० ॥

सर्वाग्निष्टोमो भरतद्वादशाहः(३) ॥ ११ ॥

भरतद्वादशाहे सर्व एवाग्निष्टोमा भवन्ति, प्रायणीयोदयनीयवर्जम्॥११॥

सङ्क्रमद्वादशाहे दशरात्रस्य त्र्यहप्रथमानि प्रथमस्त्र्यहस्त्र्यहद्वितीयानि द्वितीयस्त्र्यहस्त्र्यहतृतीयानि तृतीयस्त्र्यहः(४) ॥ १२ ॥

भवति ॥ १२ ॥

---

( १ ) एवमुक्तप्रकारेण संवत्सरं यजते वर्षपूर्तिपर्यन्तमेतत्प्रत्यहं करोतीत्यर्थः ।

( २ ) "स्वयमेव सामगानम्" "आप्लवनमात्रं वा" "उदेत्यैतयैवेष्ट्या यजेत" ( का० श्रौ० २४–६–४०,४१, ४२ ) इत्येतावदतिदिश्यते । तद्वदेव त्रिप्लक्षावहरणं प्रति यमुनायां नियमेनावभृथे प्राप्ते 'अनियतोदकम्' इत्युच्यते । अत्रावभृथे उदकनियमो न भवतीत्यर्थः ।

( ३ ) दशरात्रस्य स्थाने दशाप्यग्निष्टोमा भवन्ति आद्यन्तयोरतिरात्रावेव ।

( ४ ) संक्रमद्वादशाहे द्वादशाहिकस्य दशरात्रस्य दशमवर्जितानि नवाहानि त्रेधा विभज्य त्रयस्त्र्यहाः कर्तव्याः । तेषां त्रयाणां त्र्यहाणां यानि प्रथमान्यहानि तैरत्र प्रथमस्त्र्यहो भवति । तेन प्रथमे त्र्यहे पृष्ठ्यस्य प्रथमं चतुर्थं छन्दोमानां प्रथमं चेति सिद्धम् । यानि द्वितीयान्यहानि तैरत्र द्वितीयस्त्र्यहो भवति । तेन पृष्ठ्यस्य द्वितीयं पञ्चमं छन्दोमानां द्वितीयं चेति सिद्धम् । यानि तु तृतीयान्यहानि तैरत्र तृतीयस्त्र्यहः । तेन पृष्ठ्यस्य तृतीयं षष्ठं च छन्दोमानां तृतीयं चेति सिद्धम् ।

प्रकृत्या दशमम्(१) ॥ १३ ॥

अविकृतरूपमेव दशमं भवति ॥ १३ ॥

आग्निष्टुादिन्द्रस्तुत्सूर्यस्तुद्वैश्वदेवस्तुतां वैकैकेन(२) ॥ १४॥

दशरात्रस्य पूरणम् ॥ १४ ॥

(३)त्रिकद्रुकैर्वा ॥ १५ ॥

(४)अहीनैकाहानां वैकैकेन ॥ १६ ॥

असोर्यामराजसूयवर्जम्(५) ॥ १७ ॥

गोआयुर्भ्यां वा(६) ॥ १८ ॥

सर्व एवैते विकल्पाः ॥ १८ ॥

अभ्यासानुपपत्तौ ज्योतिष्टोमः पूरणः(७) ॥ १९ ॥

भवति । तच्चैतद्गुणपक्ष एव सम्भवति नैकाहपक्षे ॥ १९ ॥

यथोक्तस्य स्तोत्रꣳ स्तोत्रियं वर्चं वा साम वा यजुर्वाऽह-
र्वान्यत्कृत्वा यजेत ॥ २० ॥

सर्वे चैते शास्त्रार्थप्रकाराः (८) ॥ २० ॥

---

( १ ) अविवाक्यमेवेत्यर्थः । अत्रातिग्राह्यग्रहणाभावः षडहस्य वि-
कृतत्वात् ।

( २ ) एषामेकैकेन दशरात्रपूरणम् । केवलेनाग्निष्टुता अथवा केवले-
नेन्द्रस्तुतोक्थ्येन अथवा सूर्यस्तुतोक्थ्येन अथवा वैश्वदेवस्तुतोक्थ्ये-
नेत्यर्थः ।

( ३ ) त्रिकद्रुकैर्वा समुदितैरेवाभ्यस्तैर्दशरात्रस्य पूरणम् ।

( ४ ) अथवा अहीनैकाहानां वैकैकेन अहीनाश्च एकाहाश्च अहीनै-
काहाः तेषामहीनैकाहानां मध्ये एकैकेन द्व्यहादिना पौण्डरीकान्तेनाभ्य
स्तेन एकैकेन भूरादिना एकाहेन दशकृत्वोऽभ्यस्तेन दशरात्रस्य पूरणम् ।

( ५ ) एकाहानां मध्ये असोर्यामेण राजसूयाहोभिश्च दशरात्रस्य
पूरणं न कर्तव्यमिति ।

( ६ ) आभ्यां मिलिताभ्यां पञ्चवारमावृत्ताभ्यां एकैकेन वा दशरा-
त्रस्य पूरणं कर्तव्यमित्यर्थः ।

( ७ ) यदा पूर्वोक्तैरहोभिरभ्यासो नोपपद्यते तदा ज्योतिष्टोमो दश-
रात्रस्यावशिष्टानामह्नां पूरणो भवतीति बोध्यम् ।

( ८ ) अथ प्रकारान्तरेण द्वादशाहविकल्पा उच्यन्ते । यथोक्तस्य
द्वादशाहस्य स्तोत्रमेकमन्यत्कुर्यात् । अथवा स्तोत्रं तदेव, केवलमेकां

**व्यत्यासमन्ततः(१) ॥ २१ ॥**

स्तोत्रियादीनां व्यत्यासेनाप्यन्ततो भवति ॥ २१ ॥

**नास्त्येषामन्तः ॥ २२ ॥**

एषां विकल्पानामन्त एव नास्ति दिङ्मात्रं प्रदर्शितमाचार्येण ॥२२॥

**अयनमुत्सर्गिणां गवामयनविकल्पाः ॥ २३ ॥**

गवामयनविकल्परूपमुत्सर्गिणां गवामयनमुच्यते(२) ॥ २३ ॥

**पञ्चोक्थ्यां स्त्रीनभिप्लवानुपेत्य चतुर्थं चतुरुक्थ्यमुपयन्ति(३) ॥ २४ ॥**

इत्येको विकल्पः ॥ २४ ॥

**(४)स्तोमोत्सर्गो वैकस्याह्नः ॥ २५ ॥**

एकस्मिन्नहनि स्तोम एव (५)वा न भवति ॥ २५ ॥

**पशोर्वा सवनविधिक्रिया(६) ॥ २६ ॥**

ततश्च प्रातः सवन एव परिसमाप्यते पशुः ॥ २६ ॥

**अनारम्भो वा(७) ॥ २७ ॥**

---

स्तोत्रियामृचमन्यां कुर्यात् । अथवा शस्त्रादौ एकामृचमन्यां कुर्यात् । अथवा एकं सामान्यत्कुर्यात् । अथवा ग्रहग्रहणादावेकं यजुः प्रस्तुतादन्यत्कुर्यात् । अथवा यथोक्तानामेकमहोऽन्यत्कुर्यात् ।

( १ ) अन्ततो दशरात्रस्यान्तिमे दशमेऽहनि न ततः प्राक् नवस्वहःसु प्रागुक्तं स्तोत्रादीनां व्यत्यासं विपर्यासं कुर्यादित्यर्थः ।

( २ ) उत्सर्गिणामयनमुच्यते । तत्र प्रथमं गवामयनविकल्पा अभिधीयन्ते इत्यर्थः ।

( ३ ) चतुर्थमभिप्लवं चतुरुक्थ्यमुपयन्ति प्रकृतिवदेव ( का० श्रौ० १३-२-१, ३ ) कुर्वन्ति । त्रिष्वभिप्लवेष्वेकैकस्याह्नोऽग्निष्टोमत्वस्योत्सर्गेणास्योत्सर्गिणामयनत्वम् ।

( ४ ) पक्षान्तरमाह—

( ५ ) अथवा संवत्सरमध्ये एकस्याह्नः स्तोमोत्सर्गः त्रिविदादेर्विहितस्य स्तोमस्योत्सर्गो भवति ।

( ६ ) अथवा पशोरेव सवनविधिना अनुष्ठानं भवति । अत्र पशुरेव केवलस्तस्मिन्नहनि न ग्रहस्तोत्रशस्त्रादिकमित्यर्थः ।

( ७ ) अथवा एकस्य कस्यचिदह्नः अनारम्भ एव अकरणमेव कर्तव्यम् ।

पशोः ॥ २७ ॥

तापश्चितविकल्पः ॥ २८ ॥

'व्याख्यायते' इति सूत्रशेषः ॥ २८ ॥

अयमेव प्रायणीयोऽतिरात्रः सर्वं सत्रं स्यात्(१) ॥२९॥

यथोक्तपृष्ठः ॥ ३० ॥

(२)अथापरम् ॥ ३१ ॥

विकल्परूपम् ॥ ३१ ॥

ज्योतिष्टोमाश्चत्वारोऽभिजित्तैः षण्मासान्(३) ॥३२॥

नयेयुः ॥ ३२ ॥

व्रतं विषुवत्स्थाने(४) ॥ ३३ ॥

भवति ॥ ३३ ॥

विश्वजिज्ज्योतिष्टोमाश्चत्वारस्तैरुत्तरान्(५) ॥३४॥

षण्मासान्नयेयुः ॥ ३४ ॥

एतत्पुरुषस्य नारायणस्योत्तममेतत्पुरुषस्य नारायणस्योत्तमम्(६) ॥ ३५ ॥

'नारायणसत्रम्' इत्यस्य संज्ञा ॥ ३५ ॥

इति चतुर्विंशोऽध्याये सप्तमी कण्डिका ।

इत्युपाध्यायकर्ककृतौ कात्यायनसूत्रभाष्ये चतुर्विंशोऽध्यायः समाप्तः ।

---

(१) अयं द्वादशाहिको ज्योतिष्टोमोऽतिरात्रः प्रायणीयसंज्ञक एव सर्वं सत्रं स्यात्। संवत्सरपर्यन्तमयमेव सर्वेषामह्नां स्थाने स्यादित्यर्थः।

(२) अपरं विकल्पान्तरं तापश्चितस्याभिधीयते ।

(३) एतैः एवंविधैः पञ्चभिरहोभिः प्रतिमासं षड्वारमावृत्तैः पूर्वपक्षषण्मासान्नयेत् ।

(४) मध्ये विषुवतः स्थाने महाव्रतम् ।

(५) तैरेवंविधैः पञ्चभिरहोभिः प्रतिमासं षड्वारमावृत्तैः विषुवतः परान्षण्मासान्नयेत् ।

(६) एतदुत्तममन्तिमं सत्रं 'नारायणपुरुषसत्रम्' इति ।

# पञ्चविंशोऽध्यायः ।

अथ प्रायश्चित्तानि अध्वर्युवेदविहितान्युक्तानि साङ्गानि कर्माणि, तत्समनन्तरमुद्गातृवेदविहितानि चोक्तानि । इदानीं तेषामेव नैमित्तिकाङ्गव्याचिख्यासयेदमाह—

**कर्मोपपाते प्रायश्चित्तं (१)तत्कालम् ॥ १ ॥**

कर्मण उपपातः कर्मोपपातः उपपातो विनाशो भ्रेष इत्यनर्थान्तरम् । स च चतुःप्रकारो भवति । अकरणम्, न्यूनकरणम्, अतिरिक्तकरणम्, अयथाकरणं चेति । यद्वा-एक एव प्रकारः सर्वमेवेदमयथाकरणम्, यथैतद्विहितं तथा न भवतीति । प्रायश्चित्तमिति नैमित्तिकस्य संज्ञा । तच्च तत्काले एव भवति यस्मिन्काले उपपातः । कुत एतत् ? 'भिन्ने जुहोति' 'स्कन्ने जुहोति' इति निमित्तसप्तमीयं, नाधिकरणसप्तम्येषा । अधिकरणसप्तम्यामाहवनीयापवादप्रसङ्गात् । नैमित्तिकस्य च निमित्तकालता न्याय्येति ॥ १ ॥

एवं प्राप्त आह—

**चोदना वाऽकालशब्दात् ॥ २ ॥**

'वा' शब्दः पक्षव्यावृत्तौ । नैमित्तिकस्य चोदनामात्रमेवैतत न तत्कालता । कुत एतत् ? अकालशब्दात् । न ह्यत्र कालप्रतिपादकः शब्दोऽस्ति । तेनागन्तुत्वात् अन्ते निवेशः प्राप्नोति ॥ २ ॥

एवं प्राप्त उच्यते—

**कालो वा प्रत्ययात् ॥ ३ ॥**

तत्कालतैव नैमित्तिकस्य स्यात् । प्रतीयते हि निमित्तकालता नैमित्तिकस्य । प्राक् तावन्निमित्तान्नैमित्तिकं न भवति । निमित्त उपजाते नैमित्तिकं भवति । तेन तत्कालताऽस्य । तस्मात्साधूक्तं 'कर्मोपपाते प्रायश्चित्तं तत्कालम्' इति । कर्मग्रहणाच्च पुरुषसम्बन्धिन्युपपाते तत्कालता न भवति । यथा 'गेहदाहेऽग्नये क्षामवते' इति ॥ ३ ॥

---

( १ ) प्रायो विनाशः विध्यतिक्रमजनितो दोषः । चिती संज्ञाने इत्यस्य धातोश्चित्तम् अनेकार्थत्वाद्धातोः सन्धानं चित्तमित्युच्यते । प्रायस्य चित्तं प्रायश्चित्तम् विनष्टस्य कर्मणः सन्धानमित्यर्थः । "प्रायस्य चित्तिचित्तयोः" इति पारस्करादिगणपठितलक्षणात् सुडागमः । कर्मविनाशकाल एव कालो यस्य तत्तत्कालम् ।

महाव्याहृतिहोमोऽनादेशे ॥ ४ ॥

'भूर्भुवः स्वः' इत्येता महाव्याहृतयोऽध्येतृप्रसिद्धाः, ताभिर्होमः कर्त्तव्यः। यत्र निमित्तमुपादिश्य नैमित्तिकस्यानादेशः तत्र भवति। यत्र पुनर्निमित्तोद्देशेन नैमित्तिकादेशस्तत्र तदेव। यथा—"प्रणीता स्कन्ना अभिमृशेत्" ( का० श्रौ० २५-५-२८ ) इति। तत्र महाव्याहृतिहोमो न भवति। 'अनादेशे' इत्युक्तत्वात् ॥ ४ ॥

व्याहृतिहोमे विशेषार्थमिदमाह—

हौत्रिके भूरिति गार्हपत्ये ॥ ५ ॥

हौत्रिक उपपाते 'भूः'(१) इति गार्हपत्ये जुहोति। हौत्रिकं चाग्वैदिकमुच्यते ॥ ५ ॥

दक्षिणाग्नावाध्वर्यवे भुव इति ॥ ६ ॥

अध्वर्युवेदविहितोपपाते दक्षिणाग्नौ 'भुवः'(२) इति जुहोति ॥६॥

आग्नीध्रीये सोमे ॥ ७ ॥

सोमे वर्त्तमाने आध्वर्यवोपपाते आग्नीध्रीये जुहोति। प्रागाग्नीध्रीयोत्पत्तेः दक्षिणाग्नावेव हूयते। यतो न हीयमाहुतिराग्नीध्रीयं प्रयोजयति स्वकालत्वात्। अस्याश्च नैमित्तिकत्वात् ॥ ७ ॥

स्वरित्यौद्गात्र आहवनीये ॥ ८ ॥

उद्गातृवेदविहिते भ्रेषे 'स्वः'(३) इत्याहवनीये जुहोति। (४)("यद्यृक्तो भूः इति चतुर्गृहीतमाज्यं गृहीत्वा गार्हपत्ये जुहवथ" इति उपक्रम्यैवं श्रूयत इति। अत्र च ऋगादिग्रहणं वेदोपलक्षणार्थम्। उपक्रमोपसंहारयोर्हि वेदाः श्रूयन्ते। उपक्रमे तावत्—"त्रयो वेदा अजायन्ताग्नेर्ऋग्वेदो वायोर्यजुर्वेदः सूर्यात्सामवेदः स इमांस्त्रीन्वेदानभितताप तेभ्यस्तप्तेभ्यस्त्रीणि शुक्राण्यजायन्त भूः" इत्येवमादीनि। तथोपसंहारे—"तत ऋग्वेदेनैवा-

---

( १ ) अत्र 'स्वाहा' इत्यध्याहारः "स्वाहाकारः सर्वत्र साकाङ्क्षत्वात्" ( का० श्रौ० ४-४-१५ ) इत्युक्तेः। अत्राग्निर्देवता। अयमनादिष्टहोमो यत्र कर्मणि ब्रह्मा भवति तत्र ब्रह्मणा कर्तव्यः। ब्रह्मवरणात्प्राक् निमित्ते जाते व्याहृतिहोमार्थं ब्रह्मणो वरणं समन्त्रकं कृत्वा तेन होमः कारयितव्यः। यत्र ब्रह्मा न भवति अग्निहोत्रादौ, तत्र तत्कर्त्रैव कार्यः। सोमे च कालाहुतिभिरस्य समुच्चय इति देवयाज्ञिकः।

( २ ) अत्र वायुर्देवता। ( ३ ) अत्र सूर्यो देवता।

( ४ ) कंसान्तर्गतो ग्रन्थो मुद्रितपुस्तके क्वचिन्नास्ति।

ग्वेदं भिषज्यति यजुर्वेदेन यजुर्वेदम्" इत्येवमादि। तस्मादृगादिग्रहणं वेदोपलक्षणार्थम्। एवं श्लोकवाक्यता भवति) ॥ ८ ॥

चतुर्गृहीतान्येतानि सर्वत्र ॥ ९ ॥

(१)(सर्वत्र ग्रहणमविज्ञाते प्रतिमहाव्याहृतीत्येवमर्थम्। अथवा 'सर्वत्र'ग्रहणात् यत्र यत्र चतुर्गृहीतश्रुतिरस्ति तत्र सर्वत्र चतुर्गृहीतानि भवेयुः। यथा 'अनुधृताभ्यस्तमयः' इत्येवमादीनि) ॥ ९ ॥

सर्वप्रायश्चित्तं च पञ्चभिः प्रत्यृचम्(२) ॥ १० ॥

'सर्वप्रायश्चित्तम्' इति संज्ञा संव्यवहारार्था ॥ १० ॥

तदाह—

(३)त्वन्नो अग्न इति द्वाभ्यामयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्त्वमित्त्वमयाऽअसि अया नो यज्ञँवहास्यया नो धेहि भेषजँ स्वाहा, ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः तेभिर्नो ऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहोदुत्तमामिति च ॥११॥

अत्र द्वयोर्मन्त्रयोः परशाखीयत्वात्पाठः। एतत् सर्वप्रायश्चित्तं 'च' शब्दात्सर्वत्र भवति। इयांस्तु विशेषः—सकृद्गृहीतेनेति ॥ ११ ॥

(४)अविज्ञाते प्रतिमहाव्याहृति सर्वाभिश्चतुर्थम्॥ १२ ॥

अविज्ञातं स्मार्त्तमभिधीयते। न हि तज्ज्ञायते किमार्ग्वैदिकं याजुर्वैदिकं सामवैदिकमिति। अथ च दृढं स्मरणं 'शुचिना कर्म कर्त्तव्यम्' 'यज्ञोपवीतिना कर्त्तव्यम्' 'बद्धशिखेन' इत्येवमादि च। तदुपपाते तदपचारे प्रतिमहाव्याहृति हुत्वा सर्वाभिश्चतुर्थं होमं करोति(५) ॥ १२ ॥

---

(१) कंसान्तर्गतो ग्रन्थः क्वचित्पुस्तके नास्ति।

(२) व्याहृतिहोमानन्तरं वक्ष्यमाणाभिः पञ्चभिर्ऋग्भिः प्रत्यृचं सर्वप्रायश्चित्तमाहवनीये जुहोति।

(३) "त्व न्नो ऽअग्ने०" "स त्व न्नो ऽअग्ने०" ( वा० सं० २१–३, ४ ) "अयाश्चाग्ने०" "ये ते शतं०" इति मन्त्रद्वयौ परशाखीयौ। "उदुत्तमम्०" ( वा० सं० १२–१२ ) एतैः सर्वप्रायश्चित्तं जुहोति।

(४) अविज्ञातवेदविशेषमूले स्मृतिविहितस्य कर्मणो विनाशे।

(५) 'भूर्भुवः स्वः स्वाहा' इति।

सर्वप्रायश्चित्तं च(१) ॥ १३ ॥

अत्र भवति ॥ १३ ॥

अग्निहोत्री चेद्दुह्यमानोपविशेद्यजुषोत्थापनमेक उदस्थाद्देव्यदितिरायुर्यज्ञपतावधादिन्द्राय कृण्वती भागं मित्राय वरुणाय चेति ॥ १४ ॥

अग्निहोत्रशब्देन तत्साधनभूतं द्रव्यमुच्यते । तद्द्रव्यं यस्यां विद्यते सेयमग्निहोत्रिणी मत्वर्थीयलोपेन अग्निहोत्रीत्युक्तं सा चेद्दुह्यमानोपविशेत् तामेके यजुषोत्थापयन्त्युदस्थादिति ( २ ) ॥ १४ ॥

दुग्ध्वा ब्राह्मणायैनां दद्याद्यमनभ्यागमिष्यन्स्यात् ( ३ ) ॥ १५ ॥

यं प्रत्यनभ्यागमिष्यन्मन्येत यजमान इति ॥ १५ ॥

दण्डेन वानुपिष्योत्थाप्य दोहनम् ॥ १६ ॥

'वा'शब्दो विकल्पार्थः ॥ १६ ॥

अदानं च ॥ १७ ॥

तस्मिन्पक्षे ॥ १७ ॥

अदुह्यानायामन्याम् ॥ १८ ॥

प्राप्तमेवेदमुच्यते प्रायश्चित्तव्युदासार्थम् ॥ १८ ॥

वाश्येत चेत्तृणान्यालुप्य ग्रासयेत्सूयवसाद्भगवति हि भूया अथो वयं भगवन्तः स्याम अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्तीति ॥ १९ ॥

---

( १ ) अत्र विप्रतिपत्तिः । 'भूः' इति गार्हपत्ये, 'भुवः' इति दक्षिणाग्नौ, 'स्वः' इत्याहवनीये, 'भूर्भुवः स्वः' इति सर्वप्रायश्चित्तं चेत्याहवनीये याज्ञिकवासुदेवभट्टाश्च । 'भूः' इत्याद्याहुतिनवकमप्याहवनीय एवेति सम्प्रदायकारिकाकारौ । महापितृयज्ञे दक्षिणाग्नौ अवभृथे चाप्स्वेव शतरुद्रिये परिश्रित्सु त्र्यम्बकासु चतुष्पथाग्नौ ।

( २ ) "तदाहुः । यस्याग्निहोत्री दोह्यमानोपविशेत्किं तत्र कर्म का प्रायश्चित्तिरिति ताᳬ हैके यजुषोत्थापयन्त्युदस्थाद्देव्यदितिरिति०" ( श० ब्रा० १२-४-१-९ ) इत्यादिश्रुतेः ।

( ३ ) तत्र मतभेदः । यः पुनर्गृहे नागच्छतीति कारिकाकारः । यस्य गृहे कार्यार्थमपि गमिष्यन्यजमानो न भवतीति याज्ञिकाः धूर्तस्वामिनश्च ।

अनेन मन्त्रेण । "यस्याग्निहोत्री दोह्यमाना वाश्येत" इत्युपक्रम्य "स्तम्बमाच्छिद्य ग्रासयेत्" ( श०ब्रा०१२-४-१-१२ ) इति श्रुतेः ॥ १९ ॥

इति पञ्चविंशेऽध्याये प्रथमा कण्डिका ।

---

**तस्यै पयसा जुहोति ॥ १ ॥**

षष्ठ्यर्थे चतुर्थी तस्याः पयसा जुहोतीति ॥ १ ॥

**लोहितदोहे दक्षिणाग्निं परिश्रित्य व्युत्क्रामतेत्युक्त्वोष्णे भस्मनि रुद्राय हुत्वा पूर्ववद्दानम् ॥ २ ॥**

लोहितदोहे दक्षिणाग्नेः परिश्रयणम् । (१)'व्युत्क्रामत' इति च प्रैषः । दक्षिणाग्नेरेव उष्णे भस्मनि 'रुद्राय स्वाहा' इति हुत्वा पूर्ववद्दानं यमनस्यागमिष्यन्मन्येत तस्मै । मेक्षणकरणं श्रपणं च नोपनिबद्धमाचार्येण । इह च द्रव्यप्रतिपत्तिरियम् । होमक्रिया द्रव्यार्था नापूर्वोत्पत्त्यर्था तेनात्रेतिकर्त्तव्यता न भवति । कर्त्तव्यस्य हीतिकर्त्तव्यतापेक्षा भवति । न चात्रापूर्वस्य कर्त्तव्यता । होमो ह्यत्र द्रव्यार्थः । अतो दोहनपात्रेणैव समस्तं तद्द्रव्यं भस्मनि प्रक्षिप्यत इति ॥ २ ॥

**रौद्रं गवि सद्रौद्रमुपसृष्टं वायव्यं दुह्यमानमाश्विनं दुग्धꣳ सौम्यमधिश्रितं वारुणमुदन्तं पौष्णं ( २ )विष्यन्दमानं मारुतं बिन्दुमत्सारस्वतꣳ शान्तं मैत्रमुद्वास्यमानꣳ सवितुरुद्वासितमदितेरुन्नीयमानं वैश्वदेवमुन्नीतं बार्हस्पत्यं प्रह्रियमाणं धात्रं प्रहृतं वैश्वकर्मणमन्तराग्नी वैश्वानरायोपसन्नं द्यावापृथिव्योः पूर्वाहुतिरिन्द्राग्न्योरुत्तरा प्रजापतेर्हुतमैन्द्रम् ॥ ३ ॥**

तद्रौम्यं होमद्रव्यं गवि स्थितं सद्दुष्यति चेत् रुद्रदेवत्यं भवति । एवमुपरिष्टादपि तस्मिंस्तस्मिन्काले देवतासम्बन्धात्तद्दैवतमुच्यते । वक्ष्यति हि 'यथाकालोपपाते तद्दैवते तद्दैवतꣳ हुत्वा' इति । तादर्थ्यात् । गवि

---

( १ ) "तदाहुः । यस्याग्निहोत्री लोहितं दुहीत किं तत्र कर्म का प्रायश्चित्तिरिति व्युत्क्रामतेत्युक्त्वा मेक्षणं कृत्वान्वाहार्यपचनं परिश्रयितवै ब्रूयात्०" ( श० ब्रा० १२-४-२-१ ) इत्यादिश्रुतेः ।

( २ ) 'विष्पन्दमानम्' इ० पा० ।

स्थितस्य च ऋषभाक्रमणादिना दोषः(१)। उपसृष्टं वायव्यम् वत्सोपसर्गकाले वायव्यं भवति ॥ ३ ॥

यथाकालोपपाते तद्देवते तद्दैवतꣳ हुत्वा तद्वातिदिश्यान्येन जुहुयात् ॥ ४ ॥

यस्मिन्यस्मिन्काले उपपातस्तद्देवत्यं होमं कृत्वा तदुद्देशेन वातिदिश्यान्येन जुहुयात् ॥ ४ ॥

(२)स्कन्देच्चेदस्कन्नाधित प्राजनीत्याभिमृश्य शेषेण जुहुयात् ॥ ५ ॥

"अथ यत्र स्कन्नꣳ स्यात्तदभिमृशेदस्कन्नाधित प्राजनीति" (श० ब्रा० १२-४-१-७) इति श्रुतेः ॥ ५ ॥

(३)भिद्येत चेदवापद्येत स्कन्नप्रायश्चित्तेनाभिमृश्य व्याहृतिभिश्चाद्भिरुपनिनीय कपालानि भस्मोद्वापे कुर्यात् ॥ ६ ॥

यद्यु नीची स्थाली स्याद्यदि वा भिद्येत स्कन्नप्रायश्चित्तेनैवाभिमृश्य व्याहृतिभिश्चाद्भिरुपनिनीय कपालानि भस्मोद्वापे करोति। यदि भिन्ना स्थाली अन्येन च द्रव्येण होमाभिनिर्वृत्तिः ॥ ६ ॥

भुवपतय इति हाविर्यज्ञियम्(४) ॥ ७ ॥

स्कन्नमभिमृशेत् ॥ ७ ॥

---

(१) दुह्यमानप्रभृतिहुतपर्यन्तस्य अमेध्य-मल, केश, कीटादिपातादिना दुष्टता।

(२) तदग्निहोत्रार्थं पयश्चेत्स्कन्देत्स्थालीतो बहिर्गच्छेत् भूमौ अन्यत्र वा पतेत्।

(३) "यदि वा भिद्येत स्कन्नप्रायश्चित्तेनैवाभिमृश्याद्भिरुपनिनीय यदन्यद्विन्देत्तेन जुहुयात्" (श० ब्रा० १२-४-१-६) इति श्रुतेः। भिद्येत विदीर्येत अथवा अवापद्येत अधोमुखीभवेत्। भस्योद्वापशब्देन गार्हपत्यादिखरेभ्यो भस्मोद्धृत्य यो राशिः क्रियते स उच्यते।

(४) हविर्यज्ञशब्देन दर्शपूर्णमासौ तद्विकाराश्च। तत्सम्बन्धि हाविर्यज्ञियं चरुपुरोडाशाज्यसान्नाय्यमांसादि। सोमे हाविर्यज्ञिये स्कन्ने इदमेव प्रायश्चित्तम् तत्र "भुवपतये स्वाहा" (वा० सं० २-२) इत्यभिमर्शनात्पूर्वं कालाहुतिवाचने अधिके।

देवान्दिवमगन्निति सोमे(१) ॥ ८ ॥

सोमे हाविर्यज्ञियं स्कन्नं "देवान्दिवमगन्०" ( वा०सं० ८-६० ) इत्यनेन मन्त्रेण अभिमृशेत् ॥ ८ ॥

(२)पयोरोजसेति वोदकेनोपसिञ्चेत् ॥ ९ ॥

सोम एव हाविर्यज्ञियं (३)स्कन्नम् । 'वा' शब्दो विकल्पार्थः ॥ ९ ॥

उन्नीतसर्वस्कन्दनस्रुग्भेदयोस्तत्रैवासनम् ॥ १० ॥

"यस्याग्निहोत्रꣳ स्रुच्युन्नीतꣳ स्कन्देत्" ( श० ब्रा० १२-४-२-६ ) इति प्रकृत्यैवमेव हि श्रूयते ॥ १० ॥

अन्यदुन्नीयान्योऽस्मै (४)प्रयच्छेत्तेन होमः ॥ ११ ॥

अन्यस्मिन्नुन्नीयमाने प्रैषो न भवति । "तददो हैवोन्नेष्यामीत्युक्तं भवति" ( श० ब्रा० १२-४-२-८ ) इति श्रुतेः ॥ ११ ॥

इति पञ्चविंशेऽध्याये द्वितीया कण्डिका ।

---

पूर्वाहुतौ हुतायां चेदाहवनीयोऽनुगच्छेत्तदुक्तम्(५) ॥ १ ॥

तदुक्तग्रहणं न्यायप्राप्तोद्धरणप्रज्ञप्त्यर्थम् । प्राप्तत्वादेवावाच्यमिति चेत्, उत्तरविधानेन सह विकल्पार्थत्वादित्यदोषः ॥ १ ॥

(६)काष्ठे हिरण्यं वाभिजुहुयाच्छ्रुतेः ॥ २

---

( १ ) सोमे रसरूपे सोमद्रव्ये स्कन्ने स्कन्नस्य सोमस्याभिमर्शनं कर्तव्यम् । अत्रापि कालाहुतिवाचने भवतः ।

( २ ) यस्मिन्प्रदेशे स्रुग्भिन्ना सर्वस्कन्दनं वा जातं तत्रैवोपवेशनं कुर्यात् । ततः स्कन्नस्य "अस्कन्नधित" "पयोरोजसा" ( वा० सं० ८-५९ ) इति मन्त्राभ्यामभिमर्शनम् उदकोपसेचनं च ।

( ३ ) स्कन्नं सोमम् । अत्रापि पूर्वं कालाहुतिहोमो वाचनं च ।

( ४ ) अन्यो होमकर्तुरन्यः कश्चित्सर्वस्कन्दने तस्यामेव स्रुचि स्रुग्भेदे चान्यस्यां प्रतपनादिसंस्कृतायां स्थाल्याः सकाशादुन्नीयोन्नयनं कृत्वा अस्मै होमकर्त्रे सर्वस्कन्दनभेदनस्थाने उपविष्टाय प्रयच्छेत् ।

( ५ ) "तदाहुः यस्याहवनीय उद्धृतः पुराग्निहोत्रादनुगच्छेत्०" ( श० ब्रा० १२-४-३-२ ) इत्यादि श्रुतेः ।

( ६ ) अग्निस्थाने काष्ठं निधाय होमे क्रियमाणे यदि यजमानस्य हृदयविलेखो भवति अविश्वासोऽपरितोषो वा भवति तदा ।

काष्ठं निधायाभिजुहुयात् हिरण्यं वेति विकल्पः। श्रुतिग्रहणं हृदयविलेखप्रशस्त्यर्थम्। तथा च श्रुतिः—"यद्यस्य हृदयं स्येव लिखेद्धिरण्यमभिजुहुयात् ( श० ब्रा० १२-४-३-१ ) इति ॥ २ ॥

**त्रिरुद्धृतश्चेदाहवनीयोऽनुगच्छेदुदक्स्थानान्युपलिप्य निर्मथ्य सकृदुद्धृते तस्मिन्त्सायम्प्रातर्होममेके ॥ ३ ॥**

त्रिरुद्धृताहवनीयानुगमने उदीच्यां दिशि अग्निस्थानान्युपलिप्य निर्मन्थनोपदेशाद् गार्हपत्ये समारोह्य निर्मथ्य सकृदुद्धृते तस्मिन्नेव विहारे एके सायं प्रातर्होममिच्छन्ति। एके शतकृत्वोऽप्युद्धरन्ति ॥ ३ ॥

**गार्हपत्येऽनुगते भस्मनाऽरणी सꣳस्पृश्य मन्थनम् ॥ ४ ॥**

अग्निहोत्रकाल एतन्नैमित्तिकमिति सम्प्रदायः। तथा चोपरितनान्यपि नैमित्तिकानि तद्विषयाण्येव दृश्यन्ते। येनेदमाह—"पूर्वमुपशमस्य पूर्ववद्धोमः" (का० श्रौ० २५-३-९) इति। होमग्रहणादग्निहोत्रविषयता गम्यते। अपरे तु सर्वविषयं मन्यन्ते(१) ॥ ४ ॥

**आहवनीयजागरणे वा तत एवोद्धरणम्(२) ॥ ५ ॥**

आहवनीयजागरणे गार्हपत्यानुगमने तत एवाहवनीयोद्धरणं शेषश्च गार्हपत्यकार्ये। तस्मिन्पक्षे दक्षिणाग्नेः प्राङ्नयनं कर्तव्यम् ॥ ५ ॥

**आहृत्य वा (३) ॥ ६ ॥**

गार्हपत्यस्थानमाहवनीयम्। पुनरुद्धरणम्। शेषश्च गार्हपत्यः ॥६॥

**उलपराज्यागताद्वा ॥ ७ ॥**

उलपराजी तृणवर्त्तिकोच्यते। तया वा ज्वलन्त्या गार्हपत्यस्थानमागतात् पुनरुद्धरणं भवति ॥ ७ ॥

**निर्मथ्य(४)वा ॥ ८ ॥**

---

( १ ) अग्निहोत्रे विहारकाले गार्हपत्यानुगमनएतद्भवतीति कर्कसम्प्रदायकारौ अन्ये तु सर्वदैवैतद्भवतीत्याहुः।

( २ ) इतः प्रभृति अग्निहोत्रहोमविषयाण्येव नैमित्तिकान्यभिधीयन्ते। यः प्रागुद्धृतः स आहवनीयः यश्चाहवनीयस्थाने अवशिष्टः स गार्हपत्यः। पूर्वोद्धृत एव दक्षिणाग्निराहृत्य वितृतीये स्थाप्यः। एवं कृत्वाग्निहोत्रं होतव्यम्। होमान्ते गार्हपत्यस्य मन्थनं कार्यमिति देवयाज्ञिकाः।

( ३ ) अत्रापि पक्षे होमान्ते गार्हपत्यस्य मन्थनं कार्यम्।

( ४ ) अथवा गार्हपत्यं निर्मथ्य तत उद्धरणम्। न चास्मिन्पक्षे होमान्ते मन्थनम्। कृतत्वात् इति देवयाज्ञिकाः।

"अथ हैकेऽन्यं गार्हपत्यं मन्थन्ति" ( श० ब्रा० १२-४-३-८ ) इति श्रुतेः । अस्मिंश्च पक्षे न्यायप्राप्तमेवैतदिति नैमित्तिकं भवति । प्राप्तस्य चोपादानमितरैः सह विकल्पार्थम् ॥ ८ ॥

**समारोह्यासमारोह्य वा पूर्वमुपशमय्य पूर्ववद्धोमः(१) ॥ ९ ॥**

समारोह्य पूर्ववदुदकस्थानान्युपलिप्य निर्मथ्य सकृदुद्धृते सायं प्रातर्होमः। असमारोह्य पूर्वस्योपशमनं कृत्वा निर्मथ्योद्धृत्यात्रैव होमः । एवं हि श्रूयते-"अथ हैकेऽनुगमय्यान्यं मन्थन्ति" "अरण्योरग्नी समारोह्य" ( श० ब्रा० १२-४-३-९,१० ) इति च ॥ ९ ॥

**त्रिराहृतो दक्षिणाग्निरनुगच्छेच्चेदनाहरणमस्य तद्हरेके ॥ १० ॥**

एके शतकृत्वोऽप्युद्धरन्ति । अनाहरणपक्षे च तदर्थत्वात् तत्साध्यकर्मलोपः ॥ १० ॥

**जाग्रतमाहवनीयमभ्युद्धरेच्चेत्तदुक्तम्(२) ॥११॥**

'तदुक्तम्' इति ग्रहणमुत्तरविवक्षार्थम् ॥ ११ ॥

**पश्चान्निधाय पुरस्ताद्वोभयत्र होममेके ॥ १२ ॥**

(३)पश्चादाहवनीयस्य स्थापयित्वा पुरस्ताद्वा तमग्निमुभयत्र होममेके कुर्वन्ति । एके तदुक्तं गार्हपत्योऽसाविति । उभयत्र च होमपक्षे चतुर्गृहीतेन हुत्वैकस्मिन्नग्नौ पुनश्चतुर्गृहीतेन द्वितीये जुह्वति एके । शे-

---

( १ ) तत्र असमारोह्यपक्षे पूर्वमाहवनीयमुपशान्तं कृत्वा गार्हपत्यं स्वस्थान एव संस्थाप्य स्वस्थान एव च आहवनीयमुद्धृत्य तत्रैवाग्निहोत्रहोमः कार्यः । दक्षिणाग्निश्च पूर्वोद्धृत एव । समारोह्यपक्षे तु आहवनीयं समारोह्य पूर्ववद्धोमः । दक्षिणाग्निः तत्र पूर्वोद्धृत एव नीयते ।

( २ ) अनुपशान्तस्यैवाहवनीयस्य भ्रान्त्या गार्हपत्यादभ्युद्धरणं चेत्तदा तदुक्तं प्रायश्चित्तमाध्वर्यवमेव कर्तव्यम् , अन्यस्यानुक्तत्वात् । एवं च आध्वर्यवं पूर्वं हुत्वा भ्रान्त्योद्धृतस्य गार्हपत्यमध्ये पश्चात्प्रक्षेपः कर्तव्यः ।

( ३ ) तं भ्रान्त्योद्धृतं स्थापनात्प्राग्ज्ञातं पश्चान्निधाय पूर्वोद्धृतस्याहवनीयस्य अपरस्मिन्देशे स्थापयित्वा पुरस्तात्पूर्वदेशे वा निधाय उभयत्राग्निद्वये होमं कुर्वन्त्येके । एके गार्हपत्यमध्ये पश्चात्प्रक्षेपं कुर्वन्तीति ।

षभक्षादि तन्त्रेण । अन्ये त्वेतन्नेच्छन्ति । साध्यो होमः साधनमग्निः न च साधनभेदात्साध्यभेदो युक्तः । तेनान्यथा वर्णयन्ति । एकैव समित् ख्रातवती अग्निद्वयेऽप्युपधीयते । तत्र प्रक्षिप्तं होमद्रव्यमाग्निद्वयेऽप्युपाच्छंति । एवमुभयत्र होमः कृतो भवति इति सम्प्रदायः । युक्तरूपमिव चैतत्, न हि साधनापेक्षया साध्यावृत्तिर्युक्तेति ॥ १२ ॥

अभिनिधानेऽग्नयेऽग्निमते पुरोडाशः ॥ १३ ॥

यदि पुनरुद्धृतोऽग्निरन्नावभिनिहित एव भवति तदाग्नयेऽग्निमते पुरोडाशः(१) कार्यः ॥ १३ ॥

(२)समितमिति वोपस्थानं द्वाभ्याम् ॥ १४ ॥

वाशब्दो विकल्पार्थः ॥ १४ ॥

गृहीतानुगमने चान्वग्निरित्याहृत्य ॥ १५ ॥

"ममाग्ने" ( का० श्रौ० २-१-३ ) इत्यग्निं गृण्हातीति गृहीतस्यानुगमने एतदेव प्रायश्चित्तद्वयं विकल्पेन भवति । "अन्वग्निः" ( वा० सं० ११-१७ ) इत्यनेन मन्त्रेण आहृत्य पूर्वतरम् ॥ १५ ॥

अनादेशे पुरोडाशः सर्वत्र ॥ १६ ॥

वक्ष्यत्युपरिष्टात् "अग्नये च सूर्यवते" "सूर्याय च ज्योतिष्मते" ( का० श्रौ० २५-३-१८, २१ ) इति । तत्र पुरोडाशो भवति । एतच्चोक्तमाचार्येण–'यत्र वेदवाक्ये द्रव्यस्य न विधानं तद्विषयम्' इति । इतरथाग्नयेऽग्निमते पुरोडाश इत्यवाच्यं स्यात् ॥ १६ ॥

अनुद्धृताभ्यस्तमये कुशबद्धे हिरण्ये (३)पश्चाद्ध्रियमाण इध्मेनोद्धरेदार्षेयो ब्राह्मणः ॥ १७ ॥

"यस्याहवनीयमनुद्धृतमादित्योऽभ्यस्तमियात्" ( श० ब्रा० १२-४-४-६) इति प्रकृत्य सर्वमेतच्छ्रूयते । प्रैषवचनं तु नोपनिबद्धमाचार्येण ॥१७॥

वैष्णव्याहुतिः ॥ १८ ॥

---

( १ ) भ्रान्त्या स्थापने कृते प्रायश्चित्तार्थमिष्टिः, इष्टेरनन्तरमग्निहोत्रहोमः कर्तव्यः ।

( २ ) वित्तकालाद्यभावेनेष्टिं कर्तुमशक्तस्य हृद्विलेखरहितस्य वाभिनिधाने प्रायश्चित्तान्तरम्—

तयोरुभयोरग्न्योः "समितम्०" "सं वाम्०" (वा० सं०१२-५७, ५८) इति मन्त्राभ्यामुपस्थानं कार्यम् ।

( ३ ) गार्हपत्यस्यापरस्मिन्प्रदेशेऽन्येन केनचिद्ध्रियमाणे इत्यर्थः ।

तत्र द्वयेति ॥ १८ ॥

अग्नये च सूर्यवते ॥ १९ ॥

पुरोडाशः(१) ॥ १९ ॥

अभ्युदये रजतधारणं पुरस्तात् (२)वैश्वदेव्याहुतिः ॥२०॥

सूर्याय च ज्योतिष्मते ॥ २१ ॥

पुरोडाशः ॥ २१ ॥

समानमुद्धरणम् ॥ २२॥

'इध्मेनोद्धरेदार्षेयो ब्राह्मण' इति ॥ २२ ॥

वैश्वदेवी वोभयत्रापुरोडाशा ॥ २३ ॥

उभयत्र वा वैश्वदेव्याहुतिर्भवत्यपुरोडाशा चतुर्गृहीतेन ॥ २३ ॥

उभयानुगमने पुनराधेयं वा ॥ २४ ॥

उभयोरनुगतयोः गार्हपत्याहवनीययोर्यद्यस्तमयो भवत्यभ्युदयो वा तदा पुनराधेयं वा भवति, न्यायप्राप्तमग्न्याधेयं वा । को न्याय इति चेत् ? "उभावग्नी युगपदुत्पाद्यौ युगपदुत्पत्तिश्चाग्न्याधेयेन भवति", यद्येवं 'पुनराधेयं वा' इति कुत एतत् ? वाक्यात् । 'यस्योभावग्नी अनुगतावभिनिम्लोचेदभ्युदियाद्वा सूर्यः पुनराधेयमेव तत्र प्रायश्चित्तिः' । एवं चेत् पुनराधेयमेव भवति नाग्न्याधेयम् इति । न हि न्यायो वाक्येन विकल्प्यते । एतच्चानुगतपरिज्ञानोत्तरकालं यद्यभिनिम्लोचनं भवति तदैव, न अभिनिम्लोचनोत्तरकालमनुगमनपरिज्ञाने ॥२४॥

भेदेनाप्युपपातात् ॥ २५ ॥

भेदेनाप्यनुगमाभिनिम्लोचने भवत्येव पुनराधेयम् । कुत एतत् ? उपपातात् । उपपातो हि भवति अग्न्यनुगमनेऽभिनिम्लोचनम् । तद्यद्युभयशब्देन विशिष्यते ततो वाक्यं भिद्येत । तस्माद्भेदेनाप्यनुगतयोः पुनराधेयमिति ॥ २५ ॥

एवं प्राप्त आह—

न सह प्रक्लृप्तेः ॥ २६ ॥

नैतदेवमन्यतरानुगमने पुनराधेयम्(३) । सहैव हि प्रकल्पिता गा-

---

(१) दक्षिणाग्निमुद्धृत्य इष्ट्यन्ते तद्विहार एवाग्निहोत्रं होतव्यम् ।

(२) आहवनीयखरात्पूर्वस्यां दिशि ।

(३) पुनराधेयसमाप्त्यनन्तरं चास्मिन्नेव विहारेऽग्निहोत्रहोमः कर्तव्य इति ।

र्हपत्याहवनीययोरुत्पत्तिः । तत्रैकैको न शक्यते उत्पादयितुम् । तस्मात्सविशेषणमेवात्र निमित्तम् ॥ २६ ॥

इति पञ्चविंशेऽध्याये तृतीया कण्डिका ॥

---

**(१)मथ्यमानश्चेन्न जायेत यमदूरात्परापश्येत्तमाहुत्याभिजुहुयात् ॥ १ ॥**

मथ्यमानग्रहणं कालासम्भवप्रज्ञप्त्यर्थम् । न हि कश्चिन्मथ्यमानो न जायते । यमेवान्तिकेऽग्निमपरिगृहीतं पश्येत्तमाहुत्याभिजुहुयात् । स चायमस्यैवैकस्य प्रयोगस्य साधनीभूतः । तावन्मात्रश्रवणात् । पुनः स्वयोनेराहरणम् ॥ १ ॥

**(२)ब्राह्मणहस्ते वा ॥ २ ॥**

जुहोति । 'वा' शब्दो विकल्पार्थः । अयं चाहवनीयविकारत्वेन विधीयते । ततश्चोत्तरसमिदाधानमन्त्रे विपरिणामः । सा ह्यदृष्टार्थत्वात् ब्राह्मणहस्तेऽपि दीयते । पूर्वा तु दृष्टार्थत्वादेव न भवति ॥ २ ॥

तस्मिन्पक्षे व्रतमाह तस्य—

**वासानपनोदश्च ॥ ३ ॥**

वसत्यर्थमागतो ब्राह्मणो नापनोद्यः ॥ ३ ॥

**अजकर्णे वा दक्षिणे ॥ ४ ॥**

जुहोति(३) ॥ ४ ॥

तस्मिंश्च पक्षे व्रतमाह—

**अभोजनं तस्य ॥ ५ ॥**

---

(१) अथ गार्हपत्यस्योपशान्तस्य समारूढे वा होमकाले मथ्यमानस्य उद्धरणकालात्प्राग्जन्मासम्भावनायां तत्प्रयोगसिद्ध्युपायार्थमिदम् ।

( २ ) अत्र गार्हपत्याहवनीयदक्षिणाग्नीनां स्थाने त्रीन्ब्राह्मणानुपवेश्य दक्षिणेषु तद्धस्तेषु परिस्तरणादि पर्युक्षणोपस्थानान्तं सर्वं कार्यम् । होमात्पूर्वं यत्समिदाधानं तन्न भवति, दृष्टार्थत्वात् । इन्धनं हि तस्य प्रयोजनम् । न च तदनग्निषु सम्भवति । "समिदसि०" (वा०सं० २–५) इत्येतत्तु समिदाधानं भवत्येव अदृष्टार्थत्वात् । तत्र च ( का० श्रौ० ४–१४–३० ) समिदसि समिद्धो मे ब्राह्मणहस्त दीदिहि समेद्धा ते ब्राह्मणहस्त दीद्यासमिति विशेषः ।

( ३ ) ब्राह्मणवदेव त्रयाणामग्नीनां स्थानेषु अजान्स्थापयित्वा तद्दक्षिणकर्णेषु होमः कार्य इत्यर्थः ।

अजमांसस्य ॥ ५ ॥

**कुशस्तम्बे वा ॥ ६ ॥**

जुहोति(१) । तत्र व्रतम् ॥ ६ ॥

**अनासनं तस्मिन् ॥ ७ ॥**

**(२)अप्सु वा ॥ ८ ॥**

जुहोति । तत्र व्रतम् ॥ ८ ॥

**नाद्भ्यो बीभत्सेतेति श्रुतेः ॥ ९ ॥**

बीभत्सा परिवाद उच्यते । एवं श्रूयते—"नापः परिचक्षीत" (३)इति । अपन्याय्यत्वाच्च श्रुतिग्रहणमत्र क्रियते ॥ ९ ॥

**अहुताभ्युदितउन्नीया(४)तमितोरासीत ॥१०॥**

अहुत एव यद्यभ्युदयो भवति तदोन्नीयातमनादासीत ॥ १० ॥

**हुत्वा भूरित्यनुमन्त्रणम् ॥ ११ ॥**

हुत्वा च 'भूः' इत्यनुमन्त्रणं कार्यम् ॥ ११ ॥

**(५)वरदानं च ॥ १२ ॥**

**(६)सर्वनाशे हविषां दोषे वा तदुक्तम् ॥ १३ ॥**

तदुक्तग्रहणं पक्षान्तरेण सह विकल्पार्थम् ॥ १३ ॥

**आज्येन वा प्रतिसंख्याय देवतेज्या ॥ १४ ॥**

---

( १ ) त्रिष्वग्निस्थानेषु त्रीन् कुशस्तम्बान्स्थापयित्वा तेषु होमः कार्यः ।

( २ ) उदकपात्राणामग्निस्थानेषु स्थापनं कृत्वा तत्रत्यजले हवनं कर्तव्यमित्यर्थः ।

( ३ ) अपां निन्दां न कुर्यात् । सर्वेषु पक्षेषु होमान्ते गार्हपत्यमन्थनं कार्यमिति ।

( ४ ) चतुर्गृहीतस्योन्नयनं होमार्थं कृत्वा आहवनीयसमीपे आतमितोरासीत श्वासधारणं कृत्वासीत शरीरस्यात्यन्तग्लानिपर्यन्तम्, यत ऊर्ध्वं श्वासधारणं कर्तुं न शक्यते तावदित्यर्थः ।

( ५ ) क्षीरहोत्रे, स्वयं होमे त्वन्यस्मै सन्निहिताय ।

( ६ ) सर्वेषां हविषां दोषविशेषेण अपहारादिना श्लेष्माद्यमेध्योपघातेन वा नाशे तदुक्तं प्रायश्चित्तं "प्रधानद्रव्यव्यापत्तौ साङ्गावृत्तिस्तदादेशात्" ( का० श्रौ० १-७-२७ ) इति कात्यायनोक्तमनुष्ठेयम् । तेनाध्वर्यवं कृत्वा तद्विहार एव सान्निपातिकैरङ्गैस्तानि विनष्टानि हवींष्युत्पाद्य यागाः कर्तव्या इति ।

प्रतिसङ्ख्यानविधिग्रहणाच्च तासामेव देवतानामिज्या(१) । किं वा स्यात् । मा भूदुपांशुयाजविष्यन्तेन विष्णोरग्नीषोमयोर्वेज्येति । देवताग्रहणाच्चाङ्गाभावः ॥ १४ ॥

पुनः क्रिया च ॥ १५ ॥

एवं हि श्रूयते—"यस्य सर्वाणि हवींꣳषि नश्येयुर्वा दुष्येयुर्वाप- हरेयुर्वाज्येन ता देवताः सꣳस्थाप्य पुनर्निर्वपेत्" इति ॥ १५ ॥

भेदे विप्रक्लृप्त्युपपाताभ्याम् ॥ १६ ॥

सर्वविषयत्वेन श्रवणात्सर्वहविर्नाशे एवं प्राप्त इदमुच्यते भेदेपि भवतीति । कुत एतत् ? विप्रक्लृप्तेः । पृथक् पृथक् प्रक्लृप्तानि ह्येतानि हवींषि । नाग्न्युत्पत्तिवत्सहत्वप्रक्लृप्तिः । अपि चोपपातो भवति "यस्य हवींꣳषि नश्येयुः" इति । तत्र सर्वशब्देन विशिष्यमाणे वाक्यभेद- प्रसङ्गः । "हवींꣳषि नश्येयुः सर्वाणि च नश्येयुः" इति । स चान्याय्यः । तस्मान्नाशमात्रं निमित्तम् । तत्र भेदेऽपि भवति चेत् भवेदिदं नैमि- त्तिकमिति(२) ॥ १६ ॥

अन्तरागमनेऽनाद्रियते ॥ १७ ॥

गार्हपत्यादीनामन्तरागमने अनादरस्तच्चैतदग्निहोत्रविषयम् । त- त्रैव प्रकृत्य श्रूयते—"कामं वाऽएषु लोकेषु वयाꣳसि युक्तं चायुक्तं च सञ्चरन्ति" ( श० ब्रा० १२-४-१-३ ) इति ॥ १७ ॥

श्वैडकवराहेषूदधारा प्राचीदं विष्णुरिति ॥ १८ ॥

(३)देया ॥ १८ ॥

(४)भस्मनो वा ॥ १९ ॥

'वा' शब्दो विकल्पार्थः । विकल्पेन हि श्रूयते-"गार्हपत्याद्भस्मो-

---

( १ ) यावतीनां देवतानां हवींषि विनष्टानि ताः परिगणय्य विनष्ट- हविःसम्बद्धानां तावतीनां देवतानामाज्येन हविषा यागः कर्तव्यः । आज्यसंस्कारात्पूर्वमस्य निमित्तस्य पाते आज्यसंस्कारं वेदिसंस्कारम- ग्निसंस्कारं च कृत्वा यागः कर्तव्य इति देवयाज्ञिकाः ।

( २ ) एकैकहविर्नाशेऽपीदं नैमित्तिकमनुष्ठेयम् ।

( ३ ) श्वा-कुक्कुरः । एडको-मेषः । वराहः-ग्रामसूकरः । गार्हप- त्यादारभ्याहवनीयपर्यन्तं "इदं ꣳविष्णुः०" ( वा० सं० ५-१५ ) इत्यनेन उदकस्य धारां निनयति ।

( ४ ) भस्म गार्हपत्याद् गृहीत्वा धारा देया । एतदप्यग्निहोत्र- विषयमेव ।

पहृत्याहवनीयाग्निवपन्तो यन्ति" ( श० ब्रा० १२-४-१-४) इति ॥१९॥

(१)चक्रीवत्यग्नये पथिकृते ॥ २० ॥

पुरोडाशं निर्वपेत् । चक्रीवान् रासभ उच्यते, तस्मिन्नन्तरा गच्छतीत्यर्थः । एतच्च सर्वविषयमसंयुक्तविधानात् ॥ २० ॥

प्रज्ञातेष्ट्यतिपत्तौ च ॥ २१ ॥

पथिकृद्भवति ॥ २१ ॥

प्रज्ञातग्रहणमाचष्टे—

(२)नियतास्वतिपत्तिश्रुतेः ॥ २२ ॥

अतिपत्तिर्हि नियतास्वेव भवति नानियतासु । इष्टिग्रहणाच्च पश्वतिपत्तौ न भवति ॥ २२ ॥

(३)स्तोत्रमोहे शस्त्रस्य च ॥ २३ ॥

पथिकृद्भवति ॥ २३ ॥

जनमरणे च ॥ २४ ॥

पथिकृत भवति ॥ २४ ॥

उपपातसामर्थ्यात्स्वजने(४) ॥ २५ ॥

सा च स्वकीयजनमरणे, न सार्वत्रिके । कुत एतत् ? उपपातसामर्थ्यात् । उपपातो हि कादाचित्को भवति ॥ २५ ॥

नित्यत्वाच्च ॥ २६ ॥

अपि च नित्यं जनमरणमिति ॥ २६ ॥

अग्नये व्रतपतये व्रत्येऽहनि मैथुनमांसभोजनं चेत् ॥२७॥

व्रतमर्हतीति व्रत्यं तस्मिन्मैथुनमांसभोजनं चेद्भवति अग्नये व्रतपतय इष्टिर्भवति(५) ॥ २७ ॥

---

( १ ) चक्रीवान् रथः । अग्निहोत्रनैमित्तिकमध्ये विधानादेतदप्यग्निहोत्रविषयमेवेति देवयाज्ञिकाः ॥

( २ ) नित्यास्वेवेष्टिषु कालातिक्रमस्य श्रवणात् प्रज्ञातपदेन दर्शपौर्णमासाग्रयणचातुर्मास्येष्टयो गृह्यन्ते ।

( ३ ) अन्यस्य स्थानेऽन्यस्य गानम् । अन्यास्वृक्षु वा, तास्वेव ऋक्षु सामान्तरगानं च स्तोत्रमोहः । अत्र च कालाहुतिवाचने पूर्वं भवतः । शस्त्रस्य च अन्यस्य स्थाने अन्यशंसने अक्षसूत्रादेर्विपर्यासे विस्मरणे च पथिकृदिष्टिः ।

( ४ ) पुत्रपौत्रादिमरणे ।

( ५ ) अष्टाकपालः पुरोडाशो भवति । स्मृतिप्रतिषिद्धाचरणे तु स्मार्तं प्रायश्चित्तम् ।

आहिताग्नेरार्त्यश्रुकरणेऽग्नये व्रतभृते(१) ॥ २८ ॥

आहिताग्निग्रहणं विहृताग्निप्रज्ञप्त्यर्थम् । आर्त्तिग्रहणाच्च नानन्दाश्रुकरणे ॥ २८ ॥

सꣳसर्गे नाद्रियेत ॥ २९ ॥

अग्न्यन्तरसंसर्गेऽनादरः ॥ २९ ॥

(२)अनुक्रोशेऽग्नये सꣳसर्गायाहुतिर्वा ग्रामाग्निना चेत् ॥३०॥

अथ यद्यनुक्रोशो भवति तदाग्नये संसर्गाय इष्टिर्भवति । आहुतिर्वेति विकल्पः । एतच्च ग्रामाग्निना संसर्गे भवति ॥ ३० ॥

अग्नये विविचये मिथश्चेत् ॥ ३१ ॥

मिथः परस्परतः । परस्परतो यदि संसर्गो भवति तदाग्नये विविचये इष्टिर्भवति, आहुतिरनादरो वेति(३) सर्वं ह्येतदत्र पठ्यते । हृदयविलेखे इष्ट्याहुत्योर्विकल्पः ॥ ३१ ॥

अग्नये संवर्गाय प्रदव्याच्चेत् ॥ ३२ ॥

प्रदव्यो दावाग्निः । दावाग्निना चेद् संसर्गस्तदाप्यनादरः । हृदयविलेखे अग्नये संवर्गायेष्टिराहुतिर्वा ॥ ३२ ॥

अग्नयेऽप्सुमते वैद्युताच्चेत् ॥ ३३ ॥

वैद्युतेन चेदग्निसंसर्गः तदाप्यनादरः । हृदयविलेखेऽग्नयेऽप्सुमते इष्टिराहुतिर्वा ॥ ३३ ॥

अग्नये शुचयेऽशुच्यायतनाच्चेत् ॥ ३४ ॥

(४)अशुच्यायतनाग्निना चेत् संसर्गः अग्नये शुचये इष्टिराहुतिर्वा भवति । न ह्यत्रानादरः पठ्यते ॥ ३४ ॥

भार्यागोषु यमजनने मारुतं त्रयोदशकपालं निर्वपेत्(५)॥३५॥

यजनीयेऽहन्यन्वारम्भणीयापूर्वकम् ॥ ३५ ॥

---

( १ ) इयमपीष्टिरष्टाकपालपुरोडाशा अत्येऽहनि रोदनाश्रुकरणे भवति ।

( २ ) अनुक्रोशे हृदयसन्तापे ।

( ३ ) हृद्विलेखाभावे त्वनादर एव ।

( ४ ) अशुचिः अपवित्रं चाण्डालादिगृहमायतनं स्थानं यस्य तेन । "तदाहुः यस्याग्नयोऽमेध्यैरग्निभिः सꣳसृज्येरन्०" ( श० ब्रा० १२-४-४-५ ) इत्यादिश्रुतेः । ( ५ ) भार्यायाः शुद्धौ शब्दपरिमाणादत्रैन्द्राग्नधर्मा भवन्ति ( का० श्रौ० ४-३-८ ) ।

**(१)गेहदाहेऽग्नये क्षामवते पुरोडाशः ॥ ३६ ॥**

पुरोडाशो भवति ॥ ३६ ॥

**चन्द्रमसाभ्युदित आमावास्ये पुरस्तात्तद्व्रतः स्यात्(२) ॥ ३७ ॥**

आमावास्ये प्रक्रान्ते यदि चन्द्रमा अभ्युदेति, तदा तद्व्रत एव भवति, नान्यद् व्रतयति ॥ ३७ ॥

**दधि हविरातञ्चनं निदध्यात् ॥ ३८ ॥**

(३)उत्पाद्यमानस्य हविषः ॥ ३८ ॥

**संसृज्य वत्सान्पुनरपाकरणम्(४) ॥ ३९ ॥**

कर्त्तव्यम् । एवं हि श्रूयते—"स यद्यगृहीतं हविरभ्युदियात्प्रज्ञात·मेव तदेवैव व्रतचर्या यत्पूर्वेद्युर्दुग्धं दधि हविरातञ्चनं तत्कुर्वन्ति प्रति· प्रमुञ्चन्ति वत्सांस्तान्पुनरपाकुर्वन्ति" ( श०ब्रा० ११–१–४–१ )इति॥३९॥

**निरुप्ते व्रताशक्तौ वा त्रेधं तण्डुलान्विभज्य मध्य· मानग्नये दात्रे स्थविष्ठानिन्द्राय प्रदात्रे दधनि चरुमणि· ष्ठान्विष्णवे शिपिविष्टाय शृते चरुम् ॥ ४० ॥**

निरुप्ते चेत् हविष्यभ्युदयपरिज्ञानं भवति व्रतस्य वा अशक्ति· रनिरुप्तेऽपि तदा त्रेधं तण्डुलान्विभज्य मध्यमानग्नये दात्रे पुरोडाशं कुर्यात्, स्थविष्ठानिन्द्राय प्रदात्रे दधनि चरुं कुर्यात्, अणिष्ठान्विष्णवे

---

( १ ) यजमानस्य निवासगृहदाहे अग्निगृहदाहे वा ।

( २ ) दर्शेष्टिप्रारम्भानन्तरं पूर्वस्यां दिशि चन्द्रोदये ज्ञाते सति यज· मानः तस्मिन्दिने अशनं न कुर्यादित्यर्थः । तत्र निर्वापात्प्राक् ज्ञाते पूर्व· कृतपदार्थानामासादितपात्राणामुत्सर्गः वत्सापाकरणादेः पुनर्विधानात् । पिण्डपितृयज्ञात्प्राक्चेद्भ्रान्त्योपक्रान्तं ज्ञायते तदोपोष्य स्वकाले द्वितीयेऽहनि पिण्डपितृयज्ञव्रतादिकं कुर्यादिति देवयाज्ञिकाः ।

(३) यत्पूर्वेद्युः सायंदोहेन दध्युत्पादितं तद् हविरातञ्चनं हविषोऽद्य करिष्यमाणस्य सायंदोहस्यातञ्चनार्थं सुगुप्ते देशे स्थापयेदिति देव· याज्ञिकाः ।

( ४ ) पूर्वेद्युः रात्रौ सायंदोहानन्तरं प्रातर्दोहाय अपाकृतान् वत्सान् स्वस्वमातृभिः संयोज्य पुनः सायंदोहार्थमपराह्णेऽपाकुर्यात् । तत्र पि· ण्डपितृयज्ञं कृत्वा कार्यम् । तस्य पूर्वेद्युरकाले कृतस्याकृतरूपत्वात् । अन्वाधानं कृतमेव ।

शिपिविष्टाय शृते चरुम् । "यद्यु व्रतचर्यां वा नोदाशङ्सेत गृहीतं वा हविरभ्युदियात्" (श. ब्रा. ११-१-४-२) इति प्रकृत्य सर्वमतच्छ्रूयते इति ॥ ४० ॥

इदानीमिदं विचार्यते—किं तदेवेदं कर्म उतान्यत्कर्मान्तरमिति । किं तावत्प्राप्तम् । सूत्रेणैवोपक्रमः—

संस्कारात्साम्नाय्यम् ॥ ४१ ॥

तदेवेदं कर्मेति । कुत एतत् ? संस्कारात्पूर्वं यागायोपकल्पितं संस्कृतं द्रव्यं तदेवेदमिति । तत्साध्यत्वाच्च तदेव कर्मेति ॥ ४१ ॥

एवं प्राप्त आह—

अन्यद्वेज्यायोगात् ॥ ४२ ॥

तस्मादन्यदेव वा कर्मान्तरमिदं न तदेव । कुत एतत्, इज्यायोगात् । इज्यान्तरयोगो ह्यत्रोपलभ्यते, "अग्निर्दाता इन्द्रः प्रदाता विष्णुः शिपिविष्ट" इति । तथा—"दधनि चरुःशृते चरुम्" इति अन्यदेव यागान्तरम्, ततोऽन्यदिति । एवं पक्षद्वयोपन्यासे किं कर्मान्तरता युक्ता उत तस्यैव विकार इति । तस्यैव विकार इति युक्तरूपता । तदेव हि प्रक्रान्तं कर्म प्रत्यभिज्ञायते, न चान्यत् कर्मान्तरमत्रारब्धम् । तस्मात्तस्यैव कर्मणो विकार इति ॥ ४२ ॥

(१)तस्य तण्डुलापनयो वचनात्(२) ॥ ४३ ॥

तण्डुलरुपलक्षणं दध्नः पयसश्च । पूर्वं देवताभ्योपनीय देवतान्तरसम्बन्धो नैमित्तिक इति प्रयोजनत्वे सति कर्मणो गुणकामानां प्रवृत्तिः पुनरपि च तत्कर्मविहितमेव । "अथ यदेव नोदियादथोपवसेत्" ( श० ब्रा० ११-१-४-४ ) इति ॥ ४३ ॥

(३)प्रकृत्या पूर्वम्(४) ॥ ४४ ॥

असान्नाय्यगुणकं प्रकृत्या स्वरूपेणैव भवति दधिपयसोरभावात् ॥४४॥

---

( १ ) कर्मान्तरत्वेऽन्यदेवतार्थमुपक्लृप्तं हविस्त्रयमन्यदेवताके कर्मणि यागसाधनं भवितुं नार्हतीत्यताऽयुक्तम् ।

( २ ) प्राकृतकर्मणो वचनात्तण्डुलानां प्राकृतदेवताभ्योऽपच्छेदो-देवतान्तरसंयोगश्च । वचनं हि किं न कुर्यात् ।

( ३ ) द्रव्यान्यत्वे देवतान्यत्वे च कर्मान्यत्वं दृ यत्र आद्ये हविषि पुरोडाशे द्रव्यान्यत्वाभावस्तत्र कथमित्यत आह—

( ४ ) प्रथमं हविः पुरोडाशलक्षणं प्राकृतमेव न प्रायश्चित्तरूपं कर्मान्तरं यतो द्रव्यं तदेव पुरोडाशरूपं, देवताप्यग्निः सैवेति ।

(१)सर्वं वा निमित्तात् ॥ ४५ ॥

'वा' शब्दः पक्षव्यावृत्तौ। सर्वं वा (२)क्रियते पूर्वमपि हि निमित्तं भवति प्रक्रान्तेऽभ्युदय इति(३) ॥ ४५ ॥

पश्चादभ्युदृदृष्ट आमावास्येनेष्ट्वा त८हवैव सर्वा वाऽग्नये पथिकृत इन्द्राय वृत्रघ्न एकादशकपालो वैश्वानरश्च॥४६॥

"सोयामावास्येति मन्यमान उपवसत्यथैष पश्चाद्दृदृश" ( श० ब्रा० ११-१-५-४ ) इति प्रकृत्यैतच्छ्रूयते । तद्दर्शनं च शास्त्रतः प्रतिपद्येव भवति । भ्रान्त्या प्रतिपद्युपवासोपक्रमे एतत(४) ॥ ४६ ॥

(५)त्रीषुकं धनुर्दक्षिणा ॥ ४७ ॥

त्रिभिरिषुभिरुपेतं धनुर्दक्षिणा ॥ ४७ ॥

(६)दण्डो वा ॥ ४८ ॥

वेति विकल्पः ॥ ४८ ॥

प्राकृताश्चेच्छन् ॥ ४९ ॥

एतानेव हविर्विशेषान्प्रकृत्य याः श्रूयन्ते, ताश्चेच्छया ददाति । यथाऽश्वमेधे पथिकृतः शतमानं वैश्वानराय कृष्णं वासः इन्द्राय वृत्रघ्ने चोदकेनान्वाहार्यः ॥ ४९ ॥

अनभ्युदृदृष्टस्यापि पशुकामस्य ॥ ५० ॥

इयमिष्टिर्भवति(७) ॥ ५० ॥

इति पञ्चविंशेऽध्याये चतुर्थी कण्डिका ॥

---

( १ ) अग्नये दात्र इति विशिष्टश्रवणेऽपि विशेषणमात्रं तत् न तु स्वरूपभेदापादकम् इति प्राप्त आह— ( २ ) 'विक्रियते' इ०पा० ।

( ३ ) तत्र "विशये लौकिकम्" ( का० श्रौ० ४-३-७ ) इति ।

( ४ ) आमावास्यं चन्द्रमसेति पदद्वयम् ( का० श्रौ० २५-४-३७ ) सूत्रतोऽनुवर्तते । आमावास्ये उपक्रान्ते पश्चादपरस्यां दिशि चन्द्रमसः अभ्युदये ज्ञाते भ्रान्त्या प्रतिपद्यग्न्यन्वाधानादिकर्मोपक्रमे कृते तस्मिन्नेवाहनि पिण्डपितृयज्ञवर्जितेन सद्य एवामावास्येन दर्शेनेष्टिं तस्मिन्नेव दिने श्वो वा द्वितीयायामन्यामिष्टिं कुर्यात् । यत्राग्नये पथिकृते अष्टाकपालः पुरोडाशः प्रथमो भवति, इन्द्राय वृत्रघ्न एकादशकपालो द्वितीयः, अग्नये वैश्वानराय द्वादशकपालस्तृतीय इति

( ५ ) त्रिहविष्कायामिष्टौ इति शेषः । ( ६ ) वंशमयो दण्डः ।

( ७ ) "दण्डं दक्षिणां ददाति । दण्डेन वै श्वानं बाधन्ते तदेतमेवैत-

उद्वास्यमानं चेत्कपालं नश्येदाश्विनः ॥ १ ॥

उद्वास्यमानकपालनाशे आश्विनो द्विकपालः पुरोडाशः कर्त्तव्यः। स च परतन्त्रमध्यपाती तदङ्गत्वेन भवति। अत्र पशुपुरोडाशन्यायः। यान्यङ्गिनोऽङ्गानि प्रयुक्तानि तानीहापि प्रसज्यन्ते। पात्राणि च यान्यनपवृत्तानि वज्रादीनि तान्यप्यत्र प्रयुज्यन्ते। यानि पुनः कृष्णाजिनोलूखलमुसलादीनि निवृत्तप्रयोजनानि तेषां पुनः प्रोक्षणादिसंस्कारः कर्त्तव्यः, अपवृत्तत्वात्। शृतावदानं प्राशित्रहरणम् इडापात्री च संस्कृतान्येव विद्यन्ते। अनसि ग्रहणपक्षे अनाऽप्यासाद्यते। धर्माश्चास्य धूरीषालम्भनादयः क्रियन्ते, पूर्वधर्माणामपवृत्तत्वात्। तदपवर्गश्च तत्कार्याभिनिर्वृत्तेः। अग्नीन्धनं त्वङ्गप्रधानार्थत्वादपकृष्यते। अङ्गप्रधानार्थता चास्याहवनीयसंस्कारकत्वात्। 'यदाहवनीये जुहोति' इत्यनेनाहवनीयस्याङ्गप्रधानार्थता। एवं च कृत्वोपवाजनसम्मार्गावपि कर्त्तव्यौ। अनेन प्रकारेणेडान्त आश्विनः सान्निपातिभिरङ्गैः कार्यः। यानि पुनरारादुपकारकाण्याघारप्रयाजाज्यभागादीनि तेषां च सकृदेव क्रिया। अन्ते ह्यवयवे तेषां प्रधानाभिसम्बन्ध इष्यते। न हि यद्यदङ्गैः क्रियते तत्तदेव प्रधानेनाभिसम्बन्धमुपयाति। यदाऽङ्गं न तदा प्रधानम्, यदा प्रधानं न तदाङ्गमिति। तस्मादन्त्येऽवयवेऽङ्गापूर्वसम्बन्धः, आम्नानसामर्थ्यात्। अतः सकृत्क्रिया आघारादीनाम्। तेन मुख्यसन्निधिन्यायादङ्गि सन्निधावेवानुष्ठानमिति। अनेन न्यायेन कर्ममध्ये या इष्टयः व्रातपतीयाद्याश्च आपतन्ति ता अनुष्ठेया इति ॥ १ ॥

सायंप्रातर्दोहार्त्तावैन्द्रं पञ्चशरावमोदनं निर्वपेत् पुरोडाशं वा ॥ २ ॥

एवं हि श्रूयते—"यस्योभयꣳ हविरार्त्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेत्' इति। सान्नाय्यं हि प्रकृत्यैतच्छ्रूयते। तेन न हविर्मात्रार्त्तौ। पञ्चशराव ओदनः, पुरोडाशो वेति विकल्पः ॥२॥

इदानीमिदं विचार्यते—किमुभयार्त्तौ पञ्चशराव उतान्यतरार्त्तावपीति। किं तावद् युक्तम्? उभयार्त्ताविति। उभयोर्हि श्रूयते—"यस्योभयꣳ हविरार्त्तिमार्च्छेत्" इत्येवं प्राप्त आह—

भेदेनाप्युपपातात् ॥ ३ ॥

---

द्वाधते यद्दण्डं दक्षिणां ददात्येषा न्वादिष्टा दक्षिणा दद्यात्वेवास्यामप्यन्यथाऽइतरा दक्षिणास्तासां यत्सम्पद्येत सा हैवा पशव्येष्टिस्तयाप्यनभ्युद्दृष्टो यजेतैव" (श० ब्रा० ११-१-५-११) इतिश्रुतेः।

अन्यतरार्त्तावपि भवति पञ्चशरावः । हविर्विशिष्टार्त्तिनिमित्त त- श्रोभयशब्देन विशेष्यमाणे वाक्यं भिद्येत । तस्मादन्यतरार्त्तावपि भवति ॥ ३ ॥

इदानीमिदं विचार्यते—पञ्चशरावः किं प्रतिनिधिः उत निमित्ते नैमित्तिकं प्रायश्चित्तमिति । किं तावत्प्राप्तं सूत्रेणैव पक्षः—

**तत्प्रतिनिधिः ॥ ४ ॥**

तस्य सान्नाय्यस्य विनष्टस्य सतः प्रतिनिधिरयम् । द्रव्ये नष्टे द्रव्या- न्तरं विधीयमानं तत्कार्यं एव भवति । तस्मात्प्रतिनिधिरिति ॥ ४ ॥

**प्रायश्चित्तं वा देवताश्रुतेः ॥ ५ ॥**

'वा' शब्दः पक्षान्तरपरिग्रहे । प्रायश्चित्तमेतन्न प्रतिनिधिः । कुत एतत् ? देवताश्रुतेः । देवता ह्यत्र श्रूयते—'ऐन्द्रं पञ्चशरावम्' इति । देवतासम्बन्धाद्यागविधानम् । ननु 'ऐन्द्रम्' इत्यनुवादः ततश्च द्रव्य- मात्रविधानम् । नेत्युच्यते—अनुवादमात्रं ह्यनर्थकं भवति । अपि चा नुवादोऽसमञ्जस एव, पक्षे माहेन्द्रस्यापि सान्नाय्यदेवतात्वात् । तस्मा- त्प्रायश्चित्तमिति(१) ॥ ५ ॥

**चरू सान्नाय्यालाभे(२) ॥ ६ ॥**

आर्त्तौ सत्यां सान्नाय्यालाभे सति चरू भवतः ॥ ६ ॥

**सायं दोहस्थाने वा पुरोडाशः ॥ ७ ॥**

चरुर्वेति विकल्पः(३) ॥ ७ ॥

**असान्नाय्यवद्वा ॥ ८ ॥**

अथवा यादृशमसान्नाय्यवदामावास्यं तादृगेव(४) कुर्यात् । वा श- ब्दो विकल्पार्थः ॥ ८ ॥

**दुष्टस्य हविषोऽप्स्ववहरणम् ॥ ९ ॥**

(५)"दुष्टं हविरप्स्ववहरेत्" इति श्रुतिः ॥ ९ ॥

---

(१) तेन नैमित्तिकानुष्ठानानन्तरं पुनः सान्नाय्यमुत्पाद्य यागः क- र्तव्य इति दैवयाज्ञिकाः ।

(२) वाचनिकः प्रतिनिधिरयम् । प्रधानयागावदानमात्रपर्याप्तस्य सान्नाय्यस्यालाभे सायम्प्रातर्दोहयोः स्थाने चरू भवतः ।

(३) अष्टाकपाल ऐन्द्रः पुरोडाश आग्नेयविकारत्वात् ।

(४) आग्नेयःपुरोडाशो वैष्णव उपांशुयाग ऐन्द्राग्नः पुरोडाश इति ।

(५) केशकीटादिभिः सह पाकादिना, द्वादशमलोपघातादिना, अस्पृश्यस्पर्श-बिडालाद्यवघ्राणादिना वा दुष्टम् ।

उष्णे वा भस्मनि ॥ १० ॥

अवहरणम् ॥ १० ॥

शिष्टभक्षप्रतिषिद्धं दुष्टम् ॥ ११ ॥

मन्वादिभिर्यदभक्ष्यमुक्तं तद्दुष्टम् ॥ ११ ॥

एकस्यानिष्टे तदुक्तम् ॥ १२ ॥

हविर्गणे मानसादपचारात् यद्येकेन यागो न कृतः स्यात् तदा कर्त्तव्य इति तदुक्तम् ॥ १२ ॥

सान्निपातिकानि वा तस्य ॥ १३ ॥

(१)सान्निपातिकान्यङ्गानि कर्त्तव्यानि संस्पृशीनि ॥ १३ ॥

इष्टं चेदाज्येन शेषम् ॥ १४ ॥

इष्टं चेद्धविर्दुष्येत स्विष्टकृदाज्येन कर्त्तव्यम् ॥ १४ ॥

(२)हविरन्तरणे प्राक्प्रधानेज्यायाः स्मृत्वान्वाहरेत्॥१५॥

यदि नाम हविरन्तरितं न गृहीतमेव तदा प्राक्प्रधानेज्यायाः स्मृत्वाऽन्वाहरेत्, यागक्रमानुग्रहात् ॥ १५ ॥

प्राग्वा समिष्टयजुषः स꣡ꣳस्थाश्रुतेः ॥ १६ ॥

समिष्टयजुषो वा पूर्वं स्मृत्वाऽन्वाहरेत् न प्रधानेज्याया एव । कुत एतत्? संस्थाश्रुतेः-"अन्तो हि यज्ञस्य समिष्टयजुः" इति । यावदपि अन्तो न भवति तावदप्यन्वाहरणं युक्तरूपमेवेति ॥ १६ ॥

हुतं चेत्स꣡ꣳस्थाप्य तदेव पुनर्निर्वपेत् ॥ १७ ॥

हुतं चेत्समिष्टयजुः संस्थाप्य तत्कर्म तदेव पुनर्निर्वपेत्(३) ॥१७॥

देवताविपर्यासे (४)पुष्कलं दत्त्वा यथानुपूर्व्यकरणम् ॥१७॥

---

(१) सान्निपातिकान्येव कर्तव्यानि नारादुपकारकाणि । न ह्यत्र कालभेदात् कर्मभेदः, येन तन्त्रभेदादारादुपकारकाण्यपि पुनः क्रियन्ते । क्रमान्यथात्वमात्रनिमित्तमनादिष्टं केवलं हूयते ।

(२) बहूनां मध्य एकस्याग्रहणं हविषोऽन्तरणम् । यदि एकस्य हविषो भ्रान्त्या विस्मरणं तदा प्रधानयागात्पूर्व तत् स्मृत्वा अनादिष्टपूर्वकं ग्रहणादिभिः सान्निपातिकैः संस्कृत्य यागार्थं वेदिमध्य आसादनाय पश्चादाहरेत् ।

(३) तस्मिन्नेव विहारेऽन्यन्वाधानादि कर्मापवर्गान्तं कुर्यात् ।

(४) यज्ञपार्श्वे-

अष्टमुष्टि भवेत्किञ्चित्किञ्चिदष्टौ च पुष्कलम् । इति ।

आग्नेयस्यावदानक्रमे यत् अग्नीषोमोच्चारणं स देवताविपर्यासः । तत्र-पुष्कलं दत्त्वा यथानुपूर्व्यकरणम् । पुष्कलशब्दः सुवर्णपरिमाण-वाचीति केचित् । अपरे तु सारद्रव्यमात्रमाहुः ॥ १८ ॥

**अवदानयाज्यानुवाक्यासु च ॥ १९ ॥**

विपर्यासे एतदेव भवति । आग्नेयस्यावदानक्रमे यदग्नीषोमीयस्या-वदानग्रहणं सोऽवदानविपर्यासः ॥ १९ ॥

**(१)स्रुच्ये दुष्टे पुनर्ग्रहणम् ॥ २० ॥**

उत्तरार्थमिदमुच्यते ॥ २० ॥

**ध्रुवाया वा ततो यज्ञः प्रभवतीति श्रुतेः ॥ २१ ॥**

ध्रुवाया वा ग्रहीतव्यम् । वा शब्दो विकल्पार्थः । 'ततो यज्ञः प्रभ-वति' इति वाक्यैकदेशोपन्यासः ॥ २१ ॥

**अदुष्टाद्वा नयनमेके ॥ २२ ॥**

एक आचार्याः स्रुच्यादेवादुष्टादानयनमिच्छन्ति ॥ २२ ॥

तस्मिंश्च पक्षे—

**(२)नोपभृतो ध्रुवायाम् ॥ २३ ॥**

ग्रहीतव्यम् ॥ २३ ॥

**(३)आज्यस्थालीदोषे ऽन्यत् ॥ २४ ॥**

---

धेनुर्वा यदि वानड्वान्मेषकः द्वादशापि वा ।
देवतानां विपर्यासे एतत्पुष्कलमुच्यते । इति ।
धान्यमुष्टिचतुःषष्टिरितरेषु च पुष्कलम् । इति ।
ग्रासमात्रा भवेद्भिक्षा पुष्कलं च चतुर्गुणम् । इति ।

तेन देवताविपर्यासे 'धेनुर्वा' इत्यादिकमेव पुष्कलं, इतरेषु च पुष्कलदाननिमित्तेषु यथाशक्ति व्यवस्था—समर्थस्य चतुःषष्टिमुष्टिपरिमि-तधान्येन पुष्कलम् , असमर्थस्य तु चतुर्ग्रासपरिमितेन। एतेन यत् सुव-र्णमेकीयं यच्च सारद्रव्यमात्रं पुष्कलमिति, तदुभयं निरस्तम् ।

( १ ) स्रुचि भवं स्रुच्यं तस्मिन् जुहूपभृद्ध्रुवास्थे आज्ये दुष्टे पुनर-न्यस्य ग्रहणम् । स्थालातो "धाम नाम" इति मन्त्रेण यथावहितं कार्यम् ।

( २ ) जुहूस्थे दुष्टे ध्रुवाया उपभृतो वा ग्रहणम् , उपभृद्गते दुष्टे जौहवाद् ध्रौवाद्वा, ध्रौवे तु दुष्टे जुह्वा एव ग्रहणं नोपभृतः।

( ३ ) आज्यस्थालीशब्देन तत्स्थमाज्यमुच्यते । अमेध्यातिपाते श्वाद्यवलीढे च । न्यायप्राप्तमेवैतदुत्तरविवक्षयोच्यते ।

स्थालीदुष्टेऽन्यद् ग्रहीतव्यम् । न्याय एवायम् ॥ २४ ॥

**अदोषो वा न वै देवाः कस्माचन बीभत्सन्त इति श्रुतेः ॥ २५ ॥**

अदोषो वेति विरुद्धम् पूर्वं ह्युक्तं "दुष्टस्य हविषोऽप्स्ववहरणम्" इति, तस्माददोषो वेत्यन्यथा व्याख्येयम् । दुष्टेन हविषा यागाभिनिर्वृत्तौ कृतायां पश्चाद्दोषसंवित्तौ तत्कृतमेव कर्म अदुष्टेनैव द्रव्येण न पुनरावृत्तिः ॥ २५ ॥

**अधिकं निरूप्य तच्च यजेत् ॥ २६ ॥**

मानसादपचारादधिके हविषि गृहीते तेनापि यागः कर्त्तव्यः सङ्कल्पदोषपरिहाराय ॥ २६ ॥

एवं स्थित उच्यते—

**न वा चोदितत्वात् ॥ २७ ॥**

न वा तेन यागः कर्त्तव्यः न ह्यत्र चोदनास्तीति ॥ २७ ॥

**ऐतु राजा वरुणो रेवतीभिरस्मिन्स्थाने तिष्ठतु मोदमानः अग्निष्ठा अस्माकं वीरा मा परासेचि मत्पय इति प्रणीता स्कन्ना अभिमृशेत(१) ॥ २८ ॥**

**भूमिर्भूमिमवाद्गान्माता मातरमप्यगात् भूयाय पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति मृन्मयं भिन्नमभिमृशेत(२) ॥ २९ ॥**

**य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः सन्धाता सन्धिं मघवा पुरूवसुरिष्कर्त्ता विह्रुतं पुनरिति च घर्म्यम् (३) ॥ ३०**

घर्मं मृन्मयं घर्म्यं भिन्नमभिमृशेत् । चशब्दादेतेनैव मन्त्रेण । धर्मभेद एवायमपरो विशेषः ॥ ३० ॥

इति पञ्चविंशेऽध्याये पञ्चमी कण्डिका ॥

---

( १ ) भूमावन्यत्र वा पतिता अपोऽभिमृशेत् ।

( २ ) स्थाल्यादि अभिमृशेत् ।

( ३ ) घर्म्यं महावीरपिन्वनरौहिणकपालादि ।

परमेष्ठ्यादींश्च चतुस्त्रिꣳशतं जुहोति ॥ १ ॥

"परमेष्ठ्यभिधीतः" ( वा. सं. ८—५४ ) इत्येवमादिव्याहृतीनां चतुस्त्रिंशतं जुहोति । तच्चाध्वर्युरादिष्टत्वात् । अनादेशे हि ब्रह्मणो विधानम् "ब्रह्मा प्रायश्चित्तानि जुहुयादनादिष्टानि" ( का० श्रौ० २५-१४-३५ ) इत्यनेन । अतश्च (१)वक्ष्यमाणा कालाहुतिरप्यत्र भवति कर्तृभेदादिति ॥ १ ॥

घर्मधुग्ध्वाले चादोहे च ॥ २ ॥

घर्मधुग्ध्वाले ह्वलनं चलनम् आत्यन्तिके चलने मरण इत्यर्थः । तस्या स्वाऽदोहे च ॥ २ ॥

उदीच्या दोहस्थानेऽन्यस्याः(२) ॥ ३ ॥

अन्यस्या दोहस्थाने उदीच्या गोऽर्यवस्थितायाः ॥ ३ ॥

शालाया वा पुरस्तात्प्राच्याः ॥ ४ ॥

अवस्थितायाः ॥ ४ ॥

पुच्छकाण्डाद्दक्षिणेऽस्थानि हुत्वा दोहयेत्(३) ॥ ५ ॥

तामेव गां दोहयति । सा यदि घर्मदुघाह्वलेदित्युपक्रम्य सर्वमेतच्छ्रूयते ॥ ५ ॥

पृषदाज्यस्कन्दने चैके(४) ॥ ६ ॥

चतुस्त्रिंशद्धोममिच्छन्ति । एकीयग्रहणाद्विकल्पः ॥ ६ ॥

सोमेज्योपपाते चैकैकां यथाकालꣳ हुत्वा यज्ञस्य दोह इति वाचयति ॥ ७ ॥

(५)सोमेज्यायामुपपातः सोमेज्योपपातः । न सोमयागोपपातः ।

---

( १ ) "सोमेज्योपपाते चैकैकां यथाकालं हुत्वा यज्ञस्य दोह इति वाचयति" "आग्नीध्रीये सुत्यासु" (का०श्रौ०२५-६-७, ८) इत्युक्तेत्यर्थः।

( २ ) घर्मदुघाया दोहनप्रदेशे उदङ्मुख्या अवस्थितायाः अन्यस्या गोः ।

( ३ ) पुच्छाद्दक्षिणविभागे उच्चैरस्थनि होमाधिकरणे "परमेष्ठ्यभिधीतः०" ( वा० सं० ८-५४ ) इत्याद्याश्चतुस्त्रिंशदाज्याहुतीः हुत्वा तामन्यां गां दोहयेत् ।

( ४ ) पृषदाज्यस्य स्थालीस्थस्य स्रुक्स्थस्य वा "अयाविष्ठा" ( का० श्रौ० २५-६-१० ) इति होमः ।

( ५ ) 'सोमेज्याया उपपातः सोमेज्योपपातः' इ० पा० ।

एवं "यदि किञ्चिदापद्येत" ( श० ब्रा० १२-६-१-६, ३६ ) इति श्रूयते। (१)तत्र यथाकालमेकैकामाहुतिं हुत्वा "यज्ञस्य दोहः०" ( वा० सं० ८-६२ ) इति वाचयति। यथाकालग्रहणेन च "अथ यदि पण्यमानः" "अथ यदि क्रयायोपोत्थित" ( श० ब्रा०१२-६-१-१०, ६ ) इत्येवमादि गृह्यते, एवमेव हि श्रूयत इति। अत्र च ब्रह्मणः कर्तृत्वम्। "ता ब्रह्मैव जुहुयात्" ( श० ब्रा० १२-६-१-३८ ) इति। ननु च सूत्रकारेण नैवैतदभिहितम्—'यथाकालमेकैकां ब्रह्मा जुहोति' इति। नैवैतन्नोक्तम्, उक्तमेव—"ब्रह्मा प्रायश्चित्तानि जुहुयादनादिष्टानि" (का० श्रौ० २५-१४-३५) इति। कथमयमनादेश इति चेत् ? यत्र नाम निमित्तादेशपूर्वकं नैमित्तिकमादिश्यते यथा—"पृषदाज्यस्कन्दने जुहुयादयाविष्टा जनयन्" (का० श्रौ० २५-६-१०) इति, "पृषदाज्यस्कन्दनेऽभिमृशेत्" इति च स आदेशः। इह पुनर्नैवं निमित्तादेशपूर्वको नैमित्तिकादेशः। इह हि "पण्यमानः किंचिदापद्येत" इति, "अभिषूयमाणः किंचिदापद्येत" ( श० ब्रा० १२-६-१-१०, २१ ) इति च अनिमित्तादेशपूर्वको नैमित्तिकादेशः, तस्मादनादिष्टसूत्रेण एतान्यपि गृह्यन्ते। तथा चैकैकहोममेवाङ्गीकृत्य "ता ब्रह्मैव जुहुयात्" ( श० ब्रा० १२-६-१-३८ ) इत्युक्तम्। चतुस्त्रिंशद्धोमस्तु आदेश एवेत्यध्वर्युकर्तृकः ॥ ७ ॥

आग्नीध्रीये सुत्यासु(२) ॥ ८ ॥

सुत्यासु वर्त्तमानासु कालाहुतिः आग्नीध्रीये। आहवनीयापवादोऽयम्। एवं हि श्रूयते—"यदि दीक्षोपसत्स्वाहवनीये यदि प्रसुत आग्नीध्रे" ( श० ब्रा० १२-६-१-२ ) इति ॥ ८ ॥

आपवस्व हिरण्यवदित्युद्गातृहोमो ध्वाङ्क्षारोहणे यूपस्य ॥ ९ ॥

"आपवस्व०" ( वा० सं० ८-६३ ) इति काकारोहणे यूपस्य जुहुयादाहवनीये ॥ ९ ॥

पृषदाज्यस्कन्दने जुहुयादयाविष्टा जनयन्कर्वराणि स हि घृणिरुरुर्वराय गातुः स प्रत्युदैद्धरुणो मध्वो अ·

---

( १ ) परमेष्ठ्यादि चतुस्त्रिंशदाहुतीनां मध्ये।

( २ ) कालाहुतयः दीक्षासूपसत्सु चापररात्र ऋत्विजः प्रबोधयन्ति इत्येतस्मात्प्राक् आहवनीये होतव्याः ऋत्विक्प्रबोधनादारभ्य सुत्याया·माग्नीध्रीये।

मꣳ स्वायां यत्तन्वां तनूं मैरयनः स्वाहेति(१) ॥ १० ॥

घर्मधुक् शार्दूलहता चेत् स्पृतीर्जुहुयात् चन्द्रात्ते मन स्पृणोमि स्वाहा, सूर्यात्ते चक्षु स्पृणोमि स्वाहा, वातात्ते प्राणान्स्पृणोमि स्वाहा, दिग्भ्यस्ते श्रोत्रꣳ स्पृणोमि स्वाहा, अद्भ्यस्ते लोहितꣳ स्पृणोमि स्वाहा, पृथिव्यै ते शरीरꣳ स्पृणोमि स्वाहेति ॥ ११ ॥

शार्दूलो व्याघ्रः, तन्निपातने स्पृतीराहुतीर्जुहोति(२) 'चन्द्रात्ते' इति प्रतिमन्त्रम् ॥ ११ ॥

हुत्वान्यामाजतेति ब्रूयात् ॥ १२ ॥

अध्वर्युरेव 'क्त्वा'प्रत्ययोपदेशात् ॥ १२ ॥

स्वयꣳहोम्यशक्ता उपासीत ॥ १३ ॥

स्वयंहोमी यजमानः, तदशक्तौ समीप आसीत(३) ॥ १३ ॥

उपसर्पणाशक्तावासनमधः ॥ १४ ॥

यदि चंक्रमणेऽप्यशक्तस्तदासीताधः(४) ॥ १४ ॥

इति पञ्चविंशेऽध्याये षष्ठी कण्डिका ।

---

सायमाहुत्याꣳ हुतायां चेद् दुर्बलः स्यात्तदैव प्रातराहुतिस्तत्सꣳस्थाश्रुतेरग्निहोत्रस्य ॥ १ ॥

यदि सायमाहुत्यां हुतायां यजमानो दुर्बलो भवति प्रातराहुतिकालं यावन्न जीवतीत्याशङ्क्यते तदा तस्मिन्नेव काले प्रातराहुतिर्देया ।

---

( १ ) अध्वर्युराहवनीये सकृद्गृहीतमाज्यं जुहुयात् । चतुस्त्रिंशद्धोमश्च विकल्पेन भवति, अयं तु नित्यं भवति ।

( २ ) "तस्माऽउ हैतदुवाच । स्पृतीर्हुत्वान्यामाजतेति ब्रूतात्सा ते सम्राड्दुघा स्यादिति" (श० ब्रा० ११-८-४-६) इति श्रुतेः ।

( ३ ) अन्येन होमे क्रियमाणे अग्निसमीपे आसीत ।

( ४ ) अग्निसमीपे गमनाशक्तौ खट्वादेरवत्तीर्य अधः भूमौ आसति खट्वादिसमीप एव । द्रव्यत्यागमात्रस्य करणासामर्थ्ये पत्नी त्यागं कुर्यात् । तस्या अप्यसामर्थ्ये नियुक्तः कश्चिदन्यस्त्यागं कुर्यात् ।

कुत एतत्? तत्संस्थाश्रुतेरग्निहोत्रस्य। 'प्रातराहुत्याᳬ हि सन्तिष्ठतेऽग्निहोत्रम्'। तद्धि प्रकृत्य 'सायं जुहोति प्रातर्जुहोति' इत्युच्यते। 'आग्नेयीं सायमाहुतिमाहुः सौरीं प्रातराहुतिम्' इति। उभयोरप्यग्निहोत्रसंज्ञा। नैते द्वे कर्मणी 'अग्निहोत्रं जुहोति' इत्येकवचननिर्देशात्। न चैकमेव कर्म शरद्वसन्ताग्रयणवत्पुनः प्रातरभ्यस्यते देवतान्यत्वात्। अन्या चान्या च देवतोभयत्रातः सायारम्भं प्रातरपवर्गमिदमेकं कर्मेति। एतदेव च अवयवमग्निहोत्रं प्रकृत्य 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति श्रूयते, 'यावज्जीवमग्निहोत्रं जुहुयात्' इति च। तस्मादवयवद्वयस्याप्येकं कार्यमित्येककर्मत्वम्। यद्येकमेव कर्म तन्त्रं किमिति न भवति? कालभेदादित्यदोषः। यथा दर्शपूर्णमासयोः कार्यैकत्वेऽपि कालभेदात् नानातन्त्रता, एवमत्रापीति। तदुक्तमाचार्येण—"आवृत्तिर्वा प्रधानकालत्वात्" ( का० श्रौ० २६-६-२७ ) इति। तथा चाह—"स यत्सायमस्तमिते जुहोति गर्भमेवैतत्सन्तमभि जुहोति गर्भᳪ सन्तमभि करोति" ( श० ब्रा० २-३-१-४ ) इति। पुनश्च-"अथ यत्प्रातरनुदिते जुहोति प्रजनयत्येवैनमेतत्सोऽयं तेजो भूत्वा विभ्राजमान उदेति" ( श० ब्रा० २-३-१-५ ) इति कार्यैकत्वमिव दर्शयति। तस्मात्साधूक्तं तत्संस्थाश्रुतेरग्निहोत्रस्येति ॥ १ ॥

## जीवेच्चेत्पुनः काले ॥ २ ॥

यदि पुनर्जीवति यजमानः काले प्रातराहुतिर्देया। नित्यानां हि निमित्तं कालो निमित्तमन्तरेण च नैमित्तिकं कृतमप्यकृतसममित्यभिप्रायः ॥ २ ॥

एवं प्राप्त आह—

## न वा कृतत्वात् ॥ ३ ॥

नैव प्रातराहुतिर्देया। कृता हि परिसमाप्तिस्तस्येति। ननु चोक्तम्—'कालो निमित्तभूतः' इति। निमित्तमन्तरेण नैमित्तिकं कृतमप्यकृतमिव भवति, तस्मात्पुनः क्रियेति? अत्रोच्यते—न प्रातर्होमस्य निमित्तं कालः। अन्यदेव हि तत्र निमित्तं सायारम्भः। अतः प्रातर्होमस्य श्रूयमाणोऽपि कालो बलादङ्गी भवति। न हि निमित्तस्यानेकत्वमिष्यते। तस्मात्कृतत्वान्न पुनः प्रातराहुतिर्देयेति ॥ ३ ॥

## पौर्णमासान्ते चामावास्यमग्निहोत्रवत् ॥ ४ ॥

तुल्यन्यायत्वात्। अधिकरणातिदेशश्चातुर्मास्यराजसूयादिष्वपि प्रदर्शनार्थः ॥ ४ ॥

हविष्येषु चेदाह्रियमाणेषु मरणं दक्षिणाग्नावे-
नान्त्सन्दहेत् ॥ ५ ॥

हविष्येषु चेद्व्रीहियवादिषु आह्रियमाणेषु पौर्णमासादौ यजमानस्य मरणं भवति दक्षिणाग्नावेनान्त्सन्दहेत् हविष्यान्। एवं हि श्रूयते—"यदधिश्रितेऽग्निहोत्रे यजमानो म्रियेत" इति प्रकृत्य "तदेवैनदभिपर्याधाय विष्पन्दयेत्" (श०ब्रा०१२-४-२-५) इति। पुनश्चाह"-एतावती सर्वस्य हविर्यज्ञस्य प्रायश्चित्तिः" ( श० ब्रा० १२-४-२-५ ) इति ॥ ५ ॥

न वाऽयुक्तत्वात् (१) ॥ ६ ॥

न वा दक्षिणाग्नौ सन्दहेत् अयुक्तो ह्याहरणकाले हविष्यग्रहणेन तेषां योगः ॥ ६ ॥

गार्हपत्ये ग्रहणादि प्रागासादनात् (२) ॥ ७ ॥

अयुक्तान्त्सन्दहेत्सन्निधानात् ॥ ७ ॥

आसादनाद्याहवनीये(३) ॥ ८ ॥

सन्दहेत्सन्निधानादेव ॥ ८ ॥

मरणान्तं भवति (४) ॥ ९ ॥

कर्मकर्त्तुरभावात् ॥ ९ ॥

(५)सꣳस्थाप्यं वा प्रक्लृप्तत्वात् ॥ १० ॥

---

( १ ) अविनियुक्तत्वात् ग्रहणेन हि हविष्याणां विनियोगो भवति, नाहरणमात्रेण।

( २ ) हविर्ग्रहणादारभ्य आसादनात्प्राक् यजमानस्य मरणे हवींषि गार्हपत्येऽग्ना दहेत्।

( ३ ) वेद्यासादनादि प्राग्यागात् यजमानस्य मरणे तान्यासादितानि हवींषि आहवनीये दहेत्।

( ४ ) तदारब्धमामावास्यं क्रियमाणं मृते यजमाने अन्तवद्भवति। कर्तुरभावात् हविः प्रतिपत्तिविधानाच्च।

( ५ ) भर्तृयज्ञस्तु—'सꣳस्थाप्यं वा प्रवृत्तत्वात्' प्रवृत्तस्य संस्थापनमेव युक्तम्। उक्तश्चाचार्येण—'दोषश्चासमाप्तौस्यात्' इति, तथा अमृताग्निहोत्रं प्रकृत्य आहवनीयस्य परिस्तरणे दक्षिणाग्रता उक्ताचार्येण—प्रागुदग्भिरुदगग्रान्दक्षिणाग्रान्करोति' इति श्रुतेरिति। श्रुतिश्च—"अथयान्यमून्युदीचीनाग्राणि तृणानि भवन्ति दक्षिणाग्राणि तानि करोति"

प्रवृत्तं हि तत्तस्यापरिसमाप्तौ दोषश्रवणात्। तदुक्तमाचार्येणापि—“दोषश्चासमाप्तौ स्यात्” ( का० श्रौ० १-४-४ ) इति। एवं पक्षद्वयोपप्रदर्शने सति य एव युक्ततरः पक्षः स एवाश्रयणीयः। कश्चासौ मरणान्तमेव भवतीति। न हि मृते यजमाने मिथ्यासङ्कल्पदोष आशङ्क्यत इति ॥ १० ॥

हविष्यवद्दौग्ध्यम् ॥ ११ ॥

(१)अग्निहोत्रहोमार्थमपि द्रव्यं हविष्यवद्दुग्ध्यम्। एतदुक्तं 'गार्हपत्ये ग्रहणादि प्रागासादनात्' इत्येवमादि ॥ ११ ॥

सन्दीपनवतीः प्रत्यग्न्यधिश्रयन्त्युखाः(२) ॥ १२ ॥

मृते यजमाने सन्दीपनवतीनामुखानां प्रत्यग्न्यधिश्रयणम्। सन्दीपनं च गोमयशुष्ककार्पासादिना। बहुवचनं मन्त्रोच्चारणार्थम् ॥ १२ ॥

सन्तापजानग्नीनादाय सशरीरा दक्षिणा गच्छन्ति ॥ १३ ॥

(३)सपिण्डाः ॥ १३ ॥

अनसा(४) ॥ १४ ॥

शरीरमुद्वहन्ति, शाखान्तरात् ॥ १४ ॥

चितानां साधयित्वा समे बहुलतृणेऽन्तराग्नी चितिं चिनोति ॥ १५ ॥

---

इति, 'अमून्यग्निहोत्रतृणानि' इति। एतन्मते प्रवृत्तस्य संस्थापनं युक्ततरमिवाभाति।

आहिताग्निः कदाचित्तु कृष्णपक्षे मृतो यदि।
तदा शेषाहुतीः सर्वा जुहोतीत्याश्वलायनः॥
अन्ये तदैव दर्शेष्टिं कुर्युः कृष्णे मृते यदि।
शुक्लपक्षे निशि प्रेतेऽपीच्छन्ति प्रातराहुतिम्॥ इति।

( १ ) 'अग्निहोमार्थम्' इ० पा०।

( २ ) “प्रवृञ्ज्यात्” ( श० ब्रा० १२-५-२-३ ) इत्येकवचनादेक एवाधिश्रयेत्। सूत्रे 'अधिश्रयन्ति' इति बहुवचनमधिकारिबहुत्वख्यापनार्थम्।

( ३ ) सम्यक्तापाज्जायन्त इति सन्तापजाः तानग्नीन् स्थालीस्थानेवादाय यजमानशरीरसहिताः सपिण्डाः दक्षिणस्यां दिशि गच्छन्ति इति।

( ४ ) उखास्थानग्नीन्यजमानशरीरं पात्राणि च सर्वमनसि कृत्वा दक्षिणा गच्छन्ति। दाहार्थं सभ्यावसथ्यौ च प्रत्यक्षावेव स्थाल्यां कृत्वा नेयौ न सन्तापजौ।

वितानसाधनमग्नीनां यथादेशस्थापनं कृत्वा समे तृणबहुले देशेऽन्तराग्नी काष्ठैश्चितिं चिनोति ॥ १५ ॥

पूर्वतरम्—

**उद्धृत्यक्षीरिणीः पुरुषाह्वतीः ॥ १६ ॥**

पुरुषमाह्वानं यासामोषधीनान्ता उद्धृत्य ॥ १६ ॥

**विशाखशराश्मगन्धापृश्निपर्ण्यध्याण्डाश्च ॥ १७ ॥**

उद्धृत्येति वर्त्तते । विशाखा—दूर्वा, शरो-मुञ्जः, पृश्निपर्णी-माषपर्णी, अध्याण्डा-ढण्ढणिका ॥ १७ ॥

**केशश्मश्रुनखलोमनिकृन्तनानि कृत्वा विपुरीषं चेच्छन्(१) ॥ १८ ॥**

**केशादि निखाय सर्पिषान्तरक्त्वा चितावेनमादधाति कृष्णाजिनमास्तीर्य प्राक्शिरसम् ॥ १९ ॥**

यजमानम् । सर्पिषाभ्यञ्जनं प्रक्षालनं च विपुरीषपक्ष एव ॥ १९ ॥

**सप्तसु प्राणायतनेषु सप्तहिरण्यशकलान्प्रास्यति मुखे प्रथमम्(२) ॥ २० ॥**

प्रक्षिपति ॥ २० ॥

**दक्षिणहस्ते जुहूँ सादयति घृतपूर्णाम् ॥ २१ ॥**

अधिकारमुपजीवन्नाह—

**स्फ्यं च ॥ २२ ॥**

दक्षिणहस्त एव (३)पाठक्रमेण सर्वपात्रचयनान्ते ॥ २२ ॥

---

(१) इच्छन्विपुरीषमुदरं पाटयित्वा पुरीषरहितं कुर्यात् ।

(२) मुखे नासिकयोः चक्षुर्द्वये कर्णद्वये च सुवर्णखण्डानि सूक्ष्माणि प्रक्षिपति ।

(३) अथैनमन्तरेणाग्नींश्चितिं चित्वा । कृष्णाजिनमुत्तरलोम प्राचीनग्रीवं प्रस्तीर्य तस्मिन्नेनमुत्तानं निपाद्य जुहूं घृतेन पूर्णां दक्षिणे पाणावादधाति सव्यऽउपभृतमुरसि ध्रुवां मुखेऽग्निहोत्रहवणीं नासिकयोः स्रुवौ कर्णयोः प्राशित्रहरणे शीर्षंश्चमसं प्रणीताप्रणयनं पार्श्वयोः शूर्पेऽउदरे पात्रीं समवत्तधानीं पृषदाज्यवतीं शिश्नस्यान्ते शम्यामाण्डयोरन्ते वृषारवावन्वगुलूखलं च मुसलं चान्तरेणोरूऽअन्यानि यज्ञपात्राणि दक्षिणे पाणौ स्फ्यम् । ( श० ब्रा० १२-५-२-७ )।

उपभृतं सव्ये ॥ २३ ॥

सादयतीति वर्त्तते ॥ २३ ॥

उरसि ध्रुवाम् ॥ २४ ॥

मुखेऽग्निहोत्रहवणीम् ॥ २५ ॥

नासिकयोः स्रुवौ(१) ॥ २६ ॥

खादिरौ न तावत्, आज्यग्रहणार्थत्वात् ॥ २६ ॥

कर्णयोः प्राशित्रहरणे शिरसि चमसं प्रणीताप्रणयनम् ॥ २७ ॥

कपालानि चैके ॥ २८ ॥

एके तन्नेच्छन्ति, प्रतिपत्त्यन्तराविधानात्। अप्स्ववहरणं हि तेषामुक्तम्(२) ॥ २८ ॥

पार्श्वयोः शूर्पे ॥ २९ ॥

द्वितीयं प्रतिप्रस्थातृसक्तम्। अकृतवरुणप्रघासस्य तु छित्त्वैकं द्वेधोपधीयते तैत्तिरीयपाठात् 'छित्त्वैवैकम' इति ॥ २९ ॥

उदरे पात्रीं समवत्तधानीं पृषदाज्यवतीं शिश्ने शम्यामरणी वृषणयोः ॥ ३० ॥

अन्तरोरू यज्ञपात्राण्यन्यानि ॥ ३१ ॥

(३) उपधीयन्ते ॥ ३१ ॥

अप्स्ववहरणं मृन्मयाश्ममयानाम्(४) ॥ ३२ ॥

अयस्मयानि (५)वा ब्राह्मणाय दद्यात् ॥ ३३ ॥

---

(१) "अस्मात्त्वम्" (वा० सं० ३५–२२) इत्याहुति होमानन्तरं नेदानीम्।

(२) "अप्स्ववहरणं मृन्मयाश्ममयानाम्" (का०श्रौ०२५–८–३२) इत्यनेन।

(३) अनुक्तस्थानानि उलूखलमुसलपिष्टपात्र्युपवेषाग्निरुत्तावदान पुरोडाशपात्रीपीठषडवत्तपूर्णपात्रचर्वाज्यस्थाल्यादीनि।

(४) अश्ममयानां दृषदुपलादीनाम्। मृन्मयानामग्निहोत्रस्थालीकपालसान्नाय्योखोपसर्जनीपात्रान्वाहार्यपात्रादीनाम्। आज्यस्थाल्यपि मृन्मयी चेत् तस्या अपि अप्स्ववहरणम्।

(५) लोहमयानि औवेलीस्थानि शासादीनि।

वा एषामप्यप्स्ववहरणम् । विकल्पेन हि श्रुतौ पाठः(१) ॥ ३३ ॥

**अनुस्तरणी चेत्पश्चात्कर्णमाहत्य हस्तयोर्वृक्कौ(२) ॥३४॥**

**अङ्गेष्वङ्गानीति जातूकर्ण्यः ॥ ३५ ॥**

आह । (३)उपधीयन्ते ॥ ३५ ॥

**न वाऽस्थिसन्देहात् ॥ ३६ ॥**

न वाऽङ्गान्यङ्गेषूपधीयन्ते । अस्थ्नां हि सन्देहो मा भूदिति । अत उत्कृत्य मांसान्युपधेयानि ॥ ३६ ॥

**वपया मुखमवच्छाद्याग्निभिरादीपयन्ति ॥ ३७ ॥**

वपया च मुखाच्छादनमनुस्तरणीपक्ष एव । अनुस्तरणी गौः ॥३७॥

**आहुतिं जुहोति पुत्रो भ्राताऽन्यो वा ब्राह्मणोऽस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः । असौ स्वर्गाय लोकाय स्वाहेति ॥ ३८ ॥**

सकलपाठः पत्न्या अप्यनूहप्रज्ञप्त्यर्थः । ब्राह्मणग्रहणं च पुत्रभ्रात्रोः क्षत्रियवैश्ययोर्व्युदासार्थम् ॥ ३८ ॥

**अनपेक्षमेत्योपस्पृशन्त्यपः ॥ ३९ ॥**

चितिमनपेक्षमाणा एत्योपस्पृशन्त्यपः । अपामुपस्पर्शनं गृह्योक्तम् ॥ ३९ ॥

इति पञ्चविंशेऽध्याये अष्टमी काण्डिका ।

---

**सञ्चयनं चतुर्थ्यामयुग्मान् ब्राह्मणान्भोजयित्वा पलाशवृन्तेनास्थीनि परिवर्त्य परिवर्त्याङ्गुष्ठकनिष्ठिका-**

---

(१) अथ यान्यश्ममयानि च मृन्मयानि च भवन्ति । तानि ब्राह्मणाय दद्याच्छवोद्वहमु ह तं मन्यन्ते यस्तानि प्रतिगृह्णात्यप एवैनान्मस्यवहरेयुरापो वा ऽअस्य सर्वस्य प्रतिष्ठा तदेनमप्स्वेव प्रतिष्ठापयति (श० ब्रा० १२–५–२–१४ ) ।

( २ ) कर्णप्रदेशस्य पश्चाद्भागे आहननं प्रहारं कृत्वा मारयित्वा तस्याः कुक्षिगोलकौ मृतस्य हस्तयोर्निधेयौ ।

( ३ ) प्रेतस्य हस्तपादावयवेषु अनुस्तरण्याः हस्तपादादीन्युपधेयानि ।

ङ्ग्यामादाय पलाशपुटे प्रास्यति(१) ॥ १ ॥

'सञ्चयनम्' इति कर्मणो नामधेयम्। तत् चतुर्थेऽहनि कर्तव्यम्। अयुग्मान् ब्राह्मणान्भोजयित्वा पलाशवृन्तेनास्थीनि परिवर्त्य परिवर्त्याङ्गुष्ठकनिष्ठिकाभ्यामादाय पलाशपुटे प्रक्षिपति ॥ १ ॥

शम्यवकाः कर्दमं च श्मशाने(२) ॥ २ ॥

चशब्दात्प्रास्यति। श्मशानशब्देन अस्थिसञ्चय उच्यत इति सम्प्रदायः। भस्मकूट इत्यपरे। ते च शमीशब्देन शमीशाखामिच्छन्ति। इतरे तु तत्पर्णानि ॥ २ ॥

अक्त्वास्थीनि सर्वसुरभिमिश्राणि दक्षिणपूर्वायतां कर्षूं खात्वा कुशानास्तीर्य वस्त्रावकृतं च हारिद्रं वागिति निवपत्यस्मिन् ॥ ३ ॥

घृतेनाऽक्त्वाऽस्थीनि (३)सर्वसुरभिणा मिश्रीकृत्य दक्षिणपूर्वायतां कर्षूं खात्वा तत्र कुशानास्तीर्य हारिद्रं च (४)वस्त्रावकृत्तं 'वाक्' इत्यनेन मन्त्रेण निवपत्यस्थीनि ॥ ३ ॥

एतद्वाजसनेयकम् ॥ ४ ॥

वक्ष्यमाणं तु शाखान्तरात् ॥ ४ ॥

अनेन वा ॥ ५ ॥

मन्त्रेण निवपति ॥ ५ ॥

त्वा मनसानार्त्तेन वाचा ब्रह्मणा त्रय्या विद्यया पृथिव्यामक्षिकायामपाꣳरसेन निवपाम्यसाविति ॥ ६ ॥

(५)श्मशानं चिकीर्षतः कुम्भे सञ्चयनम् ॥ ७ ॥

---

(१) वटपलाशादिपत्रमूलेन भस्मस्थितानि प्रकटानि कृत्वा वटकदलीपलाशादिपर्णपुटे निदधाति।

(२) अवका—शेवालः। कर्दमः—क्वथिता मृत्तिका। यक्षकर्दम इत्यपरे।

(३) कर्पूरागुरुचन्दनकस्तूरिकाकेसरादिभिः।

(४) वस्त्रखण्डं हरिद्रया रक्तञ्चास्तीर्य।

(५) श्मशानशब्दः पितृमेधवाची "अथास्मै श्मशानं कुर्वन्ति०" (श० ब्रा० १३-८-१-१) इत्यादिश्रुतेः।

पितृमेधं कर्तुमिच्छतः कुम्भे सञ्चयनं कर्त्तव्यम्। तस्मिंश्च पक्षे कुशहारिद्रास्तरणमस्थिसंस्काराद्धर्ममात्रत्वाच्च कुम्भ एव कर्त्तव्यम् ॥७॥

निधानं च तूष्णीम् ॥ ८ ॥

निखननं च कुम्भस्य तूष्णीं कर्त्तव्यम् ॥ ८ ॥

प्रोषितश्चेत्प्रेयात्प्राचीनावीती (१)निवान्यां दुग्ध्वा दक्षिणतोऽधिश्रयणोद्वासने ॥ ९ ॥

(२)कुर्यात् ॥ ९ ॥

तत एव हरणम् ॥ १० ॥

दक्षिणत एव स्रुग्धरणं कर्त्तव्यम् ॥ १० ॥

अधस्तात्स(३)मिधं धारयन् ॥ ११ ॥

'स्रुचं हरति' इति शेषः ॥ ११ ॥

उदगग्रान् कुशान् दक्षिणाग्रान् कृत्वा ॥ १२ ॥

तांश्च स्वावसर एव ॥ १२ ॥

सकृद्वा पितृवत्पर्यस्य ॥ १३ ॥

(४)सकृदेव पितृवदपसव्यं पर्यस्येत्। "तस्य वा एतस्याग्निहोत्रस्योपचारः" ( श० ब्रा० १२-५-१-६ ) इति प्रकृत्य सर्वं ह्येतदेवं श्रूयत इति ॥ १३ ॥

---

( १ ) प्रोषितस्य मरणं सन्निकृष्टे देशान्तरे चेत् शरीरमेव दाहार्थमग्निसमीपे आनेतव्यम्। विप्रकृष्टे चेत्तदा यत्र मृतस्तत्रैव लौकिकाभ्यां काष्ठाभ्यामग्निं मथित्वा काष्ठवदेव विधिरहितं शरीरं दग्ध्वास्थीन्यानीय विधिवत्पुनर्दाहः कर्तव्यः। शरीरस्य तदस्थ्नां वा गृहागमनपर्यन्तं प्रतिदिनमेव सायं प्रातर्होमः पुत्रादिभिः कार्यः। तत्र होमे विशेषमाह—

निवान्यां मृतवत्सां वत्सान्तरेण दुह्यमानां गां दुग्ध्वा गार्हपत्यादुष्णं भस्म दक्षिणस्यां दिशि निरुह्य तस्मिन्नुष्णे भस्मन्यधिश्रयणमुद्वासनं च कुर्यादिति देवयाज्ञिकाः।

( २ ) 'निधानम्' इ० पा०।

( ३ ) 'समिधम्' इ० पा०।

( ४ ) एकवारमेव पितृवदपसव्येन दक्षिणाभिमुखः पितृतीर्थेनाधोमुख्या स्रुचा पर्यस्य आहवनीयमध्ये प्रक्षिप्य वक्ष्यमाणं कुर्यात्। सकृद्ग्रहणेन द्वितीयाहुतेर्निरासः। एवकारार्थकेन वाशब्देन होमव्यतिरिक्तस्योद्दिङ्गनोपमार्जनप्राशनोदुक्षणसमिदाधानादेर्निरास इति देवयाज्ञिकाः।

अतः परं कर्माचष्टे—

**शरीराण्याहृत्य कृष्णाजिने पुरुषविधिं विधायोर्णाभिः प्रच्छाद्याज्येनाभिघार्यं पूर्ववद्दाहः(१) ॥१४॥**

कर्त्तव्यः ॥ १४ ॥

**शरीरनाशे त्रीणि षष्टिशतानि पलाशवृन्तानां कृष्णाजिने पूर्ववत् ॥ १५ ॥**

पुरुषविध्यादि पूर्ववद्दाहान्तम् । तेषामेव सञ्चयनं पितृमेधश्च तैरेवेति ॥ १५ ॥

**अनिष्ट्वाग्रयणेन नवस्याश्नीयात्पतितस्य भुक्त्वा प्रतिगृह्य, विद्विषाणयोर्वाऽयाज्यं याजयित्वाविं प्रतिगृह्योभयादन्ना यस्याग्निभिरन्यं याजयेयुर्यो वा यजेत वैश्वानरं निर्वपेत् (२) ॥ १६ ॥**

निगदव्याख्यातम् । वैश्वानरो यजनीयेऽहनि अन्वारम्भणीयापूर्वकः ॥ १६ ॥

---

( १ ) सन्दीपनवत्युखाधिश्रयणादिविधिना "सन्दीपनवतीः प्रत्यन्यधिश्रयन्त्युखाः" ( का० श्रौ० २५-७-१२ ) इत्याद्युक्तेन दाहः कर्तव्यः ।

( २ ) आग्रयणेष्ट्या यजनमकृत्वा यदि यजमानो नवनिष्पन्नस्य धान्यस्य व्रीहियवादेरश्नीयात् तदा वैश्वानरं द्वादशकपालमग्निगुणयुक्तं यजनीयेऽहनि निर्वपेत् । तथा पतिता महापातक्यादयो विहितानधिकारिणः तेषां पतितानामन्नं भुक्त्वा किञ्चित्प्रतिगृह्य च वैश्वानरं निर्वपेत् । तथा विद्विषाणयोर्वा विद्विषाणौ द्वेषं कुर्वाणौ तयोरुभयोर्द्वेष्यद्विषतोरन्नं भुक्त्वा किञ्चिद्द्रव्यादिकं प्रतिगृह्य वा वैश्वानरं निर्वपेत् । तथा मन्वादिभिर्योऽयाज्य उक्तः तं याजयित्वा वैश्वानरं निर्वपेत् । तथा अविं मेषं प्रतिगृह्य वैश्वानरं निर्वपेत् । तथा उभयादन्ना उभयत इत्यधस्तादुपरिष्टाच्च दन्ता यस्य तदुभयादत् प्राणिषु पुरुषाश्वादिकम् तत्प्रतिगृह्य वा वैश्वानरं निर्वपेत् । तथा यस्य सम्बन्धिभिरग्निभिः अन्यं यजमानमृत्विजो याजयेयुः सोऽग्निस्वामी स्वाग्निभिरन्ययाजननिमित्तं वैश्वानरं निर्वपेत् । यो वा भ्रान्त्या अन्याग्निभिः यजेत सोऽपि निर्वपेदिति देवयाज्ञिकभाष्ये स्पष्टम् ।

कृष्णं वासो दक्षिणा ॥ १७ ॥

पुरोडाशे क्षामेऽवशिष्टं समाप्य तदेव पुनर्निर्वपेत् ॥ १८ ॥

क्षामे दग्धे पुरोडाशेऽवशिष्टं कर्म समाप्य तस्यैव हविषो निर्वापः कार्यः ॥ १८ ॥

अत्रेदं विचार्यते । किमशेषदाहे पुनर्निर्वापः उतैकदेशदाहेऽपीति । किं तावत्प्राप्तम् । सूत्रेणैव पक्षः—

एकदेशदग्धेऽपि संयोगात् ॥ १९ ॥

एकदेशदग्धेऽपि नैमित्तिकं प्रवर्त्तते । कुत एतत् ?, दाहसंयोगात् । दाहसंयोगोऽत्र निमित्तम् । एकदेशदाहोऽपि दाह एवेति ॥ १९ ॥

दर्शनाच्च ॥ २० ॥

दृश्यते चायमर्थो यथैकदेशदाहेऽपि भवति । 'यदा तद्धविः सन्तिष्ठतेऽथ पुनर्निर्वपेत्' इति तेनैव हविषा समाप्तिं दर्शयति । तच्चैकदेशदाह उपपद्यत इति ॥ २० ॥

एवं प्राप्त आह—

न, नित्यत्वात्(१) ॥ २१ ॥

नैकदेशदग्धे नैमित्तिकम् । नित्यो ह्यग्निसंयोगात् पुरोडाशस्य दाहो भवति । तत्र यस्य पुरोडाशः क्षायत इति निमित्तशब्दोपरोधः स्यात्, सर्वस्यैवाग्निसंयोगात् पुरोडाशक्षायत्वमापद्यत इति । तस्मान्नैकदेशदाह नैमित्तिकम् ॥ २१ ॥

यत्तु दर्शनमुक्तं तत्परिह्रियते—

कर्मार्थं दर्शनम् ॥ २२ ॥

तद्धविः सन्तिष्ठत इत्यत्र हविःशब्देन कर्म लक्ष्यते यदा तद्धविष्कं कर्म सन्तिष्ठत इति । अशेषस्य दग्धौ सत्यां द्रव्यान्तरेण परिसमाप्तिः॥२२॥

इति पञ्चविंशेऽध्यायेऽष्टमी कण्डिका ।

---

पशुश्चेदुपाकृतः (२)पलायते वायवे तमनुदिश्यान्यं

---

(१) तेषु हि कपालेषु पुरोडाशमवस्थाप्योपरिज्वलद्भिर्दर्भतृणैः श्रपणे क्रियमाणे सूक्ष्मांशदाहस्य वर्जयितुमशक्यत्वात् ।

(२) 'पलायेत' इति पाठः ।

**तद्वर्णं तद्वयसमालभेत(१) ॥ १ ॥**

यदि पशुरुपाकृतो नश्येत् वायवे तं पशुम् 'अयं वायवे' इत्येवमनुदेशं कृत्वा अन्यस्तद्वर्णस्तद्वया आलब्धव्यः ॥ १ ॥

**उपलभ्य वायवे तम् ॥ २ ॥**

पशुमुपलभ्य वायवे आलभेत मिथ्यासङ्कल्पदोषपरिजिहीर्षया ॥२॥

**अनादरणं वा ॥ ३ ॥**

न वा पुनरालम्भ आदर्त्तव्यः । न ह्यत्र चोदनेति ॥ ३ ॥

**(२)प्राक् प्रयाजेभ्यश्चेन्नियुक्तो म्रियेतान्यमालभेत ॥ ४ ॥**

पशुर्नियुक्तः सन् यदि प्राक्प्रयाजेभ्यो म्रियेतान्य आलब्धव्यः ॥ ४ ॥

**पूर्वस्य वपां दक्षिणाग्नौ जुहुयात् ॥ ५ ॥**

तदा च पूर्वस्य वपा दक्षिणाग्नौ होतव्या ॥ ५ ॥

**सोमश्चेन्मार्जालीये य ईजानाः पितरो ये पितामहा येऽनीजाना यज्ञियाः सोमपासस्तेषामेष पशुरालब्धोऽग्नौ स्वाहा देवेभ्यः सुहुतो यमायेति ॥ ६ ॥**

सोमश्चेन्मार्जालीये वपा होतव्या "य ईजानाः पितरः" इत्यनेन मन्त्रेण ॥ ६ ॥

**अनपनयो वाऽदुष्टत्वात् ॥ ७ ॥**

'वा'शब्दः पक्षव्यावृत्तौ । अनपनयः पूर्वस्य पशोर्न ह्यसौ दुष्ट इति । अतस्तेनैव यागः कर्त्तव्यः । तदीयैव वपा दक्षिणाग्नौ मार्जालीये वा होतव्येति । नैमित्तिककार्यपरया चात्र दक्षिणाग्निमार्जालीययोराहवनीयधर्मप्रवृत्तिः ॥ ७ ॥

**अवदानहानौ नाद्रियेत ॥ ८ ॥**

पश्ववदानहानावनादरः । एवं हि श्रूयते—"तस्माद्यदि किंचिदवदानं हीयेत न तदाद्रियेत" ( श० ब्रा० ३-८-३-१६ ) इति ॥ ८ ॥

---

( १ ) तृणोपस्पर्शनादारभ्य प्राङ्नियोगादिदं द्रष्टव्यम् । नियोगादूर्ध्वं तु नष्टः प्राप्यते चेत् तदाध्वर्यवं हुत्वा तेनैव यागः । अप्राप्तौ आध्वर्यवं हुत्वान्येन सदृशेन याग इति देवयाज्ञिकाः ।

( २ ) 'प्राक् प्रयाजेभ्यः' इत्युक्तत्वात् प्रयाजप्रवृत्त्यनन्तरं मृते तेनैव यागः कर्त्तव्यः ।

**हृदयनाशे त्वन्यमालभेतेत्येके हृदयं पशुरिति श्रुतेः॥९॥**

एके आचार्या हृदयनाशेऽन्यं पशुमालभन्ते । तस्मादेवं श्रूयते—“हृदयमु वै पशुः” ( श० ब्रा ३-८-३-१६ ) इति । तन्नाशे च सर्व एव पशुर्नष्टः स्यादिति ॥ ९ ॥

**सर्वेषां वाऽज्यस्य यजेत् ॥ १० ॥**

‘वा’ शब्दः सूत्रद्वयोपात्तपक्षव्यावर्त्तकः । नावदानहानावनादरो न च हृदयनाशेऽन्य आलब्धव्यः यत्कारणं “यदि किञ्चिदवदानं हीयेत न तदाद्रियेत” इत्यर्थवादपरिशेषोऽयम् । किमर्थ इति चेत् । “स हृदयस्यैवाग्रेऽवद्यति” ( श० ब्रा० ३-८-३-१५ ) इत्यग्रताविधानार्थः । ‘हृदयं वै पशुः’ इत्ययमप्यर्थवादोऽग्रताविधानार्थ एव (१) । तस्मात्सर्वेषामवदानानां प्रत्येकं नाशे आज्यस्य यजेत् ॥ १० ॥

उक्तं ह्याचार्येण—

**अर्थवादमात्रं पशुवचनम् ॥ ११ ॥**

इति ॥ ११ ॥

**संज्ञप्यमानश्चेद्वाश्येताहुतिं जुहुयाद्यत्पशुर्मायुमकृतोरो वा पद्भिराहते अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वᳪ हस इति ॥ १२ ॥**

अनेन मन्त्रेण ॥ १२ ॥

**(२)इमं मे वरुणेति च प्रत्यृचं द्वाभ्याम् ॥ १३ ॥**

मन्त्राभ्यां जुहोति ॥ १३ ॥

**पशूखाचेत्स्रवेत्साान्नाय्योखा वा तामभिमन्त्रयेतोखाᳪ स्रवन्तीमगदामगन्म त्वष्टा वायुः पृथिव्यन्तरिक्षम् यतश्चुतद्धुतमग्नौ तदस्तु न तत्प्राप्नोति निर्ऋतिः परस्तादिति ॥ १४ ॥**

अनेन मन्त्रेण । ननु च सान्नाय्योखास्रुत्यभिमन्त्रणं पशावन्वयप्रा-

---

( १ ) अतो न स्वार्थप्रमाणम् । तेन हृदयनाशेऽप्यनादिष्टं हुत्वा आज्यमेवोपादेयमिति ।

( २ ) ( वा० सं० २१-१, २ ) ।

तत्वादवाच्यम् । नैष दोषः, साम्नाय्योखायां हि प्रधानद्रव्यच्युतिः पशूखायां तूपसर्जनोदकस्य न प्राप्नोति तेनाप्राप्तत्वादुच्यते ॥ १४ ॥

यूपविरोहणेऽन्तस्तन्त्र्ँ सँस्थितेऽहनि-

इति पञ्चविंशेऽध्याये नवमी कण्डिका ।

---

त्वाष्ट्रं बहुरूपमालभेत ॥ १ ॥

यद्यहर्गणे तन्त्रमध्ये यूपविरोहणं भवति तदा संस्थितेऽहनि त्वष्टृदेवत्यं पशुं बहुरूपं पाटलमालभेत । सर्वाहःशेषभूतो यूपस्तन्निमित्तत्वाच्च पशुरपि सर्वाहःशेषभूत एवेति संस्थितेऽहनीत्युक्तं तत्कालता मा भूदिति । अत्र च केचित्सान्निपातिकैरेवाङ्गैरुपेतं त्वाष्ट्रं कुर्वन्ति । आराटुपकारकाणि तु सवनीयसक्तान्येव सन्तीति तानि प्रसज्यन्ते । अपरे त्वन्यथा वर्णयन्ति-न ह्यत्र प्रसङ्गो विद्यते, प्रत्येकमहरहः सवनीयाद्यङ्गतन्त्रमेव विहितम् । ततश्च यद्यपि पत्नीसंयाजान्तता पदार्थपर्वबलात् तथाप्यहरहः पत्नीसंयाजान्तैरेवाङ्गैः सम्बन्धमेव द्रष्टव्यम् । अन्यथा हि सवनीयपुरोडाशादिविधानानुपपत्तिः स्यादिति । अप्रसङ्गश्चेत्सर्वाङ्गोपेत एव त्वाष्ट्रः कर्त्तव्यः । अयमेव च पक्षो वरतर इवाभाति ॥१॥

(१)अनूबन्ध्यायै वपामुत्खिद्यानुमर्शं गर्भमेष्टवै ब्रूयात् ॥ २ ॥

अनेन च शमिता प्रेष्यते । ततश्चाध्वर्युः प्रैषदाने ॥ २ ॥

दर्शने (२)स्थालीं चैवोष्णीषं (३)चोपकल्पयितवै ब्रूयात् ॥ ३ ॥

अयं शमितुः प्रतिप्रैषः । तदर्थोऽध्वर्योरेव ॥ ३ ॥

वपान्तेऽनपेक्षमध्वर्युर्यजमानो वेत्यध्वर्युः प्रेष्यति निरूहैतं गर्भमिति विरुज्य श्रोणी प्रत्यञ्चं निरूहितवै ब्रूयात् ॥ ४ ॥

---

(१) अथानूबन्ध्यायां गर्भसन्देहे तत्सद्भावे प्रायश्चित्तमिदमिति देवयाज्ञिकाः ।

(२) स्थालीं मेधश्रपणार्थाम् ।

(३) उष्णीं गर्भवेष्टनार्थम् ।

प्रैषद्वयं चैतत् । उभयत्र हि क्रियापदमाम्नातं प्रेष्येति ब्रूहीति च । तत्रेतिकरणपरिच्छिन्न एकः प्रैषः शेषो द्वितीयः । प्रयोजनं मध्ये विरामः ॥ ४ ॥

**निरुह्यमाणमभिमन्त्रयत एजतु दशमास्य इति(१) पशुवदवदानं गर्भस्य ॥ ५ ॥**

कर्त्तव्यम् ॥ ५ ॥

**कण्ठं वावकृत्य स्थाल्यां मेधस्रावणम् ॥ ६ ॥**

कर्त्तव्यम् । मेधपक्षे च स्थाल्या अमन्त्रकं प्रोक्षणं, जुहोतित्वात् ॥६॥

**अवदानसहितमधिश्रित्योष्णीषवेष्टितं गर्भं पार्श्वतो निदधात्यनभिघारितमवदानवद्धृत्वा दक्षिणतो मेधं निदधाति(२) ॥ ७ ॥**

अनभिघारितमेधमन्तरा यूपाग्नी हृत्वा दक्षिणतोऽङ्गानां स्थापयति॥७॥

**प्रतिप्रस्थाता वशावदानकाले (३)प्रचरण्यां मेधमवद्यति ॥ ८ ॥**

प्रचरण्याश्च मन्त्ररहिता जुहूवत्संस्कारक्रिया । मेधस्य चोपस्तीर्य द्विरवदानं प्रत्युपस्तारश्च ॥ ८ ॥

**अवदानान्यनुजुहोति यस्यै त इति ॥ ९ ॥**

वशावदानान्यनुमेधं जुहोति "यस्यै त०" (वा० सं० ८-२९) इत्यनेन मन्त्रेण ॥ ९ ॥

**अङ्गान्यहुता यस्य यस्या इति यथालिङ्गम् ॥ १० ॥**

यल्लिङ्गो गर्भः ॥ १० ॥

---

( १ ) यद्यनूबन्ध्या वशा गर्भिणी स्यात्तदा विशसने मातुः सकाशात्पृथक् क्रियमाणं गर्भम् "एजतु दशमास्यः०" ( वा० सं० ८-२८ ) इत्यनेन अभिमन्त्रयेत् ।

( २ ) स्थालीस्थं मेधं वशावदानसंलग्नं शामित्रेऽधिश्रित्य उष्णीषेण लघुवस्त्रेण वेष्टितं गर्भं पशुश्रपणस्य पार्श्वे समीपे स्थापयति । तं मेधमनभिघारितमेव अवदानवत् जघनेन चात्वालमन्तरा यूपाग्नी हृत्वा वशावदानानामासादनदेशस्य दक्षिणस्यां दिशि आसादयतीति देवयाज्ञिकाः ।

( ३ ) प्रचरणी वसाहोमहवनीतो व्यतिरिक्ता पालाशी स्रुक् ।

अविज्ञाते पुंवत् ॥ ११ ॥

अविज्ञाते गर्भे पुंवत्प्रयोगः ॥ ११ ॥

स्विष्टकृद्वनस्पत्यन्तरे प्रत्येत्य प्रतिप्रस्थाता प्रचरण्याᳪ सर्वं मेधमवद्यति(१) ॥ १२ ॥

स्विष्टकृतमनुजुहोति पुरुदस्म इति (२) ॥ १३ ॥

(३)अनेन मन्त्रेण ॥ १३ ॥

स्विष्टकृदन्त उष्णीषवेष्टितस्य वृक्षासञ्जनं वाप्स्ववहरणं वाल्मूत्करोपकिरणं वा ॥ १४ ॥

'वा' शब्दो विकल्पार्थः ॥ १४ ॥

(४)अनुव्याहारभयं (५)त्वेतेषु ॥ १५ ॥

"वृक्ष ऽएनं मृतमुद्वास्यन्तीति" ( श० ब्रा० ४-५-२-१३ ) । तथा "अप्स्वेव मरिष्यतीति" ( श० ब्रा० ४-५-२-१४ ) निन्दार्थवादः । पक्षान्तरविधानार्थं तदभिधीयते ॥ १५ ॥

(६)समिष्टयजुरन्ते शामित्र एव जुहुयात्तिष्ठ(७)न्मरुत इत्यस्वाहाकृत्य (८)महीद्यौरित्यङ्गारैरभ्यूहति ॥१६॥

गर्भम् ॥ १६ ॥

अग्निहोत्र आसन्नेषु चेत्पात्रेष्वाहवनीयोऽनुगच्छे-

---

( १ ) वनस्पतियागानन्तरं स्विष्टकृतः पूर्वमित्यर्थः ।

( २ ) प्रचरण्यां स्रुचि प्रतिप्रस्थाता सर्वं गर्भरसमवदायाऽध्वर्युणा स्विष्टकृद्धोमे कृते सति जुहुयात् ।

( ३ ) "पुरुदस्मः०" ( वा० सं० ८-३० )

( ४ ) अनुव्याहारः शाप इति धूर्तस्वामी ।

( ५ ) तु शब्दो यद्यर्थे । यद्येतेषु पूर्वोक्तेषु वृक्षासञ्जनादिपक्षेषु वैरिकर्तृकादनुभाषणात् शापात् वृक्षे एनं मृतमुद्वास्यन्ति अप्स्वेव मरिष्यतीति क्षिप्रेऽस्मै मृतायेत्यादिरूपात् भयं भवति तदेति देवयाज्ञिकाः ।

( ६ ) समिष्टयजुर्होमान्ते शामित्राग्नावेव स्वाहान्तेन मन्त्रेणोष्णीषवेष्टितं गर्भं जुहोति मन्त्रान्ते स्वाहाकारमनुच्चार्य जुहुयादित्यर्थः ।

( ७ ) "मरुतो यस्य०" ( वा० सं० ८-३१ )

( ८ ) शामित्रे क्षिप्तं गर्भमङ्गारः "मही द्यौः०" ( वा० सं० ८-३२ ) इत्यनेन छादयेत् ।

गार्हपत्ये जुहुयात्प्राण उदानमप्यगादिति(१) ॥ १७ ॥

अनेन मन्त्रेण ॥ १७ ॥

गार्हपत्यश्चेदाहवनीय उदानः प्राणमप्यगादिति ॥ १८ ॥

अनेन जुहोति ॥ १८ ॥

दक्षिणाग्निश्चेद्गार्हपत्ये व्यान उदानमप्यगादिति ॥ १९ ॥

जुहुयात् ॥ १९ ॥

सर्वे चेत्तूर्णं मथित्वा (२)प्रतिवातमुद्धृत्य वायव्यामाहुतिं हुत्वा यथानुपूर्व्यकरणम् ॥ २० ॥

उपावहृतेषु पात्रेषु यदि सर्वेऽग्नयोऽनुगच्छेयुः तदा तूर्णं शीघ्रं मथित्वा प्रतिवातमाहवनीयमुद्धृत्य वायव्यामाहुतिं जुहुयात् । पुनस्तमेवाहवनीयं प्राञ्चमुद्धृत्य यथानुपूर्व्यमग्निहोत्रक्रिया ॥ २० ॥

निवातं चेत्पूर्ववन्मथित्वा प्राञ्चमुद्धृत्य गार्हपत्ये संस्कृत्य पश्चादाहवनीयस्य स्वयं पानम् (३) ॥ २१ ॥

उपावहृतेष्वेव पात्रेषु यदि निवाते सर्वेऽग्नयोऽनुगच्छेयुस्तदा पूर्ववत् तूर्णं मथित्वा प्राञ्चमाहवनीयमुद्धृत्य गार्हपत्ये संस्कृत्य । संस्कारश्चाहोमार्थत्वादभिधीयते । पश्चादाहवनीयस्योपविश्य स्वयमेव पानम् । अयञ्चाग्निहोत्रविकार इति सम्प्रदायः, अभ्युदितेष्टिवत् । अत्र पुनः श्रूयते–'सैव तत्र प्रायश्चित्तिः' इति । तेन कार्यापत्तिरशक्या वक्तुम् ॥२१॥

अग्निहोत्रातिपत्तावाहुतिं जुहुयान् मनो ज्योतिर्जुषतामाज्यस्य विच्छिन्नं यज्ञं समिमं दधातु या इष्टा उषसो या अनिष्टास्ताः सन्तनोमि हविषा घृतेन स्वाहेति(४)॥२२॥

---

(१) 'इदं प्राणाय' इति त्यागः । तत आहवनीयमुद्धृत्याग्निहोत्रं जुहुयात् ।

(२) प्रतिगतो वातं प्रतिवातः तं प्रतिवातमित्याहवनीयविशेषणम् , नत्वाभिमुख्येऽव्ययीभावो वाताभिमुखमिति । कुतः ? "यां दिशं वातो वायात्तां दिशमाहवनीयमुद्धृत्य" ( श० ब्रा० ११-५-३-११ ) इति श्रुतेः ।

(३) एतानि सर्वाणि प्रायश्चित्तानि कूर्चासादनोत्तरकालं प्राग्घोमात् ज्ञेयानि इति देवयाज्ञिकाः ।

(४) अग्निहोत्रस्य सायम्प्रातर्होमस्य कालातिपत्तौ कालातिक्रमे । इदं मनसे ज्योतिषे इति त्यागः ।

अनेन मन्त्रेण । अतिपत्तिश्रवणाच्च कार्यापत्तिरवगम्यते । तथा च मन्त्रलिङ्गं 'विच्छिन्नं यज्ञं समिमं दधातु' इति । तथा 'या इष्टा उषसो या अनिष्टास्ताः सन्तनोमि' इति ॥ २२ ॥

इति पञ्चविंशेऽध्याये दशमी कण्डिका ।

सत्त्रायागूर्याशक्तौ विश्वजिताऽतिरात्रेण यजेत ॥ १ ॥

गूरी उद्यमे । सत्रायागूर्य सत्रायोद्यमं कृत्वा सत्राय सङ्कल्पे सतीत्यर्थः । एवं हि श्रूयते—"सर्वेभ्यश्छन्दोभ्यः सर्वेभ्यः पृष्ठेभ्यः सर्वेभ्यः स्तोमेभ्य आत्मानमागुरते यः सत्रायागुरते विश्वजिताऽतिरात्रेण यजेत"( तै० ब्रा० १-४-७-७ ) इति(१) ॥ १ ॥

सत्त्राङ्गं वागूर्णमात्रश्रुतेः ॥ २ ॥

'वा' शब्दः पक्षान्तरप्रतिपत्तौ । सत्राङ्गं वा विश्वजिद्भवति । ततश्च कृतेऽपि सत्रे प्रवर्त्तते । कुत एतत् ? आगूरणमात्रश्रवणात् । न हि कश्चिदनागूर्य करोति । आगूरणं च निमित्तं विश्वजितः । तस्मात्कृतेऽपि सत्रे प्रवर्त्तत इति । एवं पक्षद्वयोपप्रदर्शने सत्युच्यते । न कृते सत्रे प्रवर्त्तते अकृत एव प्रवर्त्तते । कुत एतत् ? आगूरणनिमित्तस्य तावत्कालभावित्वात् । यावन्न क्रियते सत्रं तावदेव सङ्कल्पो निमित्तमिति । अपि च निष्क्रयकार्यं भवति । विश्वजिद्यागं हि प्रकृत्योच्यते 'सर्वेभ्यः स्तोमेभ्यः सर्वेभ्यः पृष्ठेभ्यः सर्वेभ्यश्छन्दोभ्य आत्मानं निष्क्रीणीत' इति । निष्क्रयश्चाकृत एव भवति ॥ २ ॥

दीक्षितानां चेत्साम्युत्थानं जायेत सोमं विभज्य तेनैव सर्ववेदसेन सर्वपृष्ठेन यजेरन्(२) ॥ ३ ॥

"अथ यदि सन्दीक्षिताः साम्युत्तिष्ठेरन्" इति प्रकृत्यैवं हि श्रूयत इति । साम्युत्थानं चार्द्धसमाप्ते सत्र उत्थानम् ॥ ३ ॥

---

( १ ) स सर्वेभ्यः स्तोमादिभ्यः आत्मानमागुरते तत्स्तोमाद्यधीनं कुरुते यः सत्रायोपक्रमं कुरुते तेन यावत्सत्रं न निष्पद्यते तावदात्मा तदधीन एवेति श्रुत्यर्थः ।

( २ ) सत्रार्थं कृतदीक्षाणां यदि दैवान्मानुषाद्वा निमित्तात्सामि असमाप्त एव सत्रे उत्थानं जायेत सत्रं नैव समापयाम इति बुद्धिर्जायते । सोमेनोपलक्षितं सर्वं साधारणं धान्यघृतादिद्रव्यं विभज्य आत्मीयमात्मीयं पृथक्कृत्वानेनैव पूर्वसूत्रोक्तेन विश्वजिता सर्वस्वदक्षिणेन पृथक्पृथग्यजेरन्निति देवयाज्ञिकाः ।

क्रीते विभागश्रुतेः ॥ ४ ॥

स च विश्वजित्क्रीते सोमे भवति नाक्रीते । कुत एतत्, विभागश्रवणात् । "सोममपभज्य" (ताण्ड्य० ९-३) इति । न चाक्रीतस्य विभागः सम्भवति । तस्मात्क्रीते विश्वजित् ॥ ४ ॥

उपपाताद्वोभयतः ॥ ५ ॥

'वा' शब्दः पक्षव्यावृत्तौ । उभयत्र क्रीते चाक्रीते च साम्युत्थाने विश्वजिद्भवति । कुत एतत् ? उपपातात् । साम्युत्थानं हि निमित्तं तद्यदि विभागेन विशेष्यते वाक्यं भिद्यते । तस्मादुभयतो विश्वजित् ॥५॥

तर्हि कथमुच्यते 'सोममपभज्य' इति विभागश्रवणात्—

विभागः क्रियागुणत्वात्(१) ॥ ६ ॥

क्रियागुणभूतानां द्रव्याणां सामर्थ्यपरिप्राप्तो विभागः सोऽनूद्यते । सोमशब्देन लक्षणया 'सोममपभज्य'इति ॥ ६ ॥

अनीतासु चेद्दक्षिणासूद्गात्रपच्छेदोऽदक्षिणः संस्थाप्य पुनराहारः(२) ॥ ७ ॥

यद्यनीतासु दक्षिणासूद्गाताऽपच्छिद्यते तं क्रतुमदक्षिणं संस्थाप्य पुनराहरणम् ॥ ७ ॥

प्रस्तोता चेद्ब्रह्मणे वरं दत्त्वा पुनर्वरणम् ॥ ८ ॥

प्रस्तोता चेदपच्छिद्यते ब्रह्मणे वरं दत्त्वा पुनर्वरणं प्रस्तोतुः ॥ ८ ॥

---

(१) न ह्यत्र 'सोममपभज्य' इत्यनेन सोमस्य विभागो विधीयते । कस्मात् ? सोमस्य क्रियागुणत्वात्, क्रियाङ्गत्वात् । इतरसाधारणद्रव्यवद् यागार्थत्वात् । तथा हि, न तावदक्रीतसोमस्य विभागो विधातुं शक्यते, नापि क्रीतसोमस्य तस्येतरसाधारणद्रव्यविभागवत्सोमविभागस्यार्थप्राप्तत्वात् । तस्मादुभयथापि सोमविभागविधानासम्भवादेकीकृतसाधनानां सत्रिणां प्रवृत्तानां मध्ये साम्युत्तिष्ठतां प्राप्तमेव धनविभागं सोमविभागशब्दोऽनुवदति । सोमशब्दस्तु द्रव्यमात्रोपलक्षणार्थः । तस्मात्प्रवृत्तमात्रस्योत्थाने विश्वजिद्भवतीति देवयाज्ञिकाः ।

(२) ज्योतिष्टोमे अध्वर्युप्रतिप्रस्थातृप्रस्तोत्रुद्गातृप्रतिहर्तॄणामन्वतां परस्परमन्वारब्धानां पवमानार्थं गमनं विहितं ( का० श्रौ० ९-६-२६ ) सूत्रेण । तत्र दक्षिणानयनात्प्राक् प्रातःसवने यदि उद्गात्रपच्छेदः उद्गातुर्विभागः प्रस्तोतुः कृतान्वारम्भस्य विभागो भवति तदा तं प्रारब्धं यज्ञं दक्षिणादानवर्जितं समाप्य पुनः तस्य यज्ञस्य ऋत्विग्वरणादारभ्य पुनः करणमिति देवयाज्ञिकाः ।

प्रतिहर्त्ता चेत्सर्ववेदसं देयम् ॥ ९ ॥

युगपच्चेद्विरोधाद्विकल्पः(१) ॥ १० ॥

उद्गातृप्रतिहर्त्रोर्युगपदपच्छेदे विरोधाद्विकल्पो नैमित्तिकस्य ॥१०॥

पूर्वदौर्बल्यमानुपूर्व्ये प्रकृतिवत् ॥ ११ ॥

अनयोरेवानुपूर्व्याऽपच्छेदे पूर्वनिमित्तं दुर्बलमुत्तरं च बलवत् । पूर्वविज्ञानानुपमर्दनेनोत्तरस्यानुत्पत्तेः । तद्यथा—प्राकृतं कौशं विज्ञानं विकृतौ चोदकप्राप्तं प्रत्यक्षेण शरविज्ञानेन बाध्यत एव ॥ ११ ॥

यस्मिन्नहन्युद्गात्रपच्छेदोऽहर्गणे तस्यावृत्तिः(२) ॥ १२ ॥

भवति ॥ १२ ॥

पत्न्युदक्या दीक्षारूपाणि निधाय सिकतास्वासीतोपरमणात् ॥ १३ ॥

पत्नी रजस्वला दीक्षारूपाणि शङ्कादीनि निधाय सिकतास्वासीताऽऽरक्तविरमणात् ॥ १३ ॥

तिष्ठेत्सन्धिवेलयोः(३) ॥ १४ ॥

सन्धिवेलयोस्तिष्ठतिक्रिया नियम्यते ॥ १४ ॥

वेदिसमीपे सुत्यासु ॥ १५ ॥

सुत्यासु वर्त्तमानासु वेदिसमीपे तिष्ठेत् ॥ १५ ॥

त्रिरात्रान्ते गोमूत्रमिश्रेणोदकेन स्नापयित्वा परिधानादि करोति सान्निपातिकम्(४) ॥ १६ ॥

---

(१) तदा उद्गात्रपच्छेदनिमित्तं तस्यादक्षिणं समापनं प्राप्नोति, प्रतिहर्त्रपच्छेदनिमित्तं च तस्मिन्नेव प्रयोगे सर्वस्वदानं प्राप्नोतीति विरोधः स्पष्ट एव ।

(२) द्विरात्रादावहर्गणे यस्यां सुत्यायामुद्गात्रपच्छेदो भवति तदैवैकमहरदक्षिणं कृत्वा तस्यैकस्याह्नो व्युत्क्रामतेत्यत आरभ्यावृत्तिः न सकलस्याहर्गणस्य । "अनीतासु चेद्दक्षिणासु" इत्युक्तत्वात् । तृतीयसवनेऽपच्छेदेऽनादिष्टमेव भवति । अन्यस्याऽनुक्तत्वात् । सत्रेषु तु तेषामदक्षिणत्वात् आवृत्तिरेव तस्याह्न इति देवयाज्ञिकाः ।

(३) प्रातःसन्ध्याकाले सायंसन्ध्याकाले च सिकतास्वेव तिष्ठेत् ।

(४) रजोदर्शनाच्चतुर्थेऽहनि स्मृत्युक्तस्नानानन्तरं गोमूत्रमिश्रेणोदकेन तां रजस्वलां स्नापयित्वा वासपरिधानादि कर्म सान्निपातिकं सन्निपत्योपकारकं करोति नारादुपकारकं दीक्षणीयाभूम्युल्लेखनादि ।

पदार्थजातम् ॥ १६ ॥

(१)प्रजातायाश्च दशरात्रादूर्ध्वं स्नानादि ॥ १७ ॥

कर्म भवति ॥ १७ ॥

न गर्भिणीं दीक्षयेदित्येकेऽयज्ञिया गर्भा इति श्रुतेः॥१८॥

नानूबन्ध्या प्रकरणात् ॥ १९ ॥

अनूबन्ध्यां हि प्रकृत्य श्रूयते-"अयज्ञिया वै गर्भा"(श०ब्रा०४-५-२-१०)(२) इति, न सार्वत्रिकम् । तत्रापि चायमर्थवादो मन्त्रस्तुत्यर्थः ॥१९॥

दीक्षितोऽमनोज्ञं (३) स्वप्नं दृष्ट्वा जपेत्पद्यावर्त्ते दुःस्वप्नयात्पापः स्वप्नाद्भूत्यै ब्रह्माहमन्तरं करवे परः स्वप्नमुखा कृधीति ॥ २० ॥

अमुं मन्त्रम् ॥ २० ॥

इन्द्रियं स्कन्नमद्भिरुपासिञ्चेयो मेऽस्य पयसो रसः परि दोषादुदर्पिथः अग्निहोत्रमिव सोमेन तमहं पुनराददं इति ॥ २१ ॥

अनेन मन्त्रेण ॥ २१ ॥

उदकं चेत्तरेत्तदभिमन्त्रयेतोन्दतीर्बलं धत्तौजो धत्त सहो धत्त मा मे दीक्षां मा तपो निर्वधिष्टेति ॥ २२ ॥

अनेन मन्त्रेण ॥ २२ ॥

(४)अवदृष्टश्च ॥ २३ ॥

'च' शब्दादनेनैव मन्त्रेणाभिमन्त्रयेत् ॥ २३ ॥

(५)अमेध्यं दृष्ट्वा सूर्यमुपतिष्ठेताबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषाᳬं श्रेष्ठो दीक्षे मा मा हासीदिति॥२४॥

---

(१) प्रसूतायाः प्रसवदिनादेकादशेऽह्नि ।

(२) इयं श्रुतिः अनूबन्ध्याप्रकरणे पठ्यते न पत्नीप्रकरण इति देवयाज्ञिकाः ।

(३) स्वप्नाध्यायनिन्दितं 'स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति' इत्याद्यनिष्टसूचकं स्वप्नम् ।

(४) 'अवदृष्टश्च' इ० पा० ।

(५) शूद्रान्त्यजपापिष्ठपुरीषादिकं अपवित्रवस्तु ।

अनेन मन्त्रेण ॥ २४ ॥

(१)शोणितं चेत्कुर्याद्रुद्रियाभ्योऽद्भ्यः स्वाहेति जुहुयात् ॥ २५ ॥

निष्ठीवेच्चेत् बीभत्साभ्योऽद्भ्यः स्वाहेति ॥ २६ ॥

धावेच्चेद्वायवे स्वाहेति ॥ २७ ॥

स्विद्याच्चेत्तपस्याभ्योऽद्भ्यः स्वाहेति ॥ २८ ॥

स्वप्याच्चेत्प्रजापतये स्वाहेति ॥ २९ ॥

तच्चैतद्दिवास्वापे भवति ॥ २९ ॥

(२)आर्त्यश्रुकरणे तृप्राभ्योऽद्भ्यः स्वाहेति ॥ ३० ॥

(३)छर्द्याविष्टः पयः पीत्वोदकं वा छर्दयीत निष्ठ्यूतवद्धोमः ॥ ३१ ॥

वयसावप्रस्तुते चमसेऽन्तरिक्षेण पतति यातुधानप्रबोधितश्चमसं यमभ्यचुश्चुतदाग्निष्टच्छुन्धतादिह पुनः स्वाहेति(४) ॥ ३२ ॥

(५)अभ्युपाकृतचमसमुपस्थे कृत्वाग्नऽआयाहि वीतये गृणानो हव्यदातये निहोता सत्सि बर्हिषि स्वाहेति ॥ ३३ ॥

जुहोति । अधस्तनमनुप्राकृते द्रष्टव्यम् ॥ ३३ ॥

---

( १ ) दीक्षितश्चेत्प्रयत्नपूर्वकं स्वदेहाद्रुधिरनिष्कासनं कुर्यात् ।

( २ ) दीक्षितकर्तृके दुःखेनाश्रुपाते ।

( ३ ) छर्दिः वमनम् ।

( ४ ) पक्षिणा सोमचमसोपरि मूत्रादिस्रवणे कृते अध्वर्युः जुहोति ।

( ५ ) भक्षितांश्चमसान्सदसो निष्कास्य तेषां नाराशंसानामाप्यायितानां हविर्धानमध्ये निधानं कृत्वा ( का० श्रौ० ९-१२-७, ८ ) स्तोत्रोपाकरणं ( का० श्रौ० ९-१४-५ ) क्रियते नाराशंसव्यतिरिक्तान्भक्षितान्सदसो निष्कास्य प्रक्षाल्य पुनरुन्नीय स्तोत्रोपाकरणं क्रियत इति सर्वत्र विहितम् । तत्र नाराशंसे तद्व्यतिरिक्ते वा चमसे सदसोऽनिष्कासिते स्तोत्रोपाकरणे कृते प्रायश्चित्तमाह—अभ्युपेति ।

आग्नीध्रीये वा हिरण्यगर्भ इत्यृचा ॥ ३४ ॥

आहवनीये वेति विकल्पः ॥ ३४ ॥

हुताहुतसꣳसर्गेऽङ्गारमन्तः परिधि निर्वर्त्त्य ॥ ३५ ॥

इति पञ्चविंशेऽध्याये एकादशी कण्डिका ।

---

(१)कुशतरुणेन जुहोति हुतस्य चाहुतस्य चाहुतस्य हुतस्य च पीतापीतस्य सोमस्येन्द्राग्नी पिबतꣳ सुतमिति॥१॥

अनेन मन्त्रेण ॥ १ ॥

(२)वषट्कृते ॥ २ ॥

हुताहुतसंसर्गप्रायश्चित्ते चमस उन्नयनम् एवं हि शाखान्तरे श्रूयते—"वस्याभक्षितं चमसमभ्युन्नयन्ति" इति ॥ २ ॥

स्रुक्तं स्वाहेत्यनुवषट्कृते ॥ ३ ॥

(३)जुहोति ॥ ३ ॥

सꣳसर्गकाले वोपपातसामर्थ्यात् ॥ ४ ॥

'वा'शब्दः पक्षान्तरपरिग्रहे । न वा वषट्कारानुवषट्कारयोर्होमः । उपपातो ह्ययं श्रूयते । नैमित्तिकस्य चोपपातकालता न्याय्येत्युक्तम् । यत्पुनरुक्तं वषट्कृतेऽनुवषट्कृते वेति । तद्धोमद्वयाविषयत्वेनाशङ्क्यते ॥४॥

(४) तस्य भक्षणं मा यजमानं तमो विदन्मर्त्विजो मा यः सोममिमं पिबा सꣳसृष्टमभयं क्रतुमिति ॥ ५ ॥

अनेन मन्त्रेण ॥ ५ ॥

(५)अववृष्टभक्षणामिन्दुरिन्दुमवागात्तस्य त इन्द्रविन्द्रपीतस्येन्द्रियावतो गायत्रच्छन्दसः सर्वगणस्य सर्वग-

---

( १ ) परिधीनां मध्ये तत्समीप एवाङ्गारं होमसमर्थं ज्वालारहितपृष्ठमग्निं पृथक्कृत्य दर्भतरुणेन तं संसृष्टं सोमं तस्मिन्नङ्गारे जुहोति ।

( २ ) वषट्कारानन्तरम् ।

( ३ ) तमेव हुताहुतसंसृष्टं सोमम् ।

( ४ ) हुताहुतसंसृष्टस्य सोमस्येत्यर्थः ।

( ५ ) यदा सोमस्योपरि मेघो वृष्टः स्यात् भक्षाधिकारिणां भक्षणम् तस्यादुष्टत्वात्तस्यैव स्वकाले होमानन्तरम् । भक्षमन्त्रमात्रे विशेषोऽयम् ।

ण उपहूतस्योपहूतो भक्षयामीति ॥ ६ ॥

अनेन मन्त्रेण ॥ ६ ॥

स्वकाल एव—

त्रिष्टुप्छन्दसो जगच्छन्दस इति यथासवनम् ॥७॥

विशेषः ॥ ७ ॥

अच्छन्दसमेके(१) ॥ ८ ॥

छन्दः शब्दमेके न कुर्वन्ति ॥ ८ ॥

पतितं चमसमालभतेऽस्कन्पर्जन्यः पृथिवीमस्कन् गामृषभो युवा अस्कन्नेमा विश्वाभूतानि प्रस्कन्नाज्जायतांॅ हविरिति ॥ ९ ॥

अनेन मन्त्रेण । चमसशब्देन च द्रव्यं लक्ष्यते तत्संस्कारात् ॥ ९ ॥

उत्तरपूर्वं जुहोत्युपरवे(२) चमसं दुष्टं प्रजापतये स्वाहेत्यथ येऽन्येऽनादिष्टास्तान्खरे जुहुयादग्नये वैश्वानराय स्वाहेति नाराशꣳसश्चेदुपवायात्तदुक्तम् ॥ १० ॥

नाराशंसश्चेच्छुष्येत । तदुक्तं "पूतभृतश्चमसान्" (का० श्रौ०९-५-२१ ) इति । उत्तरेण सह विकल्पार्थमिदमुच्यते ॥ १० ॥

(३)अन्त्याद्वा ग्रहात्स्तोकमासिच्य भक्षयेयुः ॥ ११ ॥

आग्रयणोऽन्त्यो ग्रह उच्यते अन्तसम्बन्धात्(४) ॥ ११ ॥

कलशश्चेदुपवायात्क्षीरासेचनमेके ॥ १२ ॥

द्रोणकलशश्चेच्छुष्येत क्षीरासेचनमेके कुर्वन्ति ॥ १२ ॥

एके—

हिरण्यवत्रोदकम्(५) ॥ १३ ॥

---

(१) गायत्रच्छन्दस इत्येवमादिपदवर्जितं भक्षमन्त्रं ब्रूयादित्याहुः इति ।

(२) अमेध्यातिपातश्वादयवघ्राणादिना दुष्टं चमसस्थं सोमम् । अन्ये चमसव्यतिरिक्ताः सर्वे सोमाः दुष्टाः तान् खरे ग्रहासादनार्थं कृतेऽध्वर्युर्जुहुयात् । शुष्कस्य नाराशंसस्याग्रयणादाप्यायनं कार्यमिति देवयाज्ञिकाः।

( ३ ) पक्षान्तरमाह—

( ४ ) अन्ते शुष्कनाराशंससमीपे भवो गृहीतोन्त्यः ऐन्द्राग्नवैश्वदेवमरुत्वतीयमाहेन्द्रमहावैश्वदेवानां मध्येऽन्यतम इति देवयाज्ञिकाः ।

( ५ ) सुवर्णसंयुक्तमुदकम् । हिरण्यं मध्ये निधाय तदुपर्यपामासेकः कार्य इति देवयाज्ञिकाः ।

(१)उन्नयने च ॥ १४ ॥

एतदेव भवति । उन्नयन्त्यस्मादित्युन्नयनं पूतभृदुच्यते ॥ १४ ॥

आद्रिभेदने मारुतेन ब्रह्मसाम्ना स्तुवीरन्(२) ॥१५॥

अद्रौ भिन्ने मरुल्लिङ्गास्वृक्षु ब्रह्मसाम क्रियते । ब्रह्मसाम च माध्यन्दिने ब्राह्मणाच्छंसिविग्रहस्तोत्रम् ॥ १५ ॥

(३) चतुस्त्रिंशद्धोमश्च(४) ॥ १६ ॥

आद्रिभेदने भवति ॥ १६ ॥

(५)सोमापहरणे विधावतेच्छतेति ब्रूयात् ॥ १७ ॥

अध्वर्युर्बहुविषयत्वात्प्रेषणस्य ॥ १७ ॥

अदर्शनेऽरुणपुष्पाण्यर्जुनान्यभिषुणुयात् ॥ १८ ॥

अर्जुनशब्दश्चात्र तृणविषयः(६) । 'अभिषव'शब्देन च यागसाधनत्वोपलक्षणम् । श्रुतप्रतिनिधिरयम् । ततश्च सोमशब्देनोपलक्षणम् ॥१८॥

(७)श्येनहृतं पूतीकानादारानरुणदूर्वा हरितकुशान्पूर्वालाभे पूर्वालाभ उत्तरान् ॥ १९ ॥

---

( १ ) तस्मिन्नुपक्षीणेऽपि पयो हिरण्यवदुदकं वा सिञ्चेत् ।

( २ ) मरुद्देवताकेन ब्रह्मसाम्ना उद्गातारः स्तुवीरन् ।

( ३ ) अथाद्रिभेदन एवाध्वर्यवं नैमित्तिकमाह—

( ४ ) 'परमेष्ठिने स्वाहा' 'प्रजापतये स्वाहा' ( वा० सं० ८–५४ ) इत्यादि 'सलिलाय स्वाहा' इत्यन्तैर्मन्त्रैः चतुस्त्रिंशदाहुतीनां होमः ।

( ५ ) केनचिच्छत्रुणा सोमापहरणे कृते ।

( ६ ) "शष्पं बालतृणं घासो यवसं तृणमर्जुनम्" । ( अमर० २–५–१६७ ) ।

( ७ ) खदिरादेर्बहुकालीनस्य वृक्षस्य ये वल्लीरूपा अङ्कुरा उत्पद्यन्ते तच्छ्येनहृतमित्युच्यते । तथा पूतीकान् अस्यैवं व्याख्यानम् आदारानिति । अथवा आदारानभिषुणुयात् तद्व्याख्यानं पूतीकानिति । श्रुत्युक्तं पदमुपादाय पर्यायान्तरप्रयोगं करोति सूत्रकारः । श्रुत्युक्तं चादारानित्येतत् । पूतीका रोहिषतृणमिति निघण्टौ । तथा अरुणदूर्वा अव्यक्तरागा दूर्वाः । तथा हरितकुशान् अशुष्कानार्द्रान्दर्भान् । माधवाचार्यास्तु पूतीकान् श्यामलान् सोमसदृशान् लताविशेषान् पूतीकसंज्ञानभिषुणुयादिति व्याख्यातवन्तः ।

अभिषुणुयात् । एवं ह्यत्र श्रूयत(१) इति ॥ १९ ॥

(२) एकां गा दत्त्वा समाप्य पुनर्यज्ञः ॥ २० ॥

अत्र च गोः सङ्ख्यासम्बन्धो यन्नाः तदेकामिति । ततश्च हिरण्यादीनामनिवृत्तिः ॥ २० ॥

अवभृथान्ते वा श्रुतिसामर्थ्यात् ॥ २१ ॥

अवभृथान्त एव वा पुनर्यज्ञो भवति । तथा "अथावभृथादेवोदेत्य पुनर्दीक्षेत" ( श० ब्रा० ४-५-१०-६ ) इति श्रुतेः ॥ २१ ॥

कलशभेदने वषट्कारनिधनं ब्रह्मसाम ॥ २२ ॥

कर्तव्यम् ॥ २२ ॥

अनुलिप्सध्वमिति प्रेष्यति ॥ २३ ॥

अध्वर्युः । अन्ये चानुलिप्सन्ते ॥ २३ ॥

यदनुलभेरंस्तदेकधनैरभ्युन्नीय प्रभावयन्तःप्रचरेयुः(३)॥२४॥

आग्रयणाद्वाऽनुपलभमानेषु पूर्ववत् ॥ २५ ॥

अनुपलभ्यमाने सोमे आग्रयणादादाय एकधनैरभ्युन्नीय पूर्ववत्प्रभावयन्तः प्रचरेयुः(४) ॥ २५ ॥

अनीतासु चेद्दक्षिणासु भेदनं पूर्ववद्दत्त्वा तथैव यज्ञः(५)॥२६॥

"स यद्यनीतासु दक्षिणासु कलशो दीर्येत तत्राप्येकामेव गां दद्यादथावभृथादेवोदेत्य पुनर्दीक्षेत" (श०ब्रा०४-५-१०-७) इति हि श्रुतेः ॥२६॥

इति पञ्चविंशेऽध्याये द्वादशी कण्डिका ।

---

( १ ) "यदि सोममपहरेयुः विधावतेच्छतेति ब्रूयात्०" ( श० ब्रा० ४-५-१०-१,६ ) इत्यादि ।

( २ ) गवां शतस्य स्थाने एका गौः ।

( ३ ) यत्परिमाणं सोमं प्रसृतिमात्रं वा अञ्जलिमात्रं वा अधिषवणचर्मणि पतितं प्राप्नुयुः तदेकधनस्थैर्जलैरभ्युन्नीयाप्याय्याभ्युन्नयनेनोपसिेचनेन बहुलं कृत्वा प्रभावयन्तः सर्वेषु द्रोणकलशसोमसम्बन्धिद्रव्येषु प्रापयन्तः प्रचरेयुः सर्वं द्रोणकलशसोमकार्यं तेन सोमेन कुर्युरिति देवयाज्ञिकाः ।

( ४ ) द्रोणकलशान्तरं सम्पाद्य ।

( ५ ) पूर्ववत् एकां गां दत्त्वा अवभृथान्त एव पुनः स एव यज्ञो भवति यः प्राक्क्रियमाण इति देवयाज्ञिकाः ।

प्रातः सवनाच्चेत्सोमोऽतिरिच्येत तमुन्नीयोपाकरण-
मस्ति सोमो अयमिति(१) ॥ १ ॥

मन्त्रान्तरविधानादितरो निवर्त्यते ॥ १ ॥

मरुत्वतीषु गायत्रेण स्तुवीरन् ॥ २ ॥

मरुल्लिङ्गासु ऋक्षु गायत्रेण साम्ना स्तुवीरन् ॥ २ ॥

ऐन्द्रावैष्णवᳪ होता शᳪसति ॥ ३ ॥

(२)ऐन्द्रावैष्णवं शस्त्रं होता शंसति ॥ ३ ॥

यस्मात्स्तोमादतिरिच्येत स एव कार्यः सर्वत्र(३) ॥ ४ ॥

यत्स्तोमसमनन्तरं सोमातिरेको भवति स एव कार्यः सर्वत्र । स-
र्वत्रग्रहणात्सवनान्तरेऽपि ॥ ४ ॥

माध्यन्दिनाच्चेत्पूर्ववदुपाकरणम्(४) ॥ ५ ॥

कर्तव्यम् ॥ ५ ॥

(५)बण्महाँ२ असीति बृहतीष्वादित्यवतीषु
गौरीवितेन स्तुवीरन् ॥ ६ ॥

गौरीवितं साम, तेन स्तुवीरन् ॥ ६ ॥

---

(१) अच्छावाकोक्थ्यविग्रहसम्बन्धिचमसोन्नयनानन्तरं यदि पू-
तभृति सोमः चमसेषु पूर्णेष्वप्यवशिष्येत तदा उक्थ्यान्ते तमतिरिक्तं सर्वमपि सोमं दशसु होत्रादीनां चमसेषु विभागेनोन्नीय तृणाभ्यां होतृचमसमुपस्पृश्य 'अस्ति सोम' इत्यनेनैव मन्त्रेण स्तोत्रोपाकरणं कुर्यादिति देवयाज्ञिकाः ।

(२) तत्स्तोत्रानन्तरम् ।

(३) प्रातः सवनेऽच्छावाकोक्थ्ये यस्त्रिवृदादिस्तोमो भवति स एव प्रायश्चित्तार्थे स्तोत्रेऽपि कार्यः । न केवलमत्र किन्तु सर्वत्र माध्यन्दिने सवने तृतीयसवने चेति । माध्यन्दिनेऽपि सवने अन्त्य उक्थ्यस्तोत्रे यस्त्रिवृदादिस्तोमस्तत्र सोमातिरेकनिमित्तस्तोत्रेऽपि स एव कार्यः । एवं तृतीयसवनेऽपि यज्ञायज्ञियान्ते सोमातिरेके अन्तिमस्तोत्रस्तोम एव सोमातिरेकनिमित्तस्तोत्रेऽपि भवतीति देवयाज्ञिकाः ।

(४) यदि अन्तिमोक्थ्यचमसोन्नयनानन्तरं पूतभृति सोमोतिरिच्येतेति देवयाज्ञिकाः ।

(५) ( वा० सं० ३३-३९ )

(१)एतत्कृत्वोक्थ्यं पूर्ववद्धोता(२) ॥ ७ ॥

"ऐन्द्रावैष्णवः शंसति" इति एतदुक्तं भवति ॥ ७ ॥

तृतीयसवनाच्चेद्विष्णोः शिपिविष्टवतीषु गौरीवितेन ॥ ८ ॥

तृतीयसवनाच्चेदतिरिच्येत शिपिविष्टविष्णुलिङ्गासु ऋक्षु गौरीवितेन स्तुवीरन् ॥ ८ ॥

(३)वा गृहीत्वा विगृह्णीयात् ॥ ९ ॥

'वा' शब्दाद्यदि पूर्वेण न निःशोषितः सोमस्तत उक्थ्यं गृहीत्वा विगृह्णीयात् ॥ ९ ॥

उक्थ्याच्चेत्षोडशी कार्यः(४) ॥ १० ॥

उक्थ्यसंस्थाच्चेत्तृतीयसवने सोमोऽतिरिच्येत षोडशी कर्तव्यः॥१०॥

षोडशिनश्चेदतिरात्रः ॥ ११ ॥

'कर्तव्य' इति वर्त्तते ॥ ११ ॥

अतिरात्राच्चेद् बृहत्(५) ॥ १२ ॥

स्तोमः कर्तव्यः ॥ १२ ॥

महाव्रतमेके यथोक्तम्(६) ॥ १३ ॥

प्रदेशान्तरे ॥ १३ ॥

अप्तोर्यामो वा अन्त्याच्चेत्तस्यैवावृत्तिः ॥ १४ ॥

अन्त्यशब्देनाप्तोर्यामोऽभिधीयते । ततश्चेदतिरिच्येत तस्यैवावृत्तिः कार्या ॥ १४ ॥

---

(१) 'एतत्कृत्वोक्थ्यम्' इति पाठोनास्ति ।

(२) स्तोत्रगानानन्तरम् ।

(३) 'एतत्कृत्वोक्थ्यम्' इति पाठः 'वा' इत्यस्य पूर्वम् ।

(४) उक्थ्यसंस्थः प्रारब्धोऽपि निमित्तवशात्षोडशिसंस्थः कार्य इति देवयाज्ञिकाः ।

(५) तदा तदुपयोगाय विष्णोः शिपिविष्टवतीषु बृहतीषु बृहत्साम कर्तव्यम् । शाखान्तरात् ।

(६) अतिरात्रादतिरिक्ते सोमे तदुपयोगाय महाव्रतं साम यथा गवामयने उक्तम्—"पृष्ठोपाकरणं वाणेन०" ( का० श्रौ० १३-२-१८ ) इत्यादिना तथा कुर्वन्तीति देवयाज्ञिकाः ।

(१)नातीरेकोऽस्तीति श्रुतेः ॥ १५ ॥

"न ह्यतोऽभ्यधिकोऽतिरेकोऽस्ति" इति श्रुतेः ॥ १५ ॥

पूर्वात्सवनादतिरिक्तस्योत्तरे सम्पावनमेके ॥१६॥

एके आचार्याः पूर्वसवनातिरिक्तसोममुत्तरे सवने सम्पावयन्ति(२)। अस्य विधेरर्थवादोऽयम् ॥ १६ ॥

तं निकामयमानोऽभ्यतिरिच्येत इति श्रुतेः ॥ १७ ॥

तमुत्तरसवनसोमं निकामयमानः पूर्वसोमोऽभ्यतिरिच्यते यद्यहमुत्तरं सवनसोमं प्राप्स्यामीति ॥ १७ ॥

तृतीयसवनाच्चेद्धारियोजनेऽवनीयहोमः(३) ॥१८॥

अस्मृतावृजीषमिश्रस्याप्स्ववहरणम् ॥ १९ ॥

यदि हारियोजनकाले न स्मर्यते तदा ऋजीषमिश्रमप्सु अवहरेत्॥१९॥

दीक्षितश्चेदुपतप्येतौष्धानां येनेच्छेत्तेन चिकित्सेत् ॥२०॥

उष्यानि च सर्वसुरभीणि तेषां येनेच्छेत्तेन चिकित्सेत्(४) ॥२०॥

आग्नीध्रमेनं नयतेति ब्रूयात् कृतं चेत् ॥ २१ ॥

अध्वर्युर्बहुवचनान्तत्वादन्येनेतारस्तच्चाग्नीध्रं यदि कृतं भवति तदैव ब्रूयादिति ॥ २१ ॥

एवं प्राप्त आह—

अकृतेऽप्यविशेषात् ॥ २२ ॥

अकृतेऽप्याग्नीध्रे आग्नीध्रमेनं नयतेति वक्तव्यमेव। अविशेषेण हि श्रूयते—"तस्माद्यं दीक्षितानामवर्त्यं विन्देदाग्नीध्रमेनं नयतेति ब्रूयात्" ( श० ब्रा० ३-६-१-२९ ) इति ॥ २२ ॥

---

( १ ) न ह्यतोर्यामात्परं संस्थान्तरमस्त्यतिरिक्तविनियोगाय।

( २ ) सम्पावनं पवमानकाले "पूतभृति पूयमानेन तत्सवनसोमेन सह पावनम्।

( ३ ) द्रोणकलशे गृहीतस्य हारियोजनस्य मध्येऽतिरिक्तस्य सोमस्य प्रक्षेपं कृत्वा होमः कार्य इति देवयाज्ञिकाः।

( ४ ) प्रथमव्रते प्रक्षिप्तानामौषधानां व्रीहियवादीनां सर्वसुरभीणां च शुण्ठीपिप्पल्यादीनां मध्ये चिकित्सको वैद्यो येनौषधेन चिकित्सितुमिच्छेत् तेन भिषज्येत्।

तदा च—

(१)तद्देशो वासः ॥ २३ ॥

दीक्षितस्य भवति ॥ २३ ॥

वासतीवरमुदकमाचामेदित्येके चात्वालगताभ्यः ॥२४॥

वसतीवरीभ्यः ॥ २४ ॥

तत्र मन्त्रमाह—

आपः प्रजापतिर्यज्ञो यज्ञस्य भेषजमसीति ॥ २५ ॥

अनुसवनमेनमालभेरन्वसव एतद्वः प्रातःसवनं तद्र-क्षध्वं तद्गोपायध्वं तद्वो मा व्यवच्छैत्सीदिति(२) ॥२६॥

रुद्रा आदित्या इत्युत्तरयोः सवनयोः ॥ २७ ॥

विशेषः ॥ २७ ॥

म्रियेत चेन्निर्मन्थ्येन दग्ध्वा शामित्राद्वास्थीन्युपनह्य नेदिष्ठिनमुपदीक्ष्य तेन सह यजेरन्(३) ॥ २८ ॥

मृतं यजमानं निर्मन्थ्येन शामित्रेण वा दग्ध्वास्थीन्युपनह्य तस्य यो नेदिष्ठी स्वो भ्राता स्यात् तं दीक्षयित्वा तेन सह यजेरन् ॥ २८ ॥

(४)सत्रगणयज्ञे सहत्वशब्दात ॥ २९ ॥

एतच्च सत्रे भवति गणयज्ञे च 'तेन सहयजेरन्'इति सहत्वश-ब्दात् ॥ २९ ॥

(५)एकयज्ञे दर्शपूर्णमासवत् ॥ ३० ॥

---

(१) ज्वरादिरोगशान्तिं यावत् ।

(२) एनं ज्वराद्यभिभूतं दीक्षितं सर्वे ऋत्विजः सवनान्तेषु स्पृ-शेरन् ।

(३) स्वारणिभ्यां तदानीमेव मथितेनाग्निना शामित्रैकदेशेन वा दग्ध्वा अग्नौ स्मार्तविधिरहितं दाहमात्रं कृत्वा तस्य दीक्षितस्य दग्ध-स्य अस्थीनि शाखान्तरात्कृष्णाजिने बध्वा । पत्न्यपि मृतस्यैव तत्र प-त्नी कर्म करोति नेदिष्ठी तु यजमानकर्मेति धूर्तस्वामिन इति देवयाज्ञि-कभाष्ये स्पष्टीकृतम् ।

(४) तयोरेवानेकयजमानसद्भावात् नान्यत्र ।

(५) एकस्य यजमानस्य यज्ञ एकयज्ञोऽग्निष्टोमादिः । विधिवदेव दाहः कार्यः । पत्नीमरणेऽप्येवमेवेति देवयाज्ञिकाः ।

"मरणान्तं भवति" (का० श्रौ० २५-७-९) इत्येतदुक्तं भवति ॥३०॥

(१)एतत्कृत्वा राजानमभिषुत्यागृहीत्वा ग्रहान् दक्षिणपूर्वस्यां वेदिस्रक्त्यां यामेन स्तुवीरन् ॥ ३१ ॥

यथोपदेशमेतत्कृत्वा राजानमभिषुत्य ग्रहानगृहीत्वैव दक्षिणपूर्वस्यां वेदिस्रक्त्यां यामेन साम्ना स्तुवीरन् ॥ ३१ ॥

तिसृषु पराक्षु सार्पराज्ञीषु(२) ॥ ३२ ॥

तिसृषु पराचीषु अनभ्यावृत्तासु सार्पराज्ञीषु स्तुवीरन्निति। बहुवचनादुद्गातारः ॥ ३२ ॥

मार्जालीये वा ॥ ३३ ॥

स्तुवीरन्निति विकल्पः ॥ ३३ ॥

(३)स्तुते मार्जालीयं त्रिः परियन्त्यपसव्य॑ꣳ सव्योरूनाघ्नानाः स्तोत्रिया जपन्तः ॥ ३४ ॥

स्तुते स्तोत्रे उद्गातारो मार्जालीयमपसव्यं त्रिः परियन्ति सव्योरूनाघ्नानाः स्तोत्रियाश्च जपन्तः ॥ ३४ ॥

(४)अग्न आयूꣳषि पवस इति प्रतिपद्भवति ॥३५॥

पवमानस्य प्रथमा ऋक्प्रतिपदुच्यते ॥ ३५ ॥

संवत्सरेऽस्थीनि याजयेयुः ॥ ३६ ॥

प्रयोजकव्यापारेण प्रयोज्यव्यापारो लक्ष्यते अस्थीनि याजयेरन्निति । यथा-'निषादस्थपतिं याजयेत्' इति ॥ ३६ ॥

इदं विचार्यते-किं मरणात्संवत्सरेऽस्थियज्ञः, उत कर्मापवर्गादिति।

---

( १ ) एतत् पूर्वोक्तं "निर्मन्थ्येन दग्ध्वा०" (का० श्रौ० २५-१३-२८) इत्यादिकं कृत्वा सौत्येऽहनि सोमाभिषवं कृत्वेत्यर्थः ।

( २ ) पराक्षु पराङ्मुखीष्वनावृत्तासु सार्पराज्ञीषु सर्पराज्ञी नाम ब्रह्मवेदिनी सर्पराजस्य स्त्री कद्रूः पृथिव्यभिमानिनी, तया दृष्टासु । "आयं गौः०" ( वा० सं० ३-६,७,८ ) इत्यादीनां तिसृणामृचां 'सार्पराज्ञी' इति नामधेयम्। अगृहीत्वा ग्रहानित्युक्तेऽप्युपांश्वन्तर्यामयोर्न प्रतिषेध इति ।

( ३ ) 'आयं गौः' इत्यादि स्तोत्रपाठपूर्वकपरिगमनानन्तरं होता तस्मिन्नेव देशे उपविश्य प्राचीनावीती दक्षिणाभिमुखः सार्पराज्ञीः शंसति। एतावन्मृतोपकाराय वैकृतं कर्म अस्मिन्सुत्याहे भवति ।

( ४ ) "अग्न ऽआयूꣳषि०" ( वा० सं ३५-१६ )

नियमकारिशास्त्राभावाद् अनियमे प्राप्त आह—

**कर्मापवर्गादसम्भवान्मरणस्य(१) ॥ ३७ ॥**

कर्मापवर्गात्संवत्सरेऽस्थियज्ञः । न हि मरणं संवत्सरविशेषणत्वेन सम्भवति कदाचित्सत्रमध्येऽपि संवत्सरः पूर्यत इति । तस्मात्कर्मापवर्गादेव संवत्सरेऽस्थियज्ञः ॥ ३७ ॥

**(२)अपरिमितस्तोमेन यजेरन् ॥ ३८ ॥**

ज्योतिष्टोमे हि स्तोमपरिमाणमुक्तम् , इहापरिमितस्तोमोऽभिधीयते, वचनात् ॥ ३८ ॥

**त्रिवृद्बहिष्पवमानेन वा ॥ ३९ ॥**

अस्थीनि यजेरन् ॥ ३९ ॥

तदा च—

**सप्तदशमन्यत् ॥ ४० ॥**

सप्तदशस्तोमकमन्यद्भवति(३) ॥ ४० ॥

**मैत्रावरुणाग्रान् ग्रहान् गृह्णीयात् ॥ ४१ ॥**

'ऐन्द्रवायवात्पूर्वं मैत्रावरुणो गृह्यत' इत्युक्तम् , एतद् व्यूढछन्दसि द्वादशाहे(४) ॥ ४१ ॥

**(५)प्रातिनिधिको याजमानं कुर्यात् ॥ ४२ ॥**

नह्यस्थ्नां कर्तृत्वं सम्भवति ॥ ४२ ॥

**दीक्षणीयापुरुषसंस्काराशीर्वर्जम् ॥ ४३ ॥**

क्रियते ॥ ४३ ॥

**समाप्तेऽस्थीनि सपात्राण्यरण्ये निवपेयुः ॥ ४४ ॥**

---

(१) मरणस्यावधित्वे तत्सत्रमध्य एवानुष्ठानमस्थियज्ञस्यापद्येत । तच्चायुक्तम् असम्भवात् कर्ममध्ये कर्मान्तरनिषेधात् ।

(२) अस्मिन्नस्थियज्ञ शास्त्रोक्तपरिमाणातिक्रान्तस्तोमो भवति ।

(३) बहिष्पवमानव्यतिरिक्तमाज्यादिस्तोत्रजातं सप्तदशस्तोमकं भवतीति ।

(४) अस्थियज्ञे प्रथमं मैत्रावरुणं गृहीत्वा कस्यचिद्धस्ते समर्प्य पश्चादैन्द्रवायवं गृहीत्वासाद्य ततो मैत्रावरुणस्य परिमार्जनप्रभृति सादनं कृत्वा ततः शुक्रादित्यग्रहणम् प्रकृतिवदिति देवयाज्ञिके स्पष्टम् ।

(५) प्रतिनिधिभूतः पुत्रादिः ।

प्रतिपत्त्यन्तराविधानात् ॥ ४४ ॥

पुनर्दाहो वा युक्तत्वात्पात्राणाम् ॥ ४५ ॥

वाशब्दः पक्षान्तरपरिग्रहे । पुनर्दाहो भवति नारण्ये निवापः । कुत एतत् ? युक्तत्वात् पात्राणाम् । तानि हि प्रतिपत्त्या युज्यन्ते, द्वितीयान्तनिर्देशात् । "दक्षिणहस्ते जुहूँ सादयति" ( का०श्रौ० २५-७-२१ ) इत्येवमादि । अतस्तत्संस्कारात् पुनर्दाहः । यद्यपि चाहिताग्निभिर्दहन्ति यज्ञपात्रैश्चेति करणता पात्राणां, तथापि सादने प्रतिपत्तिस्तेषां द्वितीयान्तनिर्देशात् । तस्मात्साधूक्तं 'पुनर्दाहो वा युक्तत्वात्पात्राणाम्' इति ॥ ४५ ॥

ततः सञ्चयनादि(१) ॥ ४६ ॥

तत ऊर्ध्वं सञ्चयनादि कर्त्तव्यम् ॥ ४६ ॥

इति पञ्चविंशेऽध्याये त्रयोदशी कण्डिका ।

---

उखां चेद्बिभ्रन्म्रियेत सोपकरणमाहिताग्न्यावृता दग्ध्वा नेदिष्ठ्यग्निं चित्वा तमस्मा अनुदिशेदित्येके(२) ॥ १ ॥

उखाभरणेन साग्निकोऽहर्गणो लक्ष्यते । तत्र चेन्म्रियेत कश्चिद्यजमानः सोपकरणमाहिताग्न्यावृता दहेत् । एवं ह्यत्र श्रूयते—"यद्यु म्रियते स्वैरेव तमग्निभिर्दहन्त्यथावाग्निभिरितरे यजमाना आसत इति" ( श० ब्रा० १२-३-५-२ )। तत्र च नेदिष्ठ्यग्निं चित्वा तमस्मा अनुदिशेदित्येके । नेदिष्ठी हि तत्कार्यं करोति एवं च तत्कार्यं कृतं भवति यदि तत्फलमनुदिशतीत्यभिप्रायः ॥ १ ॥

न कर्मफलासम्भवात्(३) ॥ २ ॥

---

( १ ) पुनर्दाहानन्तरं सञ्चयनादि अस्थिसञ्चयनप्रभृति सर्वमौर्ध्वदहिकं स्मार्तं भवतीति देवयाज्ञिकाः ।

( २ ) सोपकरणमग्निपात्ररूपोपकरणसंयुक्तम् आहिताग्न्यावृता मृतस्याहिताग्नेः सम्बन्धिन्या इतिकर्तव्यतया सन्दीपनवत्यधिश्रयणादिकया (का० श्रौ० २५-७-१२) दग्ध्वा साग्निचित्यं क्रतुमारम्भप्रभृति समाप्त्यन्तं कृत्वा तं क्रतुं तस्य क्रतोः फलं अस्मै दीक्षामध्ये मृताय अनुदिशेत् दानरूपेण तस्य यज्ञस्य फलं दद्यादिति देवयाज्ञिके स्पष्टम् ।

( ३ ) न हि कर्मफलं दातुं शक्यते अस्यामूर्तत्वेनानुपादेयत्वात् । तेन नेदिष्ठिना स्वेष्वग्निषु स्वकीयेन द्रव्येणानुष्ठितस्य साग्निचित्यस्य क्रतोः फलं नेदिष्ठिन एवेति ।

नैतदेवं फलानुदेशः कर्त्तव्य इति। न हि कर्मफलप्रदानं सम्भवति। अकृताभ्यागमकृतविप्रणाशप्रसङ्गात्। तस्मान्नैवानुदेशः कर्त्तव्यः॥२॥

**उपदीक्षी स्वेष्वाग्निषु नखनिकृन्तनाद्युद्वादनान्तꣳ सान्निपातिकम् ॥ ३ ॥**

उपदीक्षी नेदिष्ठी स्वानग्नीन्विहृत्य नखनिकृन्तनाद्युद्वादनान्तꣳ सान्निपातिकं कर्म करोति ॥ ३ ॥

**तेषूपहवमिष्ट्वाग्नी सꣳसृजेत ॥ ४ ॥**

दीक्षिता उपह्वयध्वमित्येवमुपहवमिष्ट्वाऽग्निसंसर्गं कुर्यात् ॥ ४ ॥

**अनाहिताग्निश्चेत्तेष्वेवेत्येके वैश्वानरं निर्वपेत् यस्याग्निभिरन्यं याजयेयुरिति वचनात् ॥ ५ ॥**

यद्यनाहिताग्निर्नेदिष्ठी भवति तदा तेष्वेवाग्निषु नखनिकृन्तनादि करोति, ततश्च वैश्वानरनिर्वापः कार्यः। एवं हि श्रूयते-"यस्याग्निभिरन्यं याजयेयुर्यो वा यजेत् वैश्वानरं निर्वपेत्" ( का०श्रौ०२५-८-१६ ) इति। तस्य चायमेव विषय इत्यभिप्रायः ॥ ५ ॥

एवं प्राप्त आह—

**नाश्रुतेः ॥ ६ ॥**

नैतदेवं तेष्वेवाग्निषु नेदिष्ठ्यपि करोतीति। न ह्येवं श्रूयत इति ॥६॥

वैश्वानरस्य तर्हि को विषयः?

स उच्यते—

**आपदि वैश्वानरः ॥ ७ ॥**

सत्रसम्मोहे सति परकीयैरग्निभिर्यागे कृते वैश्वानर इति(१) ॥ ७ ॥

**समानजनपदसꣳसवे महारात्रे प्रातरनुवाकमुपाकृत्य पूर्वः पूर्वः कर्म प्रवर्त्तयेत्(२) ॥ ८ ॥**

"राजन्यः समानजनः" ( का० श्रौ० २२-१-२९ ) इत्युक्तम्। तेषां

---

( १ ) तस्मादनाहिताग्नीनामत्रानधिकार एवेति।

( २ ) यदा द्वौ यजमानौ मिथः प्रीतिरहितौ वसन्तादिके यागकाले वर्षान्तरादि प्रतीक्षमाणावतिक्रान्तं मन्यमानौ स्वाधिकारप्रवृत्तौ एकस्मिन्देशे गिरिनद्यादिव्यवधानं विना यागार्थं सोममेकस्मिन्काले सुनुतः तदा समेत्य सवनात्संसव इत्युच्यते। सर्वं कर्म सत्वरं प्रथमं प्रथमं कारयेदिति देवयाज्ञिके स्पष्टम्।

यदि संसवो भवति । समित्येकीभावे अनद्यन्तरेऽग्निर्यन्तरे वा संसवो भवति तत्र कर्म महारात्रे प्रातरनुवाकमुपाकृत्य इतरोऽपि इतरापेक्षया पूर्वः पूर्वः कर्म प्रवर्त्तयेत् ॥ ८ ॥

## सुसमिद्धहोमः(१) ॥ ९ ॥

कर्त्तव्यम् ॥ ९ ॥

## संस्थोत्तरं च कुर्यात्(२) ॥ १० ॥

इतरापेक्षयैव संस्थोत्तरं कर्त्तव्यम् ॥ १० ॥

## (३)इच्छन्वृषणवती प्रतिपत् ॥ ११ ॥

पवमानस्य प्रथमा स्तोत्रिया प्रतिपदुच्यते । सेच्छन्वृषणवतीति इच्छयान्वयप्राप्तैव ॥ ११ ॥

## अनुसवनं वा ॥ १२ ॥

'अनु'शब्दः प्रतिशब्दस्यार्थे । प्रतिसवनं वा वृषणवती भवति न बहिष्पवमान एवेति विकल्पः ॥ १२ ॥

## (४)बृहद्रथन्तरपृष्ठः ॥ १३ ॥

संसवस्तोमः कार्यः । एवं हि श्रूयते—"संसव उभे कुर्यात् गोसव उभे कुर्यात् अभिजितावप्येकाहे उभे बृहद्रथन्तरे कुर्यात्" इति ॥१३॥

## तौरश्रवसे माध्यन्दिने पवमाने तदावपनश्रुतेः ॥१४॥

तौरश्रवसे सामनी माध्यन्दिने पवमाने प्रक्षेप्तव्ये । कुत एतत् , त-

---

( १ ) अतिशीघ्रं कर्म कुर्वद्भिरपि सुसमिद्धे एवाग्नौ होमः कार्य इति।

( २ ) इच्छन्परकीययागापेक्षया स्वकीये यज्ञे संस्थोत्तरं संस्थाधिक्यं कुर्यात् । यदीतरेणाग्निष्टोमः प्रारब्धः तद्यत्यग्निष्टोमं कुर्यात् । यद्यत्यग्निष्टोमस्तर्ह्युक्थ्यम् , यद्युक्थ्यस्तदा षोडशिनम् , यदि षोडशी तदातिरात्रम् । इच्छन्प्रारब्धामेव संस्थाम् । कर्कादयस्तु 'इच्छन्' इत्येतत्पदमग्रिमेण सूत्रेण योजयन्ति। तेन तन्मते संस्थाधिक्यं नियमेन वृषणवती प्रतिपद्विकल्पेनेति । तदयुक्तम् । मूलभूतताण्ड्य ( ताण्ड्य० ९-४ ) श्रुतिविरोधात् शाखान्तरविरोधाच्च । तत्र हि संस्थाधिक्यस्यैव विकल्पो दृश्यते न प्रतिपद इति देवयाज्ञिकाः ।

( ३ ) 'वृषन्' शब्दयुक्ता—'पवस्वेन्दो वृषा सुत' इत्यादिका ऋक् वृषणवती ।

( ४ ) "उभे बृहद्रथन्तरे कार्ये" ( ताण्ड्य० ९-४ ) इति ताण्ड्ये श्रवणात् ।

दावपनश्रुतेः। तत्र ह्यावापः श्रूयते—तदेव प्रकृत्य "अत्र ह्यावपन्ति" "अत्रोद्वपन्ति" इति ॥ १४ ॥

आभीकमाभिनिधनमाभीशवानि चैके ॥ १५ ॥

एके आचार्या आभीकाद्यान्यपि सामान्यावपन्ति ॥ १५ ॥

प्रातःसवने जुहोति संवेशायोपवेशाय गायत्र्यै छन्दसेऽभिभूत्यै स्वाहेति ॥ १६ ॥

अनेन मन्त्रेण। आगन्तुत्वादन्ते ॥ १६ ॥

त्रिष्टुभे जगत्या इत्युत्तरयोः सवनयोः ॥ १७ ॥

विशेषः ॥ १७ ॥

(१)विहव्यीयसजनीयकयाशुभीयानि होता शंसति ॥१८॥

सूक्तनामधेयान्येतानि बहिष्पवमानस्तोत्रसमनन्तरं यच्छस्त्रं तत्रैतानि होता शंसति ॥ १८ ॥

साख्यमरणमिच्छन्तः प्राजापत्यर्चा जुहुयुः(२) ॥१९॥

सखिसम्बन्धि साख्यं तन्मरणमिच्छन्तः प्राजापत्यर्चा जुहुयुः ॥१९॥

(३)प्रातःसवनेऽध्वर्युर्माध्यन्दिने होतोद्गाता तृतीयसवने ॥ २० ॥

जुहोति ॥ २० ॥

अनुसवनं ब्रह्मा गृहपतिश्च ॥ २१ ॥

जुहुतः(४) ॥ २१ ॥

सर्वमरणमिच्छन्तः सर्वेऽनुसवनम् ॥ २२ ॥

सर्वेषां प्रतिपक्षनिक्षिप्तानां मरणमिच्छन्तः सर्व एवैतेऽनुसवनं

---

(१) 'विहव' शब्दोऽस्मिन्नस्तीति विहव्यीयम् 'ममाग्ने वर्च' इति। यो जात एव प्रथमो मनस्वानिति सजनीयमिति देवयाज्ञिकाः।

(२) सदृशः सदृशस्य सखा। परकीयोऽध्वर्युरध्वर्योः सखा, होता होतुः, उद्गातोद्गातुः, ब्रह्मा ब्रह्मणः, यजमानो यजमानस्य। अध्वर्युहोत्रुद्गातृब्रह्मगृहपतयः परकीययज्ञस्याध्वर्य्वादेः सख्युर्मरणमिच्छन्तो वाञ्छन्तः प्राजापत्यर्चा "प्रजापते न०" ( वा० सं० २३-६५ ) इत्यनया उक्तकाले होमं कुर्युरिति देवयाज्ञिकभाष्ये।

(३) होमकालमाह—

(४) त्रिष्वपि सवनेष्वन्ते ब्रह्मा गृहपतिश्च जुहुयाताम्।

जुहति ॥ २२ ॥

**नद्यन्तरेऽसꣳस्रवो गिरिभिच्चेत् ॥ २३ ॥**

गिरिं भित्वा या नद्यागता तदन्तरे संस्रवो न भवति, संस्रवहोम-निमित्तं न भवतीत्यर्थः(१) ॥ २३ ॥

**गिरौ (२) ॥ २४ ॥**

गिर्यन्तरेऽप्यसंस्रवः ॥ २४ ॥

**(३)रथाह्ने च ॥ २५ ॥**

असंस्रवः । यावन्तं प्रदेशमह्ना रथो गच्छति तदन्तेऽप्यसंस्रवः ॥२५॥

**(४)सर्वत्राऽविद्विषाणानाम् ॥ २६ ॥**

अविद्विषाणानां तु सर्वत्रैवासंस्रवः ॥ २६ ॥

**विद्वेषेऽप्ययं वायुर्महान्त्समुद्र इति श्रुतेः ॥ २७ ॥**

अन्यतरविद्वेषेऽप्यसंस्रवो भवति । एवं हि श्रूयते-"वायुः समुद्रश्च विद्वेष्टि कृतमपहरन्ति"(५) ( शाङ्खा० सू० १३-५-२३ ) इति ॥ २७ ॥

**(६)सोमदाहे यथास्वं वृत्तान्तान्धारयेयुः ॥ २८ ॥**

धारणं स्वपदार्थानामनुस्मरणम् ॥ २८ ॥

---

( १ ) यत्र द्वयोर्वैरिणोः सहप्रारब्धयज्ञयोर्मध्ये व्यवधायिका नदी भवति तत्र संस्रवो न भवतीति ।

( २ ) कस्मिंश्चन महति पर्वते वैरियज्ञयोर्व्यवधायकेऽप्यसंस्रव इति देवयाज्ञिकाः ।

( ३ ) रथाह्ने प्रदेशे यज्ञयोर्व्यवधायके गिरिनद्यादिव्यवधानं विनापि असंस्रव इति देवयाज्ञिकाः ।

( ४ ) परस्परं द्वेषमकुर्वाणानां सर्वत्र गिरिनद्यादिव्यवधानं विना-प्यसंस्रव इति देवयाज्ञिकाः ।

( ५ ) अयं वायुः समुद्रं सदा द्वेष्टि शोषयितुमिच्छति । समुद्रश्च सर्वदा स्नेहपरः । अत एव महान् बहुल एव वायुकृतेन द्वेषेण समीप एव स्थितस्य तस्य किमपि न हीयत इति श्रु[illegible]र्थः । अनेन दृष्टान्तेन अन्यतरस्मिन्द्वेषं कुर्वाणेऽपि इतरस्य स्नेहपरस्य किमपि नष्टं न भवतीति ज्ञायते ।

( ६ ) सोमस्य दाहे सति यथास्वमध्वर्य्वादिर्यद्यत्स्वं कर्म वृत्तान्ता-न्वृत्तस्य कृतस्य कर्मणोन्तानध्वर्य्वादयो हृदये धारयेयुः । मया एतत्प-दार्थानन्तरं मदीयं कर्म कृतमित्येवं चित्ते दृढं धारणमविस्मरणं कुर्यु-रित्यर्थः ।

**प्रतिनिधाय यथापूर्वं यज्ञेन चरेयुः(१) ॥ २९ ॥**

प्रतिनिधाय सोमद्रव्यं स्वपदार्थेभ्यः यथापूर्वं यज्ञेन चरेयुः ॥२९॥

**पञ्च गा दत्त्वा प्राग्द्वादश्याः पुनर्यज्ञः(२) ॥ ३० ॥**

अत्र गोः संख्यासम्बन्धो या गावस्ताः पञ्च । ततश्च हिरण्यादीनाम-निवृत्तिः द्वादशाहः प्राक्पुनर्यज्ञः ॥ ३० ॥

**तत्र तद्दद्याद्यत्पूर्वस्मिन्दास्यन्स्यात्सत्रेऽप्य-विशेषात् (३) ॥ ३१ ॥**

सत्रेऽपि सोमदाहे भवत्येवैतत् । कुत एतत् ? अविशेषात् ॥ ३१ ॥

**दानं प्रायश्चित्तसंयोगात्(४) ३२ ॥**

**(५)न वादक्षिणत्वात् ॥ ३३ ॥**

न वा दानं प्रवर्त्तते, "अदक्षिणानि हि सत्राणि" इति ॥ ३३ ॥

**तस्य त्वह्नः पुनराहारः ॥ ३४ ॥**

'भवति' इति सूत्रशेषः ॥ ३४ ॥

**ब्रह्मा प्रायश्चित्तानि जुहुयादनादिष्टानि ॥ ३५ ॥**

यान्यनादिष्टनिमित्तानि । यथा–"यदि दीक्षासु किञ्चिदापद्येत" (श० ब्रा०१२·६-१·७)इति, तन्निमित्ताविशेषे आदिष्टानि तानि ब्रह्मा जुहोति । एवं हि श्रूयते–"ता ब्रह्मैव जुहुयात्" (श०ब्रा०१२·६·१·३८) इति व्याहृत्यङ्गीकरणेन स्त्रीलिङ्गबहुवचनान्तता । तथा–"यद्यृक्तो भूरिति चतुर्गृहीतमाज्यं गृहीत्वा"इत्येवमादि महाव्याहृतीरेव प्रकृत्य श्रूयते "यदेव त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वम्" (श०ब्रा० ११–५–८–६,७) इति ॥३५॥

**(६)ब्रह्मा विलिष्टं सन्दधातीति श्रुतेः ॥ ३६ ॥**

---

(१) प्रशान्ते दाहभये यथास्थानमागता अध्वर्य्वादयः यथापूर्वं पूर्ववत् सोमापहरणवत् ( का०श्रौ० २५–१२–१७, १९ ) अर्जुनश्येन हृतादिकं प्रतिनिधाय प्रतिनिधिद्रव्यं सम्पाद्याभिषुत्य कृतावशिष्टं यज्ञं समापयेयुरिति देवयाज्ञिकाः ।

(२) द्वादश्या रात्रेः प्राक् स एव यज्ञः पुनः कार्यः ।

(३) तत्र पुनर्यज्ञे तद्दक्षिणात्वेन दद्यात्, यत्पूर्वस्मिन्प्रयोगे दास्यन्स्यात् कृत्स्नां क्रतुदक्षिणामित्यर्थः ।

(४) अतः सत्रेऽपि नैमित्तिकं दानं भवतीति पूर्वः पक्षः ।

(५) सिद्धान्तमाह—

(६) शाखान्तरे ।

विलिष्टं दुरिष्टं यत्तद्ब्रह्मा सन्दधाति, "यद्वै यज्ञस्य दुरिष्टं तद्ब्रह्मा सन्दधाति" इति श्रुतेः ॥ ३६ ॥

त्रिवेदसंयोगाच्च ॥ ३७ ॥

अपि च वेदत्रयविहितकर्मसंयोगो ब्रह्मण एवेति ॥ ३७ ॥

इति पञ्चविंशेऽध्याये चतुर्दशी कण्डिका ।



इत्युपाध्यायकर्कविरचिते कात्यायनसूत्रभाष्ये
पञ्चविंशोऽध्यायः ।



# षड्विंशोऽध्यायः ।

आधानादीनि पितृमेधान्तानि कर्माण्यभिधाय वेदान्तरविहितान्येकाहादीन्युक्त्वा तेषामेव यानि नैमित्तिकान्यङ्गानि 'भिन्ने जुहोति' इत्येवमादीनि, यानि च नैमित्तिकान्येव पुरुषार्थरूपाणि क्षामवत्यादीनि तान्यप्यभिहितानि । इदानीमवसरप्राप्तः प्रवर्ग्योऽनुविधेयस्तदर्थं सूत्रमारभ्यते—

(१)दीक्षासु महावीरान्त्सम्भरति ॥ १ ॥

दीक्षाशब्दवाच्यः पदार्थो निरूपितः । तासु वर्त्तमानासु महावीरान्त्सम्भरति महावीरान्करोतीत्यर्थः । महावीरैश्चोपलक्षितमन्यदप्यत्र पिन्वनादि साम्भ्रियत एवेति । प्रयोजनं तेषामप्यन्तराये प्रयोक्तृत्वम्॥१॥

अन्तःपात्यदेशे सम्भारान्निदधाति ॥ २ ॥

तानाह—

मृदं वल्मीकवपां वराहविहतं पूतीकानजापयो गवेधुकाः कृष्णाजिनमभ्रिं चोत्तरतः(२) ॥ ३ ॥

देवस्य त्वेत्यभ्रिमादायौदुम्बरीं वैकङ्कतीं वारत्निमात्रीᳬ सव्ये कृत्वा दक्षिणेनालभ्य जपति युञ्जत इति(३) ॥४॥

---

( १ ) अनेकदीक्षापक्षे यस्मिन्नहनीच्छा भवति । एकदीक्षापक्षे च दीक्षितोऽयं ब्राह्मण इति प्रैषानन्तरं प्रागस्तमयात् महावीरसम्भरणं श्रपणान्तं कृत्वा आपाकादुद्धरणं प्रातः कर्तव्यम् । महावीरग्रहणं पिन्वनरौहिणकपालानामप्युपलक्षणम् ।

( २ ) मृत्पिण्डम्—उपदीकाभिः कृतो मृत्सञ्चयः, तस्य वपेव वपा मध्यवर्ती लोष्टः । वराहः-सूकरः तेन विहतं तदुत्खातां मृत्तिकाम् । पूतीकान्-रोहिषपुष्पाणि । गवेधुकाः-जलसन्निहितमहातृणजानि शुक्लानि फलानि । एतान्सम्भारान् प्राक्संस्थानुदक्संस्थान्वा निधाय कृष्णाजिनमभ्रिं च वक्ष्यमाणलक्षणामेतेषां सम्भाराणामुत्तरतो निदधाति इति देवयाज्ञिकाः ।

( ३ ) उदुम्बरतरूत्थां विकङ्कतरूत्थां वा हस्तप्रमाणामभ्रिं "देवस्य त्वा०" ( वा०सं० ३७-१ ) इति मन्त्रेणादाय वामहस्ते तां कृत्वा दक्षिणहस्तेन स्पृष्ट्वा "युञ्जते मन०" ( वा०सं० ३७-२ ) इति मन्त्रं जपतीति सूत्रार्थः ।

सव्यहस्तस्थिताया प्रवालभ्य जपो यथा स्यादिति दक्षिणग्रहणम्॥४॥

**मृदमादत्ते पिण्डवद्देवी द्यावापृथिवी इति ॥५॥**

दक्षिणोत्तराभ्यां पाणिभ्याम् । "दक्षिणः साभ्रिः" ( का० श्रौ० १६-२-२० ) इति वर्तिना निर्दिश्यते(१) ॥ ५ ॥

**कृष्णाजिने निदधात्युत्तरतः ॥ ६ ॥**

मृदम् ॥ ६ ॥

**देव्यो वम्रय इति वल्मीकवपाम्(२) ॥ ७ ॥**

'आदत्त' इति वर्त्तते ॥ ७ ॥

**इयत्यग्र इति वराहविहतम्(३) ॥ ८ ॥**

आदत्ते ॥ ८ ॥

**इन्द्रस्यौजस्थेति पूतीकान्(४) ॥ ९ ॥**

**मखायेति पयः(५) ॥ १० ॥**

**तूष्णीं गवेधुकाः ॥ ११ ॥**

'आदत्त' इति सर्वत्रानुषङ्गः ॥ ११ ॥

**(६)सम्भृतानभिमृशति मखायेति ॥ १२ ॥**

---

( १ ) अध्वर्युः "देवी द्यावापृथिवी०" ( वा० सं० ३७-३ ) इति मन्त्रेण विघर्णं मृत्पिण्डमादत्ते 'पिण्डवत्' इति पाणिभ्यां गृह्णाति दक्षिणः साभ्रिरिति लभ्यत इति सूत्रार्थः । अस्मिन्सूत्रे मृच्छब्देन अतिचिक्कणाया भाण्डादिनिर्माणयोग्याया कुम्भकारसंस्कृताया मृदः पिण्डोऽभिधीयते।

( २ ) उपदीकृतो मृत्सञ्चयो वल्मीकस्तस्य वपेव वपा तां मध्यस्थं लोष्ठम् "देव्यो वम्रयो०" (वा० सं० ३७-४) इत्यनेन आदाय कृष्णाजिने मृत्पिण्डादुत्तरे तूष्णीं निदध्यादित्यर्थः।

( ३ ) "इयत्यग्र०"( वा० सं० ३७-५ ) इत्यनेन मन्त्रेण वराहोत्खात‍मृदमादाय तूष्णीं कृष्णाजिने वल्मीकवपोत्तरे निदध्यादित्यर्थः ।

( ४ ) "इन्द्रस्यौज स्थ०" ( वा० सं० ३७-६ ) इत्यनेन मन्त्रेण पूतीकान् रोहिषतृणान्यादाय तूष्णीं कृष्णाजिने वराहविहतोत्तरे निदध्यात् ।

( ५ ) "मखाय त्वा०" (वा० सं० ३७-६) अनेन पय आदाय तूष्णीं कृष्णाजिने पूतीकोत्तरे निदध्यात् ।

( ६ ) सम्भृताभिमर्शनं प्रत्येकमिति सम्प्रदायः, प्रतिसंस्कार्यं संस्कारावृत्तिरिति न्यायात् ।

तानित्येतावतार्थस्य सिद्धत्वात्सम्भृतानिति ।

"तान्त्सम्भृतानभिमृशति" (श०ब्रा० १४-१-२-१४) इत्युपदेशाद्युगपदभिमर्शनम् ॥ १२ ॥

**कृष्णाजिनं परिगृह्योत्तरतः परिवृतं गच्छन्ति प्रैतु ब्रह्मणस्पतिरिति(१) ॥ १३ ॥**

बहुवचनोपदेशात्सर्वेषां मन्त्रः । परिवृतं च पूर्वं कृतमेव द्रष्टव्यम् । तद्भूतोपदेशात्करणस्याचोदितत्वात् ॥ १३ ॥

**परिवृते निदधाति सम्भारानुद्धतावोक्षिते सिकतोपकीर्णे प्राग्द्वारे मखायेति(२) ॥ १४ ॥**

अनेन मन्त्रेण ॥ १४ ॥

**सम्भारैः सꣳसृजति मखायेति(३) ॥ १५ ॥**

**मृदमादाय मखायेति महावीरं करोति प्रादेशमात्रमूर्ध्वमासेचनवन्तं मेखलावन्तं मध्यसंगृहीतमूर्ध्वं मेखलायास्त्र्यङ्गुलम् ॥ १६ ॥**

मृदादानं तूष्णीम् । मन्त्रेण महावीरकरणम्(४) ॥ १६ ॥

---

उपदेशाद्भवेदत्र युगपच्चाभिमर्शनम् ।
शक्यत्वाच्चाथ नोशक्यं चेद्भेदेन भवेदिति ।

अर्थ प्रसङ्गया द्रव्योपकल्पनमित्युक्तेः । "मखाय त्वा०" ( वा० सं० ३७-६ ) अनेन संभृतान् सम्भारान् करेण स्पृशेदित्यर्थः ।

( १ ) अध्वर्युप्रतिप्रस्थात्रादयः कृष्णाजिनं समन्तादादाय "प्रैतु ब्रह्मणस्पतिः०" ( वा० सं० ३७-७ ) इति जपन्तोऽन्तःपात्यादुत्तरे परिवृतं प्रति गच्छन्ति । पञ्चारत्निमितः समचतुरस्रः प्राग्द्वारः सिकतोपकीर्णः पूर्वमेव कृतः समभूसंस्कारसंस्कृतश्छादितप्रदेशः 'परिवृत' उच्यत इति सूत्रार्थः

( २ ) अध्वर्युः कृष्णाजिनस्थानेव सम्भारान्परिवृते "मखाय त्वा" ( वा० सं० ३७-७ ) इत्यनेन निदधाति । कीदृशे ? उद्धतावोक्षिते उल्लिखितजलसिक्ते देशे । एतत्संस्कारद्वयं पञ्चाधिकम् सिकतायुक्ते प्राग्द्वारे चेति ।

( ३ ) गवेधुकाजापयसी पृथक्कृत्य वल्मीकवपादित्रिसंभारैः "मखाय त्वा०" ( वा० सं० ३७-७ ) इत्यनेन मृत्पिण्डं मिश्रयतीत्यर्थः ।

( ४ ) महावीरपर्याप्तं तूष्णीं मृत्पिण्डमादाय "मखाय त्वा" ( वा० सं० ३७-७ ) अनेन मन्त्रेण महावीरं करोतीति सूत्रार्थः । आसेचनं

निष्ठितमभिमृशति मखस्य शिर इति ॥ १७ ॥

(१)अनेन मन्त्रेण ॥ १७ ॥

आदानमेके ॥ १८ ॥

(२)कुर्वन्ति ॥ १८ ॥

एवमितरौ प्रतिमन्त्रम्(३) ॥ १९ ॥

एवमितरौ महावीरौ प्रतिमन्त्रं करोति ॥ १९ ॥

स्रुक्पुष्कराकृती पिन्वने रौहिणकपाले परिमण्डले मृदमुपशयान्निदधाति(४) ॥ २० ॥

पदार्थतया ॥ २० ॥

गवेधुकाभिः श्लक्ष्णयति मखायेति प्रतिमन्त्रम् (५) ॥२१॥

श्लक्ष्णनं च मृन्मार्ष्टीकरणम् । एतदेव तासां सम्भरणप्रयोजनम्॥२१॥

अश्वशकृता धूपयत्यश्वस्य त्वेति प्रतिमन्त्रम् (६) ॥२२॥

उखावदग्निः प्रदहनं च मखायेति प्रतिमन्त्रम्(७) ॥ २३ ॥

---

गर्तः तद्युक्तम् । मध्यप्रदेशे सङ्कुचितं उलूखलवत् मुष्टिग्रहणयोग्यं मेखलाया ऊर्ध्वं त्र्यङ्गुलम् । अतश्च प्रादेशमात्रस्योपरिभागे त्र्यङ्गुलं परिशेष्य ततोऽधस्तान्मेखला कार्या ।

( १ ) "मखस्य शिरः०" ( वा० सं० ३७-८ ) इत्यनेन निष्पन्नं महावीरं वामकरस्थं दक्षिणेन स्पृशतीत्यर्थः ।

( २ ) "मखस्य शिरः०" ( वा०सं० ३७-८ ) अनेन मन्त्रेण महावीरकरणार्थमादानं कुर्वन्ति, अर्थात् निष्ठिताभिमर्शनं तूष्णीमित्यर्थः ।

( ३ ) इतरौ द्वौ महावीरौ प्रतिमन्त्रमेवमेव करोति अभिमृशति चेत्यर्थः ।

( ४ ) स्रुचः पुष्करं मुखं स्रुक्पुष्करं तस्येवाकृतिराकारो ययोस्ते० । रौहिणौ वक्ष्यमाणौ पुरोडाशौ तदर्थं कपाले वर्तुले । महावीरपिन्वनरौहिणकपालनिष्पादनानन्तरमवशिष्टां मृदम् 'उपशया'संज्ञिकां स्थापयति प्रायश्चित्तार्थम् ।

( ५ ) गवेधुकाभिः महावीरान् घर्षणेन मृदून् करोति "मखाय त्वा०" ( वा० सं० ३७-८ ) इति प्रतिमन्त्रमेकैकम् ।

( ६ ) दक्षिणाग्निदीप्तेनाश्वपुरीषेण "अश्वस्य त्वा०" (वा० सं० ३७-९ ) इति त्रिभिर्मन्त्रैस्त्रीन्महावीरान् धूपयेदित्यर्थः ।

( ७ ) "मखाय त्वा०" ( वा० सं० ३७-९ ) इति त्रिभिर्मन्त्रैस्त्रीन्म०

'उखावत्' इति निर्मन्थ्यो दक्षिणाग्निर्वा ॥ २३ ॥

पक्वानुद्धरत्यृजवे त्वेति प्रतिमन्त्रम्(१) ॥ २४ ॥

'उद्वपामि' इति चाध्याहारः साकाङ्क्षत्वात् ॥ २४ ॥

अजापयसावसिञ्चति मखायेति प्रतिमन्त्रम्(२) ॥ २५ ॥

साकाङ्क्ष एवाऽतो यथार्थमध्याहारो युक्तरूप इति ॥ २५ ॥

तूष्णीं पिन्वनादीनां करणाभिमर्शनश्लक्ष्णनधूपनप्रदहनोद्धरणावसेचनानि ॥ २६ ॥

इति षड्विंशेऽध्याये प्रथमा कण्डिका ।

---

(३)उपसदा चरिष्यंश्चरिष्यन्प्रवर्ग्येण चरति सप्रवर्ग्ये(४) ॥ १ ॥

ननु चैतदुक्तमेव-"प्रवर्ग्योपसद्वावत" ( का० श्रौ० ८-२-१३ ) इति, अवाच्यमत्र । सत्यमेवम् , तत्र समासनिर्देशात् इह क्रमार्थोऽयमारम्भः ॥ १ ॥

(५)अपिहितद्वारे प्रवर्ग्यचरणम् ॥ २ ॥

विमिते ॥ २ ॥

---

हावीरानुखावच्छ्रपयेत् पिन्वनरौहिणैः सहेत्यर्थः । महावीराणां प्रदहनं प्रकर्षेण दहनं श्रपणं चशब्दादुखावत्करोति । 'ततश्च चतुरस्रमवटं खात्वा तत्र श्रपणमास्तीर्य तत्र यथाकृतं त्रीन्महावीरान्न्युब्जान्निधाय पिन्वने रौहिणकपाले च न्युब्जे निधाय पुनः श्रपणेनावच्छाद्य दक्षिणाग्निना दीपयति इत्येतावद्धतिना लभ्यते ।

( १ ) पक्वान्महावीरानापाकादिवोद्धरति "ऋजवे त्वा०" ( वा० सं० ३७-१० ) इति त्रिभिर्मन्त्रैरित्यर्थः । 'उखावत्' इत्यनेनैव "दिवैव प्रदहनोद्धरणे०" ( का० श्रौ० १६-४-१७ )

( २ ) अजादुग्धेन त्रीन्महावीरान् "मखाय त्वा०" ( वा० सं० ३७-१० ) इति त्रिभिः तुल्यमन्त्रैः सिञ्चतीत्यर्थः ।

( ३ ) इति महावीरसम्भरणमुक्तम् । अथ प्रवर्ग्यमाह—

( ४ ) सह प्रवर्ग्येण वर्तत इति सप्रवर्ग्यः प्रवर्ग्यवान्यज्ञः तस्मिन् । प्रत्यहं सायम्प्रातः प्रागुपसदः प्रवर्ग्यचरणं कर्तव्यम् ।

( ५ ) अपिहितानि कपाटकरादिना ढक्कितानि द्वाराणि यस्य ।

(१)पत्न्यदर्शनम् ॥ ३ ॥

सन्निधानेऽपि सति दर्शनमात्रप्रतिषेधः ॥ ३ ॥

(२)अननूक्तिभिश्च ॥ ४ ॥

'च' शब्दाददर्शनम् । नानूक्तयो येषान्तेऽननूक्तयः ॥ ४ ॥

यावदुक्तम्(३) ॥ ५ ॥

कर्मप्रत्यक्षविधानात्कर्माणाम् । अतोऽपूर्वः प्रवर्ग्यः । यथा–पिण्डपितृयज्ञः सत्यपि द्रव्यसामान्ये, तद्वदयमपि ॥ ५ ॥

(४)परिघर्म्यमौदुम्बरम् ॥ ६ ॥

भवति ॥ ६ ॥

मौञ्जं त्रिवृद्रज्जव्यम् ॥ ७ ॥

रज्जुजातं मौञ्जं त्रिवृद्भवति ॥ ७ ॥

(५)बाल्वजं विवानमासन्द्यौदुम्बर्या स्कन्धमात्र्याः(६)॥८॥

परिघर्म्यमौदुम्बरमित्युक्तेऽपि पुनरुच्यते अरत्निमात्राङ्गोपलक्षणार्थम् । (७)तथा शाखान्तरात् । दृष्टा ह्यौदुम्बरी ज्योतिष्टोमेऽरत्निमात्राङ्गी ॥ ८ ॥

पूर्वेण गार्हपत्यं प्राचः कुशानास्तीर्य पात्रासादनं द्वन्द्वम् (८) ॥ ९ ॥

गार्हपत्यस्य पुरस्तात्प्रागग्रेषु कुशेषु द्वन्द्वं पात्राण्यासादयति ॥९॥

---

( १ ) पत्न्या महावीरस्य दर्शनं न कर्तव्यम् ।

( २ ) अवैदिकैश्च दर्शनं न कार्यम् ।

( ३ ) 'अपूर्वत्वात्' न ह्यस्य कापि प्रकृतिरिति । अतो यावदत्रोच्यते तावदेव भवति नाधिकमित्यर्थः ।

( ४ ) घर्मसम्बन्धि यत्पात्रजातं काष्ठमयमुपयमन्यादि तदुदुम्बरकाष्ठेन निर्मातव्यम् ।

( ५ ) तत्रापवादमाह—

( ६ ) यजमानस्कन्धप्रमाणपादाया औदुम्बर्यासन्द्या बाल्वमयी विवानरज्जुर्भवति ।

( ७ ) 'तच्च' इ० पा० ।

( ८ ) पूर्वं द्वारापिधानं शान्तिकरणं च कृत्वा ततः कुशास्तरणादि कर्तव्यम् ।

तान्याह—

उपयमनीं महावीरं परीशासौ पिन्वने रौहिणकपाले रौहिणहवन्यौ स्रुचावनुत्कीर्णे स्थूणामयूखं धृष्टी शतमाने मुञ्जप्रलवान्विकङ्कतशकलान्विᳲशतिं प्रादेशमात्रान् स्रुवं मुञ्जवेदं धवित्राणि परिधींश्च रज्जुसन्दानमासन्दीं कृष्णाजिनमश्रिᳲ सिकताः खरार्था अर्थवच्च(१) ॥१०॥

अर्थवच्च यत्तदासादयति । पृथक्पाठकरणं कार्यक्रमो यथा स्यादिति । इतरेषां तु पाठक्रम एव ॥ १० ॥

प्रोक्षणीः संस्कृत्याग्म्योत्थायाह ब्रह्मन्प्रचरिष्यामो होतरभिष्टुहि प्रस्तोतः सामानि गायेति ॥११॥

(२)प्रोक्षणीसंस्कारो यथादृष्टः प्रदेशान्तरे ॥ ११ ॥

(३)ब्रह्मानुज्ञातो(४)यमाय त्वेति महावीरं प्रोक्षति ॥१२॥

ब्रह्मानुज्ञातग्रहणं प्रागनुज्ञायाः सर्वप्रैषोच्चारणप्रज्ञप्त्यर्थम् ॥ १२ ॥

प्रतिमन्त्रं वा वाक्यभेदात् ॥ १३ ॥

---

( १ ) उपयमनीमौदुम्बरीं बाहुप्रमाणां महापुष्करां स्रुचम् प्रचरणीयम् । परीशासौ संदंशाकारौ । गोर्बन्धनार्था स्थूणा । अजाबन्धनार्थः शङ्कुः कीलको मयूखः । धृष्टी उपवेषौ औदुम्बरौ । एकं रजतशतमानम् । द्वितीयं सुवर्णशतमानम् । औदुम्बरमरत्निमात्रम् स्रुवम् । मुञ्जमयं वेदं च । धूनोत्येभिरिति धवित्राणि कृष्णाजिनखण्डनिर्मितास्त्रयो व्यजनाः । रज्जुर्गोबन्धनार्था अजाबन्धनार्था च । सन्दानशब्देन दोहनकाले गोपादबन्धनार्था रज्जुरभिधीयते । केचिदजाया अपि सन्दानमिच्छन्ति । अर्थवच्च उक्तपात्रव्यतिरिक्तमपि यत्किञ्चित्प्रयोजनवदित्यर्थः । स्फ्यः, पवित्रे, अग्निहोत्रहवणी, आज्यस्थाली, प्रभूतमाज्यम् , शूर्पम्, पात्री, पिष्टम् , उपसर्जनीपात्रम् , उपशया, इतरौ महावीरौ, होतृषदनम् , मौञ्जः कूर्चः, औदुम्बरी समिदिति । अत्रापि द्वन्द्वमेवासादनम् ।

( २ ) ( का० श्रौ० २-३-३०, ३१, ३२, ३३, ३४, ३५ ) सूत्रेषूक्तः ।

( ३ ) अनुज्ञात इति सिद्धे ब्रह्मेति—अनुज्ञाविधानार्थम्, ब्रह्मत्वसूत्रे तदविधानात् । तच्च प्रवरतेति प्रैषानुरूपत्वात् ।

( ४ ) 'प्रचर' इति ब्रह्मणोऽनुज्ञातोऽध्वर्युरुपविश्य "यमाय त्वा०" (वा० सं० ३७-११) इति मन्त्रत्रयेण प्रचरणीयं महावीरं वारत्रयं प्रोक्षतीत्यर्थः ।

प्रतिमन्त्रमेव वा प्रोक्षणम् । कुत एतत ? वाक्यभेदात् । भिन्नानि हि वाक्यानि "यमाय त्वा, मखाय त्वा, सूर्यस्य त्वा तपसे" ( श०ब्रा० १४-१-३-४, ५, ६ ) इति । न च समुच्चयो न्याय्यः, न च विकल्पः, दृष्टार्थत्वात् । तस्मात्प्रतिवाक्यमेव प्रोक्षणम् ॥ १३ ॥

**परिघर्म्यं च तूष्णीम् ॥ १४ ॥**

परिघर्म्यं च यदासादितं तच्च तूष्णीं प्रोक्षति ॥ १४ ॥

**पूर्वया द्वारा स्थूणामयूखं निर्हृत्य दक्षिणतो निखनाति होतुः सन्दर्शने ॥ १५ ॥**

(१)स्थूणामयूखं पूर्वया द्वारा निर्हृत्य दक्षिणतो निखनाति सन्दर्शने होतुः ॥ १५ ॥

**गार्हपत्याहवनीया उत्तरेण खरौ निवपति दक्षिणतोऽनुभित्त्युच्छिष्टखरम्(२) ॥ १६ ॥**

खरे उद्धतावोक्षिते सिकतोपकीर्णे । संस्कारानिमित्तो हि खरशब्दः॥१६॥

**पूर्वेणाहवनीयः सम्राडासन्दीं पर्याहृत्य दक्षिणतः प्राचीमासादयति राजासन्द्या उत्तरतः कृष्णाजिनमस्यामास्तृणाति तस्मिन्नभ्यूपशये निदधाति महावीरौ चावच्छादयेद्वा(३) ॥ १७ ॥**

'वा' इति विकल्पः ॥ १७ ॥

**अन्यो वा परिघर्म्ययोजनमध्वर्योः कालसम्पत्तेः ॥ १८ ॥**

अन्यो वा स्थूणामयूखनिर्हरणादि करोति । कुत एतत् ? अध्वर्योः कालसम्पत्तिर्हि भवति । "स यत्रैताᳪ होतान्वाहाञ्जन्ति यं प्रथयन्तो न विप्रा इति तदेतं प्रचरणीयं महावीरमाज्येन समनक्ति" ( श० ब्रा० १४-१-३-१३ ) इति । यदि हि परिघर्म्ययोजनमध्वर्युः कुर्यात् कालो

---

( १ ) शालायाः पूर्वद्वारेण स्थूणामयूखं निष्काश्य शालाया दक्षिणस्यां दिशि निखनति, गार्हपत्यसमीपे उपविष्टो होता यत्र निखातां स्थूणां मयूखं च द्रष्टुं शक्नोति । तस्मिन्स्थाने इत्यर्थः । दक्षिणद्वारस्यापरद्वार्या दक्षिणतः स्थूणां, पूर्वद्वार्या दक्षिणतो मयूखमिति केचित् ।

( २ ) दक्षिणद्वारस्य पूर्वद्वार्या स्थूणासमीपे भित्तिसंलग्नमुच्छिष्टखरं निवपति ।

( ३ ) तावासन्द्यास्थापितौ महावीरौ वस्त्रादिनावच्छादयेत् ।

न सम्भाव्येत । तस्माद् बहिरङ्गत्वात्प्रतिप्रस्थाता परिधर्म्ययोजनं करोति ॥ १८ ॥

**अञ्जन्तीत्युच्यमाने देवस्त्वेत्यनक्ति महावीरमाज्यꣳ संस्कृत्य (१) ॥ १९ ॥**

संस्कारश्च (२)पूर्णाहुतिकः ॥ १९ ॥

**रजतशतमानं खर उपगूहति (३)पृथिव्याः सꣳस्पृश इति ॥ २० ॥**

अनेन मन्त्रेण । शतमानं च रक्तिकाशतेन ॥ २० ॥

इति षड्विंशेऽध्याये द्वितीया कण्डिका ।

---

**शुक्रं गायेति प्रेष्यति(४) ॥ १ ॥**

**पत्नी शिरः प्रोर्णुते ॥ २ ॥**

स्वयमेव, प्रथमान्तनिर्देशात्(५) ॥ २ ॥

**(६) सꣳसीदस्वेत्युच्यमाने मुञ्जप्रलवान् द्विगुणानादीप्य प्रतिदिशं खरे करोति ॥३॥**

"सꣳसीदस्व०" (वा० सं० ११-३७) इति यदा होता पठति तदा मुञ्जप्रलवान् खरे करोति ॥ ३ ॥

---

( १ ) होत्रा "अञ्जन्ति यं प्रथयन्ति" इति मन्त्रे पठ्यमानेऽध्वर्युराज्यं विधिना संस्कृत्य तेनाज्येन प्रचरणीयं महावीरं "देवस्त्वा०" ( वा० सं० ३७-११ ) इत्यनेन मन्त्रेणानक्ति ।

( २ ) ( का० श्रौ० ४-१०-५ ) सूत्रे तथोक्तेः ।

( ३ ) रजतस्य शतमानं शतरक्तिकामितं रजतं खरे सिकतान्तः "पृथिव्याः सꣳस्पृशः०" ( वा० सं ३७-११ ) इत्यनेन उपगूहति नीचैः प्रवेशयतीत्यर्थः ।

( ४ ) अध्वर्युः प्रस्तोतारम् । शाखान्तरे तथा विधानात् ।

( ५ ) "पत्नी शिरः प्रोर्णुते०" (श०ब्रा० १४-१-३-१६) इत्युक्तमाच्छादनं सचक्षुष्कं कर्तव्यं यथा घर्मं द्रष्टुं न शक्नुयाद् इति ।

( ६ ) मुञ्जप्रलवाः शरतृणानि शरेषीकापरितोभवानि तान् मध्यमोटनेन द्विगुणीकृतान् आदीप्य गार्हपत्ये प्रदीप्तान्कृत्वा सर्वासु प्रागादिदिक्षु खरे करोति ।

**तेषु महावीरमाज्यवन्तमर्चिरसीति(१) ॥ ४ ॥**

तेष्विति मुञ्जप्रलवेषु ॥ ४ ॥

**अनाधृष्टेति वाचयति प्रादेशमध्यधि धारयन्तम् (२) ॥५॥**

वाचनं च शाखान्तरात् ॥ ५ ॥

**प्रतिदिशमेके ॥ ६ ॥**

मन्त्रलिङ्गात् "अनाधृष्टा पुरस्तात्पुत्रवती दक्षिणत" इत्येवमादि । यद्येवं तदा वचनेऽसति लिङ्गाद्विभागो नावगम्यते । अथ तु वचनमिदं तदा विकल्प इति ॥ ६ ॥

**विश्वाभ्यो मेति दक्षिणत उत्तानं पाणिं निदधाति ॥७॥**

(३)तत्राधिकाराद्यजमान एव । "अथास्यामाशिष आशास्त" इति प्रकृत्य ह्येवमुच्यते-"अथ दक्षिणत उत्तानेन पाणिना निह्नुत" ( श० ब्रा० १४-१-३-१८, २४ ) इति ॥ ७ ॥

**मनोरश्वेति प्रादेशमुत्तरतः ॥ ८ ॥**

'निदधाति' इति वर्त्तते ॥ ८ ॥

**धृष्टिभ्यां भस्मना परिकीर्याङ्गारैश्च विकङ्कतशकलैः परिश्रयति त्रयोदशभिः प्रागुदग्भिः स्वाहा मरुद्भिरिति ॥ ९ ॥**

धृष्टिभ्यामुपवेषाभ्यां महावीरं भस्मना परिकीर्याङ्गारैश्च विकङ्कतशकलैः परिश्रयति त्रयोदशभिः प्रागुदग्भिः "स्वाहा मरुद्भिः" ( वा० सं० ३७-१३) इत्यनेन मन्त्रेण । द्वौ प्राञ्चावुपदधाति(४)शेषांस्तूष्णीम्॥९॥

**अधिकं दक्षिणतो द्वौ मन्त्रेण सुवर्णशतमानेनापि**

---

( १ ) संस्कृतेनाज्येन पूर्णं प्रचरणीयं महावीरम् "अर्चिरसि०" ( वा० सं० ३७-११ ) इत्यनेन निदधाति स्थापयतीत्यर्थः ।

( २ ) महावीरोपर्यङ्गुष्ठाङ्गुलिदेशं धरन्तं यजमानमध्वर्युः "अनाधृष्टा०" ( वा० सं० ३७-१२ ) इति मन्त्रान्वाचयति ।

( ३ ) महावीराद्दक्षिणभूमौ यजमानो "विश्वाभ्यो मा०" ( वा० सं० ३७-१२ ) इति मन्त्रं पठन्स्वकरं निदधात्युत्तानम् ।

( ४ ) परिशब्दप्रसामर्थ्याद्दक्षिणे चोत्तरे क्रमात् ।

मन्त्रावृत्त्योपधेयौ द्वौ शेषांस्तूष्णीं यथाक्रमम् ॥

इति कारिकोक्तेः ।

दधाति दिवः स३ंस्पृश इति(१) ॥ १० ॥

महावीरम् ॥ १० ॥

इति षड्विंशेऽध्याये तृतीया कण्डिका ।

---

चन्द्रङ्गायेति च प्रेष्यति ॥ १ ॥

'च' शब्दादपिदधाति(२) ॥ १ ॥

कृष्णाजिनावकृत्तैर्द्धवित्रैरुपवाजयति त्रिभिर्दण्डवद्भिर्मधुमध्विति ॥ २ ॥

( ३ ) अनेन मन्त्रेण ॥ २ ॥

एकं प्रयच्छति प्रतिप्रस्थात्रेऽपरमग्नीधे धून्वन्तस्त्रिस्त्रिः परिक्रामन्ति पितृवद्देववच्च(४) ॥ ३ ॥

पितृवत् अपसव्यम् । देववच्च धून्वन्तः प्रदक्षिणम् ॥ ३ ॥

रुचिते वोत्तरम् ॥ ४ ॥

उत्तरं परिक्रमणं रुचिते वा घर्मे भवति विकल्पः ॥ ४ ॥

आर्चिषि प्राप्ते (५)सुवर्णशतमानं निधायाज्येन महावीरं परिषिञ्चति स्रुवेण प्रतिप्रणवम् ॥ ५ ॥

अर्चिषि प्राप्ते महावीरे सुवर्णशतमानमपनीय महावीरमाज्येन स्रुवेण परिषिञ्चति प्रणवे प्रणवे होतुः ॥ ५ ॥

---

( १ ) एवं प्रतिदिशं त्रिषु त्रिषु स्थितेषु अधिकं त्रयोदशं दक्षिणतो निदधाति । ततः शतरक्तिकामितेन सुवर्णेन "दिवः स३ंस्पृशः०" ( वा० सं० ३७–१३ ) इत्यनेन महावीरमाच्छादयति ।

( २ ) अपिधानसमकालमेव प्रस्तोतारं प्रेष्यति शाखान्तरात् ।

( ३ ) कृष्णाजिनकृतैर्दण्डयुक्तैस्त्रिभिर्व्यजनैरग्निं दीपनाय वीजयति "मधु मधु मधु" ( वा० सं० ३७–१३ ) अनेन मन्त्रेण ।

( ४ ) चन्द्रसामसमाप्तौ छन्दोगवशाद्धर्मस्य तन्वौ गायेति प्रस्तोतारं संप्रेष्य तद्गाने क्रियमाणे अध्वर्युप्रतिप्रस्थात्राग्नीध्राः धवित्रैः धून्वन्तः प्रथमं पितृवत् त्रिवारं परिक्रामन्ति । ततो धवित्राणि अन्तरतः कृत्वा पुनर्देववदिति प्रदक्षिणं त्रिः परिक्रामन्ति ।

( ५ ) सुवर्णशतमानं महावीरादन्यत्र सुगुप्ते देशे स्थापयित्वा ।

**रौहिणावधिश्रयति तूष्णीं ग्रामपिष्टानाम्(१) ॥ ६ ॥**

ग्रामपिष्टानां रौहिणौ पुरोडाशावधिश्रयति । तूष्णीमिति लौकिकवागुच्चारणप्रतिषेधः । ग्रामपिष्टानामिति च न पेषणक्रिया ॥ ६ ॥

**आज्यधर्माः स्थानापत्तेः ॥ ७ ॥**

रौहिणयोर्ये नाम सान्निपातिका धर्मास्ते आज्यसम्बन्धिनो भवन्ति । कुत एतत् ? स्थानापत्तेः । आज्यभागस्थानापन्नौ ह्येताविति । "यदाज्यभागावन्यत्र जुह्वत्यथ कस्मादत्र न जुहोति" इति प्रकृत्य, "चक्षुषी वा एते यज्ञस्य यदाज्यभागौ चक्षुषी रौहिणौ नेच्चक्षुषा चक्षुरभ्यारोहयाणि" ( श० ब्रा० १४-२-२-५२ ) इति स्थानापत्तिः । तेनोक्तम्— आज्यधर्मा स्थानापत्तेरिति ॥ ७ ॥

**औषधधर्मा वा संस्कारशब्दात् ॥ ८ ॥**

'वा' शब्दः पक्षान्तरपरिग्रहे । औषधधर्मा वा भवन्ति, नाज्यधर्माः । कुत एतत् ? संस्कारशब्दात् । संस्कारो ह्ययं कपालयोः श्रपणम् । तेन पुरोडाशावेताविति पौरोडाशिका धर्माः । यत्तु-स्थानापत्तिरुक्ता सोऽर्थवादः ॥ ८ ॥

**ईडे द्यावापृथिवी इत्युच्यमाने परिधीन्परिधाय रौहिणौ उद्वास्य स्रुचोरासादयत्याहवनीयाद्दक्षिणोत्तरौ(२) ॥९॥**

**अग्नस्वतीमित्युच्यमाने रुचितो घर्म इत्याहोपोत्तिष्ठन्घर्मस्य तन्वौ गायेति प्रेष्यति ॥ १० ॥**

अत्र च छान्दोग्ये कालश्रवणम्—"अभीन्धने तु घर्मस्य तन्वौ गायेत्" (लाट्या० १-६-२५) इति । तथा च प्रागभीन्धनात्प्रैषदानम् ॥१०॥

**परिक्रम्योपतिष्ठन्तेऽकृतं चेद्गर्भो देवानामिति(३) ॥११॥**

---

( १ ) अध्वर्योर्महावीरपरिषेके व्यापृतत्वेन विरोधात्प्रतिप्रस्थाता । ग्रामपिष्टानां लौकिकपिष्टानां व्रीहीणां यवानां वा रौहिणौ पुरोडाशावधिश्रयति ।

( २ ) रौहिणौ पुरोडाशौ रौहिणहवन्योः स्रुचोः पात्रीस्थानीययोरुपस्तीर्णयोरुद्वास्य तत्स्थावेव आहवनीयाद्दक्षिणोत्तरौ आसादयति रौहिणनिर्वापादि रौहिणासादनान्तं प्रतिप्रस्थाता करोति ।

( ३ ) धवित्रैर्वीजनसमये उत्तरं देववत्परिक्रमणं प्रागकृतं चेदिह त्रिः परिक्रम्येतरथावृत्ति सकृत्कृत्वा "गर्भो देवानाम्०" ( वा० सं० ३७-१४ ) इत्यादिभिः "नमस्ते ऽअस्तु मा मा हिꣳसीः" ( वा० सं ३७-२० )

(१)बहुवचनोपदेशाच्च सर्वेषामुपस्थानम् । तथा च "षडुपतिष्ठन्ते" ( श० ब्रा० १४-१-४-१ ) इति श्रुतिः ॥ ११ ॥

**अपोर्णोति पत्नीशिरः ॥ १२ ॥**

समासश्चायं न वाक्यम् । तथा च श्रुतिः—"अथ पत्न्यै शिरोपवृत्य महावीरमीक्षमाणां वाचयति" ( श० ब्रा० १४-१-४-१६ ) इति ॥१२॥

**त्वष्टृमन्त इत्येनां वाचयति महावीरमीक्षमाणाम्(२)॥१३॥**

**अहः केतुनेति दक्षिणं रौहिणं जुहोति मन्त्रक्रमेणोत्तरं रात्रिरिति सायम्(३) ॥ १४ ॥**

विशेषः ॥ १४ ॥

इति षड्विंशेऽध्याये चतुर्थी कण्डिका ।

---

इत्यन्तैः अवकाशसंज्ञकैर्मन्त्रैः सयजमाना ऋत्विजो महावीरमुपतिष्ठन्त इति सूत्रार्थः । प्रस्तोतृव्यतिरिक्ताः सयजमानाः पञ्चर्त्विजः 'षड्' ग्रहणेन गृह्यन्ते श्रुतौ प्रस्तोतुरद्रष्टृत्वात् । छन्दोगानां च तस्याप्युपस्थानं विहितम् ।

( १ ) अत्र षड्ऋत्विजो यजमानश्च प्रवर्ग्योपयुक्ताः, तत्र भाष्ये 'बहुवचनोपदेशाच्च सर्वेषामुपस्थानम्' इत्युक्त्वा 'तथा च षडुपतिष्ठन्त इति श्रुतिः' इत्यभिहितम् । तच्च प्रस्तोतृव्यतिरिक्ता यजमानषष्ठाः । प्रस्तोतुर्वेदेऽनाम्नानात् । ऋत्विजो वा न यजमानः, कर्मणि पुरुषाणामित्युक्तेः । यजमानविवक्षायां च सयजमाना इत्येवावोचत् । यथा सयजमाना धिष्ण्यानुपतिष्ठन्ते । यजमानषष्ठाः सोममिति । अतएव वाजि भक्षयन्तीत्यत्र घर्मर्त्विजो बहुवचनोपदेशादिति भाष्यम् । तथा च सर्वे निधनमुपयन्तीत्यत्र सर्वशब्दो निरवग्रहः सर्वर्त्विग्विषय इति व्याख्यातम् । अवमृशन्त्यृत्विजो यजमानश्चानाधृष्टमिति सर्वपदविषयमेवोपपादयति । सम्प्रदायेऽपि गर्भोदेवानामित्युपस्थानं षड्ऋत्विजामिति । हुतशेषं घर्मर्त्विजः सयजमानाः समुपहावं भक्षयन्ति ।

( २ ) "त्वष्टृमन्तस्त्वा०" ( वा० सं० ३७-२० ) अनेन महावीरमीक्षमाणामपनीतशिरोवस्त्रां घर्मं पश्यन्तीं अध्वर्युर्वाचयतीत्यर्थः ।

( ३ ) उपस्थानगानयोः समाप्तौ रौहिणहवन्या स्रुचा दक्षिणं रौहिणं पुरोडाशं सर्वहुतं "अहः केतुना०" ( वा० सं० ३७-२१ ) अनेन जुहोतीत्यर्थः । 'इदं घर्माय' इति त्यागः । इदमह इदं रात्र्या इति तु जीर्णः सम्प्रदायः । उत्तरं मन्त्रक्रमेण जुहोति 'स्वाहा रुद्राय रुद्रहूतये स्वाहा संज्योतिषा ज्योतिः' इत्येतन्मन्त्रकर्मणोऽनन्तरमित्यर्थः । 'सायम्' इति अपराह्णकालीने प्रवर्ग्यचरणे 'रात्रिः' इति द्वावपि रौहिणौ यथाकालं जुहोति ।

**(१)देवस्य त्वेति रज्जुसन्दानमादायेड एहीति गामाह्वयति नाम्ना च त्रिरुच्चैरपरेण गार्हपत्यं गच्छन् ॥ १ ॥**

"देवस्य त्वा" इत्यनेन मन्त्रेण रज्जुसन्दानमादाय घर्मधुग्बन्धनार्थाय पाशवती रज्जुः । तस्या एव पश्चात्पादनियोजनार्थं सन्दानं, तदादाय जघनेन गार्हपत्यं गच्छन् "इड ऽएहि" इति गामाह्वयति ॥ १ ॥

**नाम्ना त्रिरुच्चैराह्वानम् ॥ २ ॥**

**धेनु गोयेति प्रेष्यति ॥ ३ ॥**

प्रस्तोतारम् ॥ ३ ॥

**अदित्यै रास्नेति गां पाशेन प्रतिमुच्य स्थूणायां बद्ध्वा पूषासीति वत्समुत्सृजति(२) ॥ ४ ॥**

तदीयमेव ॥ ४ ॥

**सन्दाय घर्माय दीष्वेति वत्समुन्नयति ॥ ५ ॥**

सन्दाय पश्चात्पादयोर्नियुज्य "घर्माय दीष्वा" ( वा० सं० ३८–३ ) इत्यनेन मन्त्रेण वत्समुन्नयति(३) ॥ ५ ॥

**अश्विभ्यां पिन्वस्वेति पिन्वने दोग्धि(४) ॥६॥**

एनाङ्गाम् ॥ ६ ॥

**स्वाहेन्द्रवादिति विप्रुषोऽभिमन्त्रयते(५) ॥७॥**

ये पिन्वने पतिताः ऋजुः ॥ ७ ॥

---

( १ ) अध्वर्युः "देवस्य त्वा" ( वा० सं० ३८–१ ) इति रज्जुसन्दानमादाय गार्हपत्यस्य पश्चाद्गच्छन् "इड ऽएहि०" ( वा० सं० ३८–२ ) वाक्यत्रयेण घर्मदुघां गामाह्वयति 'असावेहि' इति गोर्व्यावहारिकनाम्ना चोच्चैस्त्रिवारमाह्वयतीति सूत्रद्वयार्थः ।

( २ ) तामागतां गां "अदित्यैरास्ना०" ( वा० सं० ३८–३ ) इति पाशेन प्रतिमुच्य तस्याः शृङ्गयोः रज्जुपाशं प्रोतयित्वा "पूषासि" ( वा० सं० ३८–३ ) इति वत्सं मुञ्चतीत्यर्थः ।

( ३ ) स्तनेभ्यः पृथक्करोतीत्यर्थः ।

( ४ ) पिन्वने पात्रे "अश्विभ्यां पिन्वस्व०" ( वा० सं० ३८–४ ) इति प्रतिमन्त्रं गां दोग्धीत्यर्थः ।

( ५ ) पिन्वनपतितान्पयःकणान् "स्वाहेन्द्रवत्०" ( वा० सं० ३८–४ ) इत्यनेन अभिमन्त्रयत इत्यर्थः ।

यस्ते स्तन इति (१)स्तनमालभते ॥ ८ ॥

काण्वपाठे 'स्तनानालभत' इति । तथा च सर्वेषामालम्भो युगपच्छक्यत्वात् ॥ ८ ॥

एवं प्रतिप्रस्थाताऽजां (२)मयूखे तूष्णीम् ॥९॥

दोग्धि ॥ ९ ॥

पयो गायेति प्रेष्यति ॥ १० ॥

प्रस्तोतारम् ॥ १० ॥

उत्तिष्ठ ब्रह्मणस्पत इत्युच्यमाने उपोत्तिष्ठति ॥ ११ ॥

"उत्तिष्ठ ब्रह्मणस्पत" ( वा० सं० ३४-५६ ) इत्यस्मिन्मन्त्रवाक्ये होत्रोच्यमाने उत्तिष्ठत्यध्वर्युः(३) ॥ ११ ॥

उपद्रव पयसेत्युच्यमाने (४)गच्छत्युर्वन्तरिक्षमिति ॥१२॥

होत्रोपद्रव पयसेत्युच्यमाने विमितं प्रति गच्छति "उर्वन्तरिक्षम्" ( वा० सं० ३८-५ ) इति ॥ १२ ॥

परीशासावादत्ते गायत्रं छन्दोऽसीति प्रतिमन्त्रम्(५)॥१३॥

ऋजुः ॥ १३ ॥

वसिष्ठशफौ गायेति प्रेष्यति ॥ १४ ॥

प्रस्तोतारम् ॥ १४ ॥

ताभ्यां महावीरं (६)प्रतिगृह्णाति द्यावापृथिवीभ्यां त्वा परिगृह्णामीति(७) ॥ १५ ॥

'ताभ्याम्' इति परीशासावुच्येते ॥ १५ ॥

---

( १ ) "यस्ते स्तनः०" ( वा० सं० ३८-५ ) इत्यनेन गोस्तनमालभते । जातावेकवचनम् ।

( २ ) कीलके बध्नाति ।

( ३ ) गोः समीपादुत्तिष्ठति ।

( ४ ) अध्वर्युः प्रतिप्रस्थाता च गोः समीपाद्गार्हपत्यं प्रति गच्छत इत्यर्थः ।

( ५ ) "गायत्रं छन्दः०" ( वा० सं० ३८-६ ) इति मन्त्राभ्यां परीशासौ गृह्णातीति सूत्रार्थः ।

( ६ ) 'परिगृह्णाति' इ० पा० ।

( ७ ) ताभ्यां परीशासाभ्यां "द्यावापृथिवीभ्यां त्वा०" ( वा० सं० ३८-६ ) इत्यनेन महावीरमादत्त इत्यर्थः ।

**उद्यम्य मुञ्जवेदेनोपमृज्योपयमन्योपगृह्णात्यन्त-रिक्षेणोपयच्छामीति ॥ १६ ॥**

उद्यम्योत्क्षिप्य परीशासाभ्यां महावीरं मुञ्जवेदेनोपमृज्य उपयमन्या(१) स्रुचोपगृह्णाति "अन्तरिक्षेणोप यच्छामि" ( वा० सं० ३८-६ ) इति ॥ १६ ॥

**अजापयसावासिच्य (२)शान्ते गोः पयोऽवनयती-न्द्राश्विनेति ॥ १७ ॥**

अजापयसावासिच्य महावीरं शान्ते गोः पयोऽवनयति "इन्द्राश्विना" ( वा० सं० ३८ ६ ) इत्यनेन मन्त्रेण ॥ १७ ॥

**प्रैतु ब्रह्मणस्पतिरित्युच्यमाने-**

इति षड्विंशेऽध्याये पञ्चमी कण्डिका।

---

**समुद्राय त्वेति वातनामानि जपति गच्छन्नाहवनीयम्॥१॥**

होत्रा "प्रैतु ब्रह्मणस्पतिः" ( वा० सं० ३७-७ ) इत्यादिमन्मन्त्रवाक्ये उच्यमाने "समुद्राय त्वा"(३) इति जपति गच्छन्नाहवनीयम् ॥१॥

**(४)स्वाहा घर्मायेत्युपयमन्यासिञ्चति घर्मे ॥ २ ॥**

यदुपयमन्यां पतितं पयो घृतं वा, घर्मे तदासिञ्चति ॥ २ ॥

**(५)स्वाहा घर्मः पित्र इति जपित्वाऽतिक्रम्याश्राव्याह घर्मस्य यजेति ॥ ३ ॥**

प्रेष्यति ॥ ३ ॥

---

( १ ) उपयमनीं स्रुचं महावीरस्याधस्तात्प्रवेश्योपगृह्णातीत्यर्थः।

( २ ) क्षीणज्वाले।

( ३ ) 'प्रैतु०' इति होत्रोच्यमाने आहवनीयं प्रति गच्छन्नध्वर्युः "समुद्राय त्वा०" ( वा० सं० ३८-७ ) इत्यादीनि द्वादश वातनामानि स्वरेण जपतीति सूत्रार्थः।

( ४ ) उपयमन्या स्रुचा स्रुकस्थं घृतं घर्मे सिञ्चति "स्वाहा घर्माय" ( वा० सं० ३८-९ ) अनेन मन्त्रेणेत्यर्थः।

( ५ ) अपसव्येन दक्षिणास्यः सन् "स्वाहा घर्मः पित्र" ( वा० सं० ३८-९) इति मन्त्रं स्वरेण जपित्वा सव्येन जलं स्पृष्ट्वा घर्महस्तोऽतिक्रम्याश्राव्य 'घर्मस्य यज' इत्याहेत्यर्थः।

वषट्कृते जुहोति विश्वा आशा इति(१) ॥ ४ ॥

(२)दिविधा इति त्रिरुत्कम्पयाति ॥ ५ ॥

महावीरम् ॥ ५ ॥

(३)स्वाहाऽग्नय इत्यनुवषट्कृते ॥ ६ ॥

जुहोति ॥ ६ ॥

(४)अश्विना घर्ममिति ब्रह्मानुमन्त्रयते ॥ ७ ॥

(५)हुतं द्रव्यम् ॥ ७ ॥

(६)अपातामिति यजमानः ॥ ८ ॥

तदेवानुमन्त्रयते ॥ ८ ॥

(७)इषे पिन्वस्वेति पिन्वमानमनुमन्त्रयते ॥ ९ ॥

तदेव द्रव्यम् ॥ ९ ॥

घर्मासीत्युत्क्रामत्युत्तरपूर्वार्धम् ॥ १० ॥

"घर्मासि" ( वा० सं० ३८-१४ ) इत्यनेन मन्त्रेण उत्तरपूर्वार्धमुत्क्रामति(८) ॥ १० ॥

---

( १ ) वषट्कृते सति घर्मं जुहोति "विश्वा ऽआशा०" ( वा० सं० ३८-१० ) इत्यनेनेति ।

( २ ) महावीरं त्रिरूर्ध्वं कम्पयति 'दिविधा०' ( वा० सं० ३८-११ ) इति सकृन्मन्त्रेण द्विस्तूष्णीमिति ।

( ३ ) "स्वाहाग्नये यज्ञियाय शं यजुर्भ्यः" इति मन्त्रेण घर्मं जुहोतीत्यर्थः ।

( ४ ) "अश्विना घर्मम्०" ( वा० सं० ३८-१२ ) इत्यनेन ब्रह्मा घर्ममभिमन्त्रयते ।

( ५ ) हुतं द्रव्यमिति कर्कः । पात्रस्थमित्यन्ये । उभयमप्येतत्समूलम् । शाखान्तरात् । अतश्चेच्छयानुष्ठानम् ।

( ६ ) "अपातामश्विना०" इत्यनेन यजमानः घर्ममभिमन्त्रयते । घर्मं पात्रस्थमेव ।

( ७ ) "इषे पिन्वस्व०" ( वा०सं० ३८-१४ ) इत्यनेन पिन्वमानमिति अतितप्तत्वात्पात्रमध्ये सर्वतः प्रसरन्तमुत्कलन्तमितस्तत उच्छलन्तमनुमन्त्रयते इत्यर्थः । अत्र च निःसन्दिग्धं घर्मस्थस्यैव द्रव्यस्याभिमन्त्रणं शाखान्तरेऽपि तथैव दर्शनात् । एवञ्च पूर्वत्र ब्रह्मानुमन्त्रणमपि पात्रस्थस्यैव द्रव्यस्य न तु हुतस्येति ।

( ८ ) अध्वर्युः ऐशानीं दिशं प्रति उद्गच्छतीत्यर्थः ।

(१)अमेन्यस्मे इति खरे करोति ॥ ११ ॥

महावीरम् ॥ ११ ॥

विकङ्कतशकलैर्जुहोति घर्मं न्यज्य न्यज्य स्वाहा पूष्णे शरस इति प्रतिमन्त्रम् ॥ १२ ॥

विकङ्कतशकलैर्घर्मद्रव्ये न्यक्त्वा न्यक्त्वा तदेव जुहोति "स्वाहा पूष्णे शरसे" ( वा० सं० ३८-१५ ) इति प्रतिमन्त्रम् ॥ १२ ॥

हुत्वा हुत्वा (२)प्रथमपरिधा उपश्रयति ॥ १३ ॥

विकङ्कतशकलान् ॥ १३ ॥

चतुर्थमहुतमुदङ्ङीक्षमाणो दक्षिणतो बर्हिष्युपगूहति(३) ॥ १४ ॥

शकलम् ॥ १४ ॥

सप्तमं च (४)सर्वलेपाक्तं दक्षिणेच्चमाणः प्रतिप्रस्थात्रे प्रयच्छति ॥ १५ ॥

(५)'सर्वलेपाक्तम्' इति सर्वमभ्युक्तम् । चशब्दादहुतम् ॥ १५ ॥

तं स उत्तरतः शालाया उदञ्चं निरस्यति ॥ १६ ॥

तमेव शकलम् ॥ १६ ॥

स्वाहा सं ज्योतिषेत्युपयमन्यामासिञ्चति घर्म्यम्(६)॥१७॥

'घर्म्य'शब्देन द्रव्यमुच्यते ॥ १७ ॥

(७)रौहिणं जुहोति ॥ १८ ॥

---

( १ ) "अमेन्यस्मे" ( वा० सं० ३८-१४ ) इति महावीरं खरे आसादयतीत्यर्थः । आहवनीयस्योत्तरतः परीशासगृहीतमेव स्थापयति ।

( २ ) 'प्रथमे' इ० पा० ।

( ३ ) वेदेर्दक्षिणभागे आतिथ्याबर्हिषि प्रवेशयति ।

( ४ ) सर्वमपि मूलाग्रपर्यन्तं महावीरस्थघृतलेपेनाक्तम् ।

( ५ ) वस्तुतस्तु सर्वे च ते लेपास्तैरक्तं महावीरोपयमन्याग्न्यस्थालीस्थः लेपैरक्तम् । अतएवोत्तरसूत्रे घर्म्यमिति विशेषोपादानम् ।

( ६ ) घर्म्यं घर्मसम्बन्धि तन्मध्यस्थितमाज्यमुपयमन्यां स्रुचि आसिञ्चति । परीशासाभ्यां घर्ममुत्पाद्य स्रुक्पुष्करस्योपर्यधोमुखं करोति "स्वाहा सं ज्योतिषा ज्योतिः" ( वा० सं० ३८-१६ ) अनेन मन्त्रेण ।

( ७ ) "अहः केतुना०" ( वा० सं० ३७-१ ) इत्यनेन प्रातः काले, "रात्रिः केतुना०" ( वा०सं० ३७-१ ) इत्यनेन सायं च रौहिणं जुहोति ।

द्वितीयम् ॥ १८ ॥

उपाश्रितानि च प्रहरति(१) ॥ १९ ॥

उपाश्रितानि यानि शकलानि तानि प्रहरति । चशब्दादनन्तरमेव ॥१९॥

अग्निहोत्रावृता हुत्वा वाजिनवद्भक्षयन्ति मधु हुतमिति(२) ॥ २० ॥

अनेन मन्त्रेण । घर्मर्त्विजो बहुवचनोपदेशात् । आवृच्छब्देन च होममात्रावृदुच्यते । द्रव्यप्रधानत्वादुपदेशस्य । तत्रापि केचिदेकामेवाहुतिमिच्छन्ति । आहुतिद्वयमित्यपरे । 'वाजिनवत्' इति च समुपहावं भक्षणम् ॥ २० ॥

उच्छिष्टखरे प्रक्षाल्योपयमनीं निदधाति अत्र वोपश्रितप्रहरणः संसाद्यमानायानुवाचयति(३) ॥ २१ ॥

संसाद्यमानायानुब्रूहीत्येवम् ॥ २१ ॥

(४)संसाद्यमानेभ्य इत्येके ॥ २२ ॥

अनुवाचनं कारयन्ति । स चायं विकल्पः । शाखस्य तुल्यत्वात् ॥२२॥

सूयवसाद्भगवतीत्युच्यमाने (५)यवसोदके धेनवे प्रयच्छन्त्येके ॥ २३ ॥

एके न प्रयच्छन्ति ॥ २३ ॥

सर्वमासन्द्यां करोति ॥ २४ ॥

पात्रजातम् अनाशाय ॥ २४ ॥

अभीममिति महावीरम् ॥ २५ ॥

---

(१) मध्यमपरिधौ निहितानि पञ्च वैकङ्कतशकलानि शाखान्तरादत्रावसरे आहवनीये प्रहरति ।

(२) उपयमन्यामानीतं घर्माज्यमग्निहोत्रहोमप्रकारेण समन्त्रकं हुत्वा वाजिनवदुपहवप्रार्थनपूर्वकं "मधु हुतम्०" ( वा० सं० ३८–१६ ) अनेन भक्षयन्ति होत्रध्वर्युब्रह्मप्रस्तोतृप्रतिप्रस्थात्रग्नीद्यजमानाः । श्रुतौ "अथ यजमानाय घर्मोच्छिष्टं प्रयच्छति । स उपहवमिष्ट्वा भक्षयति मधु हुतम्" ( श० ब्रा० १४–२–२–४२ ) इति । अतएव होमस्यान्तरायेऽनभ्यावृत्तिः ।

(३) अध्वर्युः संसाद्यमानाय महावीरायानुवाचनं कारयति होत्रा ।

(४) महावीरादिसर्वपात्रेभ्य इत्यर्थः ।

(५) तृणोदके ।

(१)आसन्द्यां करोति ॥ २५ ॥

**(२)सकृदासादनप्रोक्षणे खरस्थूणामयूखकृष्णाजि-नाभ्युपशयासन्दीनाम् ॥ २६ ॥**

आरादुपकारकत्वात् ॥ २६ ॥

**आवृत्तिर्वा प्रधानकालत्वात् ॥ २७ ॥**

अथवा आवृत्तिर्भवति न सकृदासादनादि । कुत एतत् ? प्रधान-कालीनमासादनं प्रोक्षणं च । '(३)प्रधानावृत्त्या च तदावृत्तिर्न्याय्या' इति ॥ २७ ॥

इति षड्विंशेऽध्याये षष्ठी कण्डिका ।

---

**उपसदन्ते प्रवर्ग्योत्सादनम्(४) ॥ १ ॥**

'कर्त्तव्यम्' इति सूत्रशेषः ॥ १ ॥

**अन्तःपात्ये परिधर्म्यं निधाय दक्षिणेन निर्हृत्योच्छिष्टखरम् ॥ २ ॥**

(५)निदधाति ॥ २ ॥

---

(१) "अभीमम्०" (वा० सं० ३८-१७) इत्यनेन प्रचरणीयं घर्म-मासन्द्यां करोति । इतराणि तु पात्राणि तूष्णीम् । ततः शान्तिकरणं द्वारकर्तनं च ।

(२) सकृदेकवारमेव प्रथमे प्रवर्ग्याचरण एव भवतो न प्रतिप्रवर्ग्य-चरणम् । खरार्थानां सिकतानामिति देवयाज्ञिकाः ।

(३) द्रव्यसंस्कारकत्वात्ते सन्निपत्योपकारके ।
कथं भाष्ये तयोरारादुपकारकतोच्यते ॥
दृष्टार्थसादनं तत्राद्दृष्टार्थं प्रोक्षणं मतम् ।
अतः कैमुतिकन्यायान्नेयं भाष्यं न तत्त्वतः ॥
अन्यत्राप्यग्निहोत्रादौ यच्चारादुपकारकम् ।
तदप्यावर्तते यस्मात् किमु वाच्यं त्र संस्कृतौ ॥

(४) उपसत्समाप्तौ ( का० श्रौ० ८-३-१८ ) प्रवर्ग्योत्सादनं भवति । "स वै तृतीयेहन् षष्ठे वा द्वादशे वा प्रवर्ग्योपसदौ समस्य प्रवर्ग्यमुत्सादयति" ( श० ब्रा० १४-३-१-१ ) इति श्रुतेः ।

(५) शालामध्याद्दक्षिणेन द्वारेण निष्काश्य अन्तःपात्यसमीपे आसादितपात्रेभ्यो दक्षिणमेव निदधातीति देवयाज्ञिकाः ।

(१)आहवनीये त्रींश्छालाकान् प्रदीप्य प्रदीप्याग्नीध्रो धारयति शतरुद्रियवत्प्रातिलोमं प्रमाणेषु चतुर्गृहीतेनाभिजुहोति या ते घर्मदिव्याशुगिति प्रतिमन्त्रम् ॥३॥

अध्वर्युः । यत्तु—धारयमाणो जुहोतीति । तद्धार्यमाणे द्रष्टव्यम् ॥३॥

प्रास्य तृतीयमुपविश्य ॥ ४ ॥

(२)जुहोति ॥ ४ ॥

क्षत्रस्य त्वेति निष्क्रमणं पुरस्तात्पत्नीमन्तर्धाय(३) ॥५॥

"क्षत्रस्य त्वा" ( वा० सं० ३८-१९ ) इत्यनेन मन्त्रेण निष्क्रमणं पत्नीमग्रतः कृत्वा ॥ ५ ॥

साम प्रेष्यत्यवभृथवद्देशाः(४) ॥ ६ ॥

प्रतिपत्तव्याः ॥ ६ ॥

---

( १ ) यजमानसक्थेषु मुखमात्रनाभिमात्रजानुमात्रप्रमाणेषु ( का० श्रौ० १८-१-२,४ ) तान्प्रदीप्तान् शालाकान्धारयति । अध्वर्युराज्यं संस्कृत्य चतुर्गृहीतं कृत्वा तेन जुहोति । अग्नीधा ध्रियमाणेषु त्रिषु शलाकात्रिकेषु "या ते घर्म०" (वा० सं० ३८-१८) इति त्रिभिर्मन्त्रैस्तृतीयेनोपविश्येत्यर्थः । शलाकानां समूहः शालाकः तेन तिसृभिः शलाकाभिः एकः शालाको भवति । एवंविधान् त्रीन् शालाकान्हस्ते गृहीत्वा तेषां मध्ये एकं शालाकं शालाद्वार्ये प्रदीप्याग्नीध्रो मुखमात्रे आहवनीयस्योपरि धारयति अध्वर्युश्चतुर्गृहीततृतीयांशं तस्मिञ्छालाके प्रदीप्ते जुहोति । ततस्तं शालाकमाहवनीयमध्य एव प्रक्षिपति । ततो द्वितीयं शालाकं प्रदीप्याग्नीध्रो यजमानस्य नाभिदघ्ने आहवनीयस्योपरि धारयति अध्वर्युस्तथैव जुहोति । तत आग्नीध्रस्तं शालाकमाहवनीये प्रक्षिपतीति देवयाज्ञिकभाष्ये स्पष्टम् ।

( २ ) तृतीयं शालाकमग्नीधा प्रदीप्य जानुमात्रे धृतमध्वर्युराहवनीये प्रास्य प्रक्षिप्य तत उपविश्य सर्वं चतुर्गृहीतं शेषं जुहोति । अत्रोपवेशनविधानात्पूर्वौ होमौ तिष्ठता कर्तव्याविति देवयाज्ञिकाः ।

( ३ ) होमानन्तरमध्वर्युः पुरस्तादग्रे पत्नीमन्तर्धाय कृत्वा शालाया निष्क्रमणं करोति । पत्न्यन्तर्धानं शालान्तरादिति देवयाज्ञिकाः ।

( ४ ) ततोऽध्वर्युः प्रस्तोतारं प्रति साम प्रेष्यति । कथम् ? अवभृथवत् । यथावभृथे प्रेषणमुक्तं 'गाय' 'ब्रूहि' इति वा (का०श्रौ०१०-८-१८) तथात्रापीति सामगानदेशाः अवभृथवद्भवन्ति ।

निधनं च(१) ॥ ७ ॥

अवभृथवदेव ॥ ७ ॥

उत्सादनदेशं गच्छन्त्यनग्ना उत्तरवेदिम्(२) ॥ ८ ॥

अग्नौ तूक्तमेव ॥ ८ ॥

त्रिः परिषिच्याचिक्रददिति(३) ॥ ९ ॥

तामेवोत्तरवेदिम् ॥ ९ ॥

मन्त्रक्रमेण वा ॥ १० ॥

(४)परिषेचनं भवति। वाशब्दो विकल्पार्थः ॥ १० ॥

नाभिस्पृशं प्रवृञ्जनीयं निदधाति चतुःस्रक्तिरिति ॥ ११ ॥

(५)अनेन मन्त्रेण ॥ ११ ॥

प्राञ्चावितरौ(६) ॥ १२ ॥

मन्त्रावृत्या महावीरौ ॥ १२ ॥

उपशयां च तूष्णीम्(७) ॥ १३ ॥

---

(१) अवभृथवत् सर्वे निधनमुपयन्ति इत्यर्थः।

(२) सामगानानन्तरमुत्सादनदेशं प्रति सर्वे गच्छन्ति। उत्सादनं महावीरादीनां परित्यागः स यत्र देशे विहितः श्रुतौ "तं वै परिष्यन्द उत्सादयेत्" (श०ब्रा०१४-३-१-१४) इति। अनग्नौ अग्निरहिते अनग्निचित्ये यज्ञे उत्तरवेदिं प्रति गच्छन्ति 'उत्तरवेदौ त्वेवोत्सादयेत्०" (श० ब्रा० १४-३-१-१५)। इति श्रुतेः अग्नौ तु प्रागुक्तमेव-अग्नौ परिष्यन्दे वेति। परिष्यन्दो द्वीपः जलपरिवृतो निर्जलो देश इति।

(३) सामगानानन्तरमुत्सादनदेशे परिषिच्य "अचिक्रदत्०" (वा० सं० ३८-२२) इत्यनेन मन्त्रेण वक्ष्यमाणं करोतीत्यर्थः।

(४) परिषिञ्चति नेदानीम्। स्वश्रुतौ (श० ब्रा० १४-३-१-२५) तत्रैव विधानात् तमवसरं स्वयमेव वक्ष्यति (का० श्रौ० २६-७-२६) सूत्रकारः।

(५) अध्वर्युः प्रवृञ्जनीयं महावीरमुत्तरवेदौ नाभिलग्नं "चतुः स्रक्तिः०" (वा०सं० ३८-२०) इत्यनेन स्थापयतीत्यर्थः।

(६) पूर्वासादितान्महावीरात्प्राच्यां प्राक्संस्थौ च निदधाति।

(७) महावीरघटनावसरे परिशेषितां मृदं 'च' कारान्महावीरेभ्यः प्राच्यां पुरस्तात्तूष्णीं निदधाति। अत्र तूष्णीमिति यस्मादितरौ महावीरावपि "चतुः स्रक्तिः०" इति मन्त्रेणासादयेदिति लभ्यत इति देवयाज्ञिकाः।

'च' शब्दान्निदधाति ॥ १३ ॥

परीशासावभितः ॥ १४ ॥

स्थापयति ॥ १४ ॥

(१)रौहिणहवन्यौ चावकृष्टे बाह्ये ॥ १५ ॥

'च' शब्दान्निदधाति ॥ १५ ॥

अग्निमुत्तरत आसन्दीं दक्षिणतः कृष्णाजिनमुत्तरतः सर्वतो धवित्राणि परिधींश्च रज्जुसन्दानं वेदमुपयमन्यामाधाय पश्चात्(२) ॥ १६ ॥

प्राचीं निदधाति ॥ १६ ॥

पश्चात्पिन्वने चाभितो दण्डम्(३) ॥ १७ ॥

दण्डमभितः पश्चाद्भागे पिन्वने निदधाति ॥ १७ ॥

(४)स्थूणामयूखम् ॥ १८ ॥

पश्चात् । ऊरु संस्तवात् ॥ १८ ॥

(५)पश्चाद्रौहिणकपाले ॥ १९ ॥

जानुसंस्तवात् तयोरेव ॥ १९ ॥

धृष्टी च(६) ॥ २० ॥

---

(१) रौहिणहवन्यौ स्रुचौ 'च'कारादभितश्चासादयति इत्यनुषज्येत । परीशासाभ्यां बहिःप्रदेशे अवकृष्टे च परीशासापेक्षया नीचे किञ्चित्पश्चादपसृप्त इत्यर्थः ।

(२) रौहिणहवन्योरुत्तरतः । तयोरेव दक्षिणतः सम्राडासन्दीम् अग्नेरुत्तरतः कृष्णाजिनमासादयति। आसादितपात्राणि सर्वतोधवित्राणि आसादयति, दक्षिणतः पश्चादुत्तरतश्चैकैकम् । परिधीनपि 'च'कारादासादितापेक्षया सर्वत आसादयति धवित्रवत् शाखान्तरात् । आसादितपात्रगणस्य पश्चादुपयमनीं स्रुचं प्रागग्रां सादयति रज्जुसन्दानं वेदं च तस्यामाधाय तन्मध्ये कृत्वासादयतीत्यर्थः ।

(३) पिन्वने च 'च'कारात्पश्चात् उपयमनीपुष्करस्य पश्चात्तस्या दण्डमभितो दक्षिणोत्तरे आसादयतीति देवयाज्ञिकाः ।

(४) पिन्वनयोः पश्चात् दक्षिणतः स्थूणाम् उत्तरतो मयूखम् । "अथैतद्रज्जुसन्दानम्०" ( श० ब्रा० १४-३-१-२२ ) इत्यादिश्रुतेरित्यर्थः ।

(५) स्थूणामयूखयोः पश्चात् रौहिणकपाले ।

(६) रौहिणकपालयोः पश्चाद् धृष्टी उपवेषौ ।

'च' शब्दात्तयोरेव पश्चात् पादसंस्तुतेः ॥ २० ॥

(१)मध्येऽन्यत् ॥ २१ ॥

घर्मोपयुक्तम् ॥ २१ ॥

खरा उत्तरतो दक्षिणतो मार्जालीयदेशं बहि-
र्वेद्युच्छिष्टखरम्(२) ॥ २२ ॥

'निदधाति' इत्यनुवर्त्तते ॥ २२ ॥

आसेचनवन्ति पयसः पूरयति घर्मैतत्त इति ॥२३॥

(३)अनेन मन्त्रेण आसेचनवन्ति भवन्ति ॥ २३ ॥

शेषं व्रतमिश्रं दीक्षिताय प्रयच्छति ॥ २४ ॥

पयः ॥ २४ ॥

प्रत्तं चेत्केवलम्(४) ॥ २५ ॥

प्रत्तं चेद्व्रतं केवलमेव प्रयच्छति ॥ २५ ॥

अत्र वा परिषेचनम्(५) ॥ २६ ॥

उत्तरवेदेः कार्यम् ॥ २६ ॥

वार्षाहरेष्टाहोत्रीये सामनी गायेति (६)प्रेष्यति ॥२७॥

---

( १ ) स्रुव, मौञ्ज, कूर्चादिसादितपात्राणां मध्ये आसादयति ।

( २ ) सर्वपात्राणामुत्तरतः प्रचरणीयौ खरावासादयति । मार्जालीयधिष्ण्यस्थानस्य दक्षिणतो वेदेर्बहिर्भागे उच्छिखरमासादयतीति देव याज्ञिकाः ।

( ३ ) आसेचनवन्ति गर्तयुक्तानि पात्राणि पयसः दुग्धेन तृतीयार्थे षष्ठी । "घर्मैतत्ते०" (वा०सं० ३८–२१) इति मन्त्रेण पूरयति । महावीरत्रयं, द्वे पिन्वने, उपयमनी स्रुवश्च सप्त आसेचनवन्ति पात्राणि । प्रत्येकं पूरणे मन्त्रप्रयोगः ।

( ४ ) साग्निके सोमे व्रतं प्रागेव "सर्वं वाऽग्नौ" ( का० श्रौ० ८–३–१७ ) इति सूत्रानुसारेण सकलं प्रत्तं दत्तं चेत् तदा केवलं प्रवर्ग्योत्सादनपयःशेषं यजमानाय प्रयच्छति व्रतकाल एवेति देवयाज्ञिकाः ।

( ५ ) "मन्त्रक्रमेण वा" ( का० श्रौ० २६–७–१० ) इति यत्प्रागुक्तं तस्यायमवसरः । "अथैनमद्भिः परिषिञ्चति०" (श०ब्रा० १४–३–१–२५) इत्यादि श्रुतौ पाठात् । मन्त्रपाठक्रमेणाप्यत्रैव परिषेचनं भवति । तस्मात् 'वा' शब्दोऽवधारणे अत्रैव परिषेचनं कर्तव्यमिति ।

( ६ ) एकदैव प्रैषोच्चारणमिति सम्प्रदायः । अध्वर्युः प्रस्तोतारं प्रे-

(१)चात्वाले मार्जयन्ते सपत्नीकाः सुमित्रिया न इति, (२)उद्वयमित्युक्रामत्युत्तरपूर्वार्धमनपेक्षमेत्यैधोऽसीति समिधमादायाहवनीयेऽभ्यादधाति समिदसीति(३), पत्नी च गार्हपत्ये तूष्णीम्(४), प्रवृञ्जनीयौ श(५)तमानौ ब्रह्मणे ददाति ॥ २८ ॥

घर्मदुघामध्वर्यवे यजमान(६)व्रतदुघाꣳ होत्रे पत्न्या (७)उद्गात्रेऽग्नीधेऽजाम्(८) ॥२९॥

ददातीति सर्वत्रानुवर्त्तते ॥ २९ ॥

---

ष्यति । यद्यप्यत्र सूत्रे तन्त्रेण प्रैष उक्तः तथापि प्रैषप्रैषार्थयोरानन्तर्यानुग्रहाय भेदेनैव देयः—'वार्षाहरं साम गाय' इति, तद्गानानन्तरम् 'इष्टाहोत्रीयं साम गाय' इति च ।

( १ ) अथ ऋत्विक्पत्नीयजमानाः चात्वाले मार्जयन्ते—"सुमित्रिया न ऽआप ओषधयः सन्तु" (वा० सं० ३८-२३) इत्यञ्जलिनाऽप उपाददति-वज्रो वा आपो वज्रेणैवैतन्मित्रधेयं कुरुते "दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्म" इति यामस्य दिशं द्वेषः स्यात् तां दिशं परासिञ्चेयुः तेनैवैनं पराभावयन्तीति सौत्रामणीसमानायां श्रुतौ सूत्रकृता तत्रोपनिबन्धनादिहोपेक्षितम् । पत्न्या अपि मार्जनमन्त्रपाठो भवत्येव क्वचित्तूष्णीमिति यत्तदर्शनात् ।

( २ ) "उद्वयम्०" ( वा० सं० ३८-२४ ) इत्यनेन ऐशानीं दिशं प्रति यजमानो गच्छतीत्यर्थः ।

( ३ ) यजमानः पश्चादनवलोकयन्नीशानदेशादेत्य "एधोऽस्येधिषीमहि" इति मन्त्रेणैकां प्रादेशमात्रीं समिधं गृहीत्वा "समिदसि०" (वा०सं० ३८-२५) इति मन्त्रेणाहवनीये दधातीत्यर्थः ।

( ४ ) शाखान्तरात् ।

( ५ ) रजतसुवर्णमयौ यजमानो ददातीत्यर्थः ।

( ६ ) 'स्वव्रतदुघाम्' इति सिद्धे यजमानग्रहणं ( श०ब्रा०१४-३-१-३४ ) श्रुत्यनुकरणमात्रम् ।

( ७ ) पत्न्या व्रतदुघाम् । यद्यपि 'उद्गात्रे' इति सूत्रे एकवचनं तथापि त्रिभ्यो दानम् । "अथ यैषा पत्न्यै व्रतदुघा तामुद्गातृभ्यो ददाति" ( श०ब्रा०१४-३-१-३५ ) इति श्रवणात् ।

( ८ ) शाखान्तरात् ।

(१)घर्मभेदे यथोक्तम्(२) ॥ ३० ॥

किं तदुक्तम् ? "पुनरिति च घर्म्यम्"इति । एतच्चाभिधीयते विशेषणार्थम् ? ॥ ३० ॥

तच्चाह—

उच्चावचान्यं कुर्यात्(३) ॥ ३१ ॥

उच्चावच्चेति मन्त्ररहिताक्रिया । अत्रापि हि श्रूयते—"आवृता करोत्यावृता पचति" (श० ब्रा० १४-३-२-२१) इति । पुनः करणे प्राप्ते च अन्यत्पुनरावृत्त्ग्रहणं मन्त्रनिवृत्त्यर्थम् । अयं चोत्सादनाय क्रियते ॥३१॥

अभिन्नेन चरेत्(४) ॥ ३२ ॥

तथा च श्रुतिः—"अथ य उपशययोर्दृढः स्यात्तेन प्रचरेत्" (श० ब्रा० १४-३-२-२१) इति ॥ ३२ ॥

स्वाहा प्राणेभ्यः साधिपतिकेभ्य इति पूर्णाहुतिमाद्यामुत्तमां च मनसः काममाकूतिमिति(५) ॥ ३३ ॥

'च'शब्दात्पूर्णाहुतिमेव । मध्ये सकृद् गृ(६)ह्णीयादिति ॥ ३३ ॥

---

( १ ) अथ घर्मभेदे प्रायश्चित्तमाह—

( २ ) घर्मस्य भेदे पाटने यथाप्रागुक्तं "पुनरिति च घर्म्यम्" (का०श्रौ०२५-५-, ३०) इति प्रायश्चित्तम् तद् भवतीति देवयाज्ञिकाः ।

( ३ ) प्रायश्चित्तहोमानन्तरं भग्नं महावीरमुपशयां च पिष्ट्वाऽन्यया मृदा सह संसृज्य तूष्णीं महावीरकरणमजापयसोऽवसेकान्तमुत्सादनार्थं कुर्यादिति देवयाज्ञिकाः ।

( ४ ) अभग्नेन इतरयोर्द्वितीयतृतीयमहावीरयोर्मध्ये अन्यतरेण दृढेन चरेत् प्रचरणं कुर्यात् नूतनं तूत्सादनार्थं निदध्यादिति देवयाज्ञिकाः ।

( ५ ) अध्वर्युः "भूमिर्भूमिम्०" "य ऋते चित्०" ( का० श्रौ० २५-५-२९, ३०) इति सूत्रोक्तमन्त्राभ्यां भग्नं घर्ममभिमृश्य 'परमेष्ठिने स्वाहा' इत्यादि चतुस्त्रिंशदाहुतीर्हुत्वा "स्वाहा प्राणेभ्यः"० ( वा० सं० ३९-१ ) इति मन्त्रेणाद्यां प्रथमां पूर्णाहुतिं जुहुयात् । "मनसः कामम्०" ( वा० सं० ३९-४ ) इति मन्त्रेण चोत्तमामन्तिमां पूर्णाहुतिं जुहुयात् । 'इदम् श्रियायै' इतित्यागः । अन्याश्च "पृथिव्यै स्वाहा" इत्याद्याः "श्रोत्राय स्वाहा" ( वा० सं० ३९-१, ३ ) इत्यन्ता मध्यवर्तिन्यो विंशतिराहुतयः सकृद्गृहीतैर्होतव्याः ।

( ६ ) 'गृहीतानि' इ० पा० ।

(१)प्रजापतिः संभ्रियमाण इति च यथाकालम्(२) ॥३४॥

होमः कर्त्तव्यः, यस्मिन्काले विनाशः ॥ ३४ ॥

सविता प्रथमेहन्निति च प्रत्यहम्(३) ॥ ३५ ॥

विनाशे होमः कर्त्तव्यः ॥ ३५ ॥

(४)अवकाश्यस्य प्रवृञ्ज्यात् ॥ ३६ ॥

"ज्ञातप्रियानूचानानवकाशयेत्" ( का० श्रौ० ९-७-१३ ) इति सूत्रितम् । तुल्यं हि ब्राह्मणमुभयत्र ॥ ३६ ॥

न प्रथमयज्ञे(५) ॥ ३७ ॥

अवकाश्यस्यापि प्रथमप्रयोगे न प्रवृञ्ज्यात् । तथा च श्रुतिः "तन्न प्रथमयज्ञे प्रवृञ्ज्यात्" (श० ब्रा० १४-२-२-४४) इति ॥ ३७ ॥

---

( १ ) ( वा० सं० ३९—५ )

( २ ) जुहोति । संभ्रियमाणाद्यवस्थायां महावीरभेदे 'प्रजापतये स्वाहा' इत्याद्याः यथाकालमाहुतयो होतव्या इत्यर्थः । तद्यथा–संभ्रियमाणो महावीरो यदि भिद्यते तदा प्रायश्चित्तहोमे प्रजापतिर्देवता 'प्रजापतये स्वाहा' इति प्रायश्चित्ताहुतिर्होतव्येत्यर्थः । निष्ठिताभिमर्शनादारभ्याजापयोऽवसेचनान्तं संभ्रियमाणः । एताः सकृद्गृहीतैराहुतय इति देवयाज्ञिकाः ।

( ३ ) "सविता प्रथमेऽहन्०" ( वा० सं० ३-९६ ) इत्येतद्विहिताप्येकैकाहुतिः प्रत्यहम् । 'च' काराज्जुहोति सकृद्गृहीतेनैव । प्रथमेऽहनि घर्मभेदे सविता प्रायश्चित्तदेवता एवमेव सर्ववाक्येषु योजना । तेन 'सवित्रे स्वाहा' इति आहुतिहोमः । एवं द्वितीयेऽहनि घर्मभेदे अग्निर्देवता 'अग्नये स्वाहा' इति, तृतीये 'वायवे स्वाहा', चतुर्थे 'आदित्याय०', पञ्चमे 'चन्द्राय०', षष्ठे 'ऋतवे०', सप्तमे 'मरुद्भ्य०:', अष्टमे 'बृहस्पतये०', नवमे 'मित्राय०', दशमे 'वरुणाय०', एकादशे 'इन्द्राय०', द्वादशे 'विश्वेभ्यो देवेभ्य' इति । उपसत्प्रवृद्धावेता एवाहुतयः पुनः पुनरादित आरभ्यावर्त्यन्ते ।

( ४ ) अथ प्रवर्ग्यस्याधिकारिण आह—

( ५ ) प्रथमयज्ञशब्देनाग्निष्टोमस्यातिरात्रस्य वा प्रथमः प्रयोगोऽभिधीयते । तत्र न प्रवृञ्ज्यात् प्रवर्ग्यं न कुर्यात् । विकल्पेन प्रथमयज्ञेऽपि प्रवर्ग्यो भवति ( का० श्रौ० ८-२-१४ ) । शाखान्तरात् प्रथमयज्ञेऽप्येक इति । तथा "अग्निष्टोमे प्रवृणक्तीति" तैत्तिरीयाणां वचनम् ।

(१)यावती द्यावापृथिवी इति दधिघर्मग्रहणं भपि त्यादिति भक्षणम् ॥ ३८ ॥

तद्धुतशेषस्य । "अथ प्रसुते दधिघर्मेण चरन्ति" ( श०ब्रा०१४-३-१-२९) इति । तत्रैतदुक्तम् ॥ ३८ ॥

त्विषः संवृगिति महाव्रतीये ॥३९॥

"त्विषः संवृग्" इत्येव भक्षणम्(२) ॥ ३९ ॥

(३)चात्वाले मार्जनम् ॥ ४० ॥

'कर्त्तव्यम्' इति सूत्रशेषः । तच्च पाणिनैव कर्त्तव्यम् । द्रव्यान्तरानुपदेशात् ॥ ४० ॥

(४)शान्तिकरणमाद्यन्तयोः ॥४१॥

'कर्त्तव्यम्' इति शेषः । स्मरन्ति हि—आदावन्ते च कर्मणः शान्ति-

---

( १ ) अथ सप्रवर्ग्ये क्रतौ दधिघर्मसम्बन्धिनीं कियतीमितिकर्तव्यतामाह—

"यावती द्यावापृथिवी०" ( वा० सं० ३८-२६ ) इत्यनेन सपवित्रायामग्निहोत्रहवण्यां दधिघर्मग्रहणं कुर्यात् । तच्च यथा कथञ्चित्स्थालीमुखेनैव स्रुचि निनयनम् 'अवद्यति' इत्यश्रवणात् । अत एवोपस्तरणा भिघारणे अपि न भवतः । "स आनीयमान आह होतर्वदस्व" ( श० ब्रा० १४-३-१-३० ) इत्यादिश्रवणाच्च स्रुचि निनयनमेव स्थालीमुखेन कर्तव्यमिति प्रतीयते । अतो नावदानधर्माः । भक्षणं हुतशेषस्य भक्षाधिकारिभिः कर्तव्यम् "अनुवषट्कृत आहरति" "स उपहवमिष्ट्वा भक्षयति" ( श० ब्रा० १४-३-१-३०, ३१ ) इति श्रवणात् । अत्र तु यजमानस्यैव भक्षणमुक्तम् । कात्यायनेन तु शाखान्तरात् "हुतशेषं घर्मत्विजः सयजमानाः समुपहावं भक्षयन्ति०" ( का० श्रौ० १०-१-२२ ) इति अन्येषामप्युक्तम् ।

( २ ) महाव्रतीयेऽहि "त्विषः संवृग" (वा०सं० ३८-२८) इतिमन्त्रेण दधिघर्मस्य हुतशेषस्य भक्षणमधिकारिभिः कर्तव्यमिति देवयाज्ञिकाः ।

( ३ ) भक्षणानन्तरं मार्जनम् । दधिघर्मस्य कियन्तः पदार्थाः प्रागुक्ताः "सप्रवर्ग्ये दधिघर्म" ( का० श्रौ० १०-१-१८ ) इत्यत्र, कियन्तश्चात्रेति ; तत्कस्माद्धेतोः सूत्रकार एव वेदेति देवयाज्ञिकाः ।

( ४ ) आदावन्ते प्रवर्ग्यस्य कर्मणः शान्तिकं स्मृतेः ।

अङ्गत्वेऽपि प्रवर्ग्यस्य (पराङ्गत्वेऽपि घर्मस्य) भवेत्स्वाध्यायदर्शनात् ॥

तत्र क्रियमाणमुत्तरार्थं भवतीत्येतदुत्तरप्रवर्ग्यार्थमुतोपसदाद्यर्थम् ।

करणम्'। (१)तत्प्रवर्ग्यापराङ्गभूते कथमिव भवति ॥ ४१ ॥
तदुच्यते—

(२)स्वाध्यायदर्शनात् ॥ ४२ ॥

अत्र भवति। इष्टं हि शान्तिकरणम्। "ऋचं वाचं प्रपद्ये" (३)इत्येवमादि तस्मादत्र भवति। एतच्च द्वारापिधानोत्तरकालात्पूर्वम्। (४)पूर्वमासन्द्यां करोतीत्यतः (५)प्रागन्त्यात्समाप्ते हि प्रवर्ग्ये पुनः क्रियते। तत्र क्रियमाणमुत्तरार्थं भवति, स्वाध्यायदर्शनादिति ॥ ४२॥

इति कात्यायनसूत्रभाष्ये उपाध्यायकर्ककृतौ
षड्विंशतितमोऽध्यायः समाप्तः।

---

तत्रोत्तरप्रवर्ग्यार्थत्वे तदादौ द्वाराऽपिधानोत्तरं पुनर्न स्यात्। अन्त्ये च प्रवर्ग्यानुष्ठाने···ऽत्र प्रवर्ग्याभावात् उत्तरं न स्यात्। प्रवर्ग्याङ्गत्वादुपसदाद्यर्थत्वमप्ययुक्तमेव।

······शान्तिकं तच्च निवृत्तेऽत्र प्रवर्ग्यके।
क्रियमाणं तदर्थं नो युक्तं स्यादुपसत्सु तत् ॥
युज्यते तेन भाष्योक्तमुत्तरार्थं सुयुक्तिजम्।

तथा च छन्दोगसूत्रे दर्शनम्—अहर्गणेष्वाहरा··· ह्ययेदुत्तरार्थाऽहरन्तिकीति

शान्तिराद्यन्तयोरुक्ता तावतैकान्ततो न हि।
अङ्गत्वं किन्त्वपेक्षायां सा निवृत्ताऽपवर्गतः ॥
उत्तरे तु प्रवर्ग्ये तद्विधानान्नैव······।
तेनोत्तरे प्रवर्ग्योऽपि पुरोऽन्ते शान्तिकं भवेत् ॥

(१) 'तत्प्रवर्ग्ये' इ० पा०।

(२) 'स्वाध्याय दर्शनात् स्वाध्याय दशनात्' इ० पा०।

(३) प्रवर्ग्यचरणस्यादौ अन्ते च "ऋचं वाचम्" (वा० सं० ३६-१) इत्यध्यायेन शान्तिकरणं कर्तव्यम्। कुत एतत्? स्वाध्याये मन्त्रपाठे अस्य शान्तिकरणस्य 'ऋचं वाचम्' इत्यध्यायस्य प्रवर्ग्यमन्त्राणामादौ दर्शनात्। अत एवोक्तम् (अनुक्रमे ४-५) 'आद्योऽध्यायः शान्त्यर्थो वैश्वदेव'इति। तच्च द्वारापिधानोत्तरकाल आदिमम्, पात्राणामासन्द्यामासादनानन्तरमन्तिममिति।

(४) 'सर्वमासन्द्याम्' इ० पा०। (५) 'प्रागन्त्यम्' इ० पा०।

# कात्यायनश्रौतसूत्रोत्तरभागस्थसूत्राणामकारादि

# अनुक्रमणिका ।

भ

## श

* इति *

---